THE

# CHOWKHAMBÂ SANSKRIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NOS, 164, 165, 166, & 183.

# वीरमित्रोदयः ।

पूजाप्रकाशः ।

महामहोपाध्यायश्रीमित्रमिश्रविरचितः ।

साहित्योपाध्यायविष्णुप्रसादशर्मणा संशोधितः ।

VÎRAMITRODAYA,

PUJA PRAKÂSA,

BY

MAHÂMAHOPÂDHYÂYA PANDITA MITRA MIŚRA.

EDITED BY

Vishnu Prashada Sarma.

*PUBLISHED AND SOLD BY THE SECRETARY,*

CHOWKHAMBÂ SANSKRIT BOOK-DEPOT.

BENARES.

AGENTS:- OTTO HARRASSOWITZ LEIPZIG:

PANDITA JYESHTHÂRAMA MUKUNDAJI BOMBAY:

PROBSTHAIN & CO., BOOKSELLERS, LONDON

*Printed by Jai Krishna Dasa Gupta,*

AT THE VIDYÂ VILÂSA PRESS

BENARES.

*1913.*

*Price Rupees four.*

# वीरमित्रोदयस्य पूजाप्रकाशः।

श्रीगणेशायनमः॥

## अथ देवतापूजा।

तत्र पूजानाम देवतोद्देशेन द्रव्यत्यागात्मकत्वाद्याग एव। तत्र यद्यपि केषांचिदावाहनादीनामयागात्मकत्वात् पूजात्वं न स्यात्। नच तेषां पूजात्वं नास्त्येवेति वाच्यम्। षोडशस्वप्युपचारेषु शास्त्रकाराणां पूजाशब्दप्रयोगात्। तथापि यागायागसमुदाये पूजाशब्दो गौरवितप्रीतिहेतुक्रियात्वेनोपाधिना रूढ एव। यथा इष्टिपशुसोमसमुदाये राजसूयशब्दः। यद्यपि ईश्वरे यागायागसमुदायक्रियया जीववदन्तःकरणवृत्तिरूपा प्रीतिर्नोत्पद्यते, अन्तः करणाभावात्। तथापि मायावृत्तिविशेष एव प्रीतिः शिक्षादिवत्। सा च यद्यपि उत्पन्नत्वान्नश्यति, तथापि फलं यावत् तिष्ठति। अन्येषां मते अपूर्ववत्।

## अथ देवपूजनाधिकारिणः।

तत्र

ब्राह्मणाः क्षत्रिया वैश्याः स्त्रियः शूद्रान्त्यजातयः।
संपूज्य तं सुरश्रेष्ठं भक्त्या सिंहवपुर्धरम्॥
मुच्यन्ते चाशुभैर्दुःखैर्जन्मकोटिसमुद्भवैः।

इतिनारसिंहीयात्, पूजनस्य

विष्णुप्रा........देवब्राह्मणपूजनम्।

इति साधारणधर्ममध्ये पाठाच्च असङ्कोचेन सर्वेऽधिकारिणः।

यत्तु नरसिंहपुराणे,

अनाश्रमित्वं गृहभङ्गकारणमतो गृहाणाश्रममुत्तमं मुने।
अनाश्रमस्थैर्द्विज वेदपारगैरपि त्वहं नानुगृह्णामि चार्चनम् ॥

इति भगवद्वाक्यम्। तस्यायमर्थः। आश्रमिकृतमर्चनं यथाऽनुगृह्णामि न तथाऽनाश्रमिकृतमिति। साधारणधर्मबोधकवचनस्वरसादाचाराच्च।

देवीपुराणे देवीमूर्त्तीरभिधाय ब्रह्मवाक्यम्,

एतासां शास्त्रवेत्ता यो देवपूजाविधौ शुभः।
मातृमण्डलवेत्ता च ब्राह्मणः क्षत्रियोऽपि वा ॥
प्रतिचारोऽथ वैश्यो वाऽप्यन्यो वा तन्त्रविद्यदि।
पूजाविधौ भवेत् श्रेष्ठो नापटुर्न कुशीलवः ॥
नानैष्ठिको दाम्भिको वा पूजकः प्राप्यते शुभः ॥

प्रतिचारः शूद्रः। अपटुः असमर्थः। पूजारत्नाकरे तु पण्ढ इति पठित्वा रुद्रपूजायामकुशल इतिव्याख्यातम्। कुशीलवो नटादिः। अत्रैकपाके वसतां पुत्रभ्रातॄणामपि देवपूजाधिकारमाह-

आश्वलायनाचार्यः,

पृथगप्येकपाकानां ब्रह्मयज्ञो द्विजातिनाम्।
अग्निहोत्रं सुरार्चा च सन्ध्या नित्यं भवेत्ततः ॥ इति।

देवपूजायां सर्ववर्णाधिकारे—

विष्णुः,

आगमोक्तेन मार्गेण स्त्रीशूद्रैरपि पूजनम्।
कर्त्तव्यं श्रद्धया विष्णोः सर्वैश्वर्यप्रदायकम्।

स्मृत्यर्थसारे—

बौधायनः,

शूद्राणां चैव भवति नाम्ना वै देवतार्चनम्।
सर्वे चागममार्गेण कुर्युर्वेदानुसारिणा ॥

चतुर्थीनमोन्तेन देवतानाम्नेत्यर्थः ।

तथा,

स्त्रीणामप्यधिकारोऽस्ति विष्णोराराधनादिषु ।
दीक्षामन्त्रविहीनोऽपि कुर्याद्देवार्चनं बुधः ॥ इति ।

प्रतिनिधित्वेन अधिकारिण उक्ताः—

मन्त्रराजानुष्टुब्विधाने,

गुरवः पूजकाश्चैव विद्वांसो येऽग्निहोत्रिणः ।
अधिकारित्वमर्हन्ति यद्वा याज्ञिकदीक्षिताः ॥
वेदवेदार्थवेत्ता च स्मार्त्तकर्मज्ञ एव वा ॥ इति ।

इत्यधिकारिणः ।

## अथ पूजाकालः ।

तत्र माध्याह्निकतर्पणानन्तरं वैश्वदेवात्पूर्वं विष्णुपुराण इष्टदेवपूजा, पाद्मनारासिंहयोर्विष्णुपूजोक्ता अतः स एव कालः । व्यासेन वैश्वदेवानन्तरं देवपूजाविधानात् सोऽप्यपरः कालः । इष्टदेवविष्णुपूजाऽन्यदेवपूजानां तु

देवकार्यस्य सर्वस्य पूर्वाह्णस्तु विधीयते ।

इति नरसिंहपुराणीयवाक्यात् पूर्वाह्णः कालः ।

नारदीये,

प्रातर्मध्यन्दिने सायं विष्णुपूजां समाचरेत् ।
यथा सन्ध्या स्मृता नित्या विष्णुपूजा तथा बुधैः ॥
अशक्तौ विस्तरेणैव प्रातः सम्पूजयेद्धरिम् ।
मध्याह्ने चैव सायं च पुष्पाञ्जलिमपि क्षिपेत् ॥
मध्याह्ने विस्तरेणैव संक्षेपेणाथवा हरिम् ।
सम्पूज्य भोजनं कुर्यादन्यथा नरकं व्रजेत् ॥
नैमित्तिकेषु सर्वेषु तत्तत्कालाविशेषतः ।

पूजयेद्देवदेवेशं द्रव्यं सम्पाद्य यत्नतः ॥
अन्ये देवतापूजाकालास्तत्तत्पूजाप्रकरणे द्रष्टव्या इति ।

**अथ तत्तद्देवताराधने फलानि ।**

**मात्स्ये,**

आरोग्यं भास्करादिच्छेद्धनमिच्छेद्धुताशनात् ।
ज्ञानं च शङ्करादिच्छेन्मोक्षमिच्छेज्जनार्दनात् ॥

**याज्ञवल्क्यः,**

आदित्यस्य सदा पूजां तिलकस्वामिनस्तथा ।
महागणपतेश्चैव कुर्वन् सिद्धिमवाप्नुयात् ॥
तिलकप्रियस्य स्वामिनः स्कन्दस्य ।
मार्तण्डतिलकस्वामिमहागणपतीन् वयम् ।
विश्ववन्द्यान्नमस्यामः सर्वसिद्धिविधायिनः ॥

इति वाचस्पत्यश्लोके कल्पतरुणा तथा व्याख्यातम् । विज्ञानेश्वरस्तु तिलकं स्वामिन इति पठित्वा तिलकं सुवर्णादिनिर्मितमिति व्याचख्यौ । पूजामित्यादि त्रिषु सम्बध्यते । सदाश्रवणान्नित्येति केचित् । वस्तुतः फलसम्बन्धश्रवणात्काम्यापि ।

**याज्ञवल्क्यः,**

श्रान्तसंवाहनं रोगिपरिचर्या सुरार्चनम् ।
विप्रपादोदकोच्छिष्टमार्जनं गोप्रदानवत् ॥
गवाह्निकं देवपूजा वेदाभ्यासः सरित्प्लवः ।
नाशयन्त्याशुपापानि महापातकजान्यपि ॥
सरित्प्लवो नदीस्नानम् । सरिदत्र पुण्या नदी ।

**देवीपुराणे,**

मन्त्रादिसाधनं द्रव्यं रुद्रयागादवाप्यते ।
धीमेधाज्ञानवात्सल्यमुमायागादवाप्यते ॥

रुद्रयागात् रुद्रपूजातः । धारणावती बुद्धिर्मेधा ।

तथा,

यः प्रदद्याद्गवां लक्षं दोग्ध्रीणां वेदपारगे ।
एकाहमर्चयेद्भानुं तस्य पुण्यं ततोऽधिकम् ॥
यं च काममभिध्यायन् भास्करान्वितमानसः ।
उपोष्य तमवाप्नोति प्रसन्ने कमलध्वजे ॥

कमलध्वजे रवौ ।

तथा,

यजेदेकं सहस्रांशुं मोक्षकामो न संशयः ।

तथा,

योगो ज्ञानं यशः सिद्धिर्महादेवादवाप्यते ।
आरोग्यं साम्प्रतं पुत्रं भास्करात्प्राप्नुयात् ध्रुवम् ॥

साम्प्रतं कुशलम् ।

गतिमिष्टां तथा कामं प्रददाति त्रिविक्रमः ।
धर्मार्थकाममोक्षणां भाजनं विष्णुपूजकः ॥
सर्वान् कामानवाप्नोति सम्पूज्य विष्णुवल्लभाम् ।
विघ्नो न जायते तस्य यजेद्यस्तु विनायकम् ॥
मातृगणान्महासिद्धिः सर्वेषामेव जायते ।
लभते धनधान्यानि मर्त्यः पूज्य हुताशनम् ॥
महागणपतेः कर्मसिद्धिं प्राप्नोति मानवः ।

महागणपतेरिति पञ्चमी ।

सर्वं जगद्वशीकुर्यान्महागणपतिः सदा ।
स्वर्गापवर्गसंसिद्धिर्दुर्गायागात्प्रजायते ॥

भविष्ये,

यः सदा पूजयेद्दुर्गां प्रणमेद्वापि भक्तितः ।

स स्वर्गराज्यमोक्षाणां क्षिप्रं भवति भाजनम् ॥

मार्कण्डेये,

स्तुता सम्पूजिता पुष्पैर्गन्धधूपादिभिस्तथा ।
ददाति वित्तं पुत्रांश्च मतिं धर्मे तथा शुभाम् ॥ इति ।

ब्रह्मविष्णुमहेशानां यावज्जीवं प्रतिज्ञया पूजा विहिता

कूर्मपुराणे,

तस्माद्ब्रह्मा महादेवो विष्णुर्विश्वेश्वरः परः ।
एकस्यैव स्मृतास्तिस्रस्तन्वः कार्यवशात् प्रभोः ॥
तस्मात्सर्वप्रयत्नेन त्रयः पूज्याः प्रयत्नतः ।
यदीच्छेदचलं स्थानं यत्तन्मोक्षाख्यमुत्तमम् ॥
वर्णाश्रमप्रयुक्तेन धर्मेण प्रीतिसंयुतः ।
पूजयेद्भावयुक्तेन यावज्जीवं प्रतिज्ञया ॥ इति ।

असाधारण्येनैतानि फलानि न तु फलान्तरदातृत्वव्यावृत्तिः । वाक्यान्तरेषु तेषां फलान्तरदातृत्वश्रुतेः । तत्र विष्णुपूजोत्कृष्टेत्युक्तम्—

कूर्मपुराणे,

न विष्णवाराधनात्पुण्यं विद्यते कर्म वैदिकम् ।
तस्मादनादिमध्यान्तं नित्यमाराधयेद्धरिम् ॥ इति ।

गरुडपुराणे,

विष्णुर्ब्रह्मा च रुद्रश्च विष्णुर्देवो दिवाकरः ।
तस्मात्पूज्यतमं नान्यमहं मन्ये जनार्दनात् ॥

भागवते,

यथा तरोर्मूलनिषेचनेन तृप्यन्ति तत्स्कन्धभुजोपशाखाः ।
प्राणोपहाराच्च यथेन्द्रियाणां तथैव सर्वार्हणमच्युतेज्या ॥

प्राणोपहारो भोजनादिः । तत्र विष्णुपूजा नित्या काम्या-

च । तत्र नित्यत्वबोधकवचनानि यथा,

एकाहमपि न स्थेयं विना केशवपूजनात् ।
एकाहवर्जनाद्राजन् पुण्यं याति पुरा कृतम् ॥

तथा कूर्मपुराणे,

यो मोहादथवाऽऽलस्यादकृत्वा माधवार्चनम् ।
भुङ्क्ते स याति नरकं शूकरेष्विह जायते ॥
अनर्चयित्वा गोविन्दं यैर्भुक्तं धर्मवर्जितैः ।
शुनो विष्ठासमं चान्नं नीरं च सुरया समम् ॥

स्कान्दे,

केशवार्चा गृहे यस्य न तिष्ठति महीपते ।
तस्यान्नं नैव भोक्तव्यमभक्षणसमं स्मृतम् ॥ इति ।

अत्र कर्मणि ल्युट् । अभक्ष्यसममित्यर्थः ।

काम्यत्वबोधकानि यथा,

भौमान्मनोरथान् स्वर्गं स्वर्गिवन्द्यं तथा पदम् ।
प्राप्नोत्याराधिते विष्णौ निर्वाणमपि चोत्तमम् ॥

स्वर्गिपदमिन्द्रादिपदम् ।

नारसिंहे,

यस्तु पूजयते नित्यं नरसिंहं नरेश्वर ।
स स्वर्गमोक्षभागी स्यान्नात्र कार्या विचारणा ॥
तस्मादेकमना भूत्वा यावज्जीवं प्रतिज्ञया ।
पूजनान्नरसिंहस्य समाप्नोत्यभिवांछितम् ॥
ब्राह्मणाः क्षत्रिया वैश्याः स्त्रियः शूद्रान्त्यजातयः ।
सम्पूज्य तं सुरश्रेष्ठं भक्त्या सिंहवपुर्धरम् ॥
मुच्यन्ते चाशुभैर्दुःखैर्जन्मकोटिशतोद्भवैः ।
तेपि भूयोऽभिजायन्ते श्वेतद्वीपनिवासिनः ॥ इति ।

न त्वसम्पूज्य भुञ्जीत केशवं कौशिकीं शिवम् ।

इति वाचस्पतिमिश्रधृतकालिकापुराणवचनाच्छिवादिपूजाऽपि नित्या । एतेन शिवादिपूजनं काम्यमेवेति मतमपास्तम् ।

शिवं भास्करमग्निं च केशवं कौशिकीमपि ।
मनसाऽनर्चयन् याति देवलोकादधोगतिम् ॥

इतिवचनाच्च ।

अथ देवपूजायाः स्थानविशेषाः ।

**गृह्यपरिशिष्टे,** तानप्सु वाऽग्नौ वा सूर्ये वा स्थण्डिले प्रतिमासु नावाहनविसर्जने भवतः । स्वाकृतिषु शस्तासु देवता सन्निहितेति ।

**शातातपोपि,**

भूमावग्नौ तथा चाप्सु दिवि सूर्ये च देवताः ।
नित्यमन्ने हिरण्ये च ब्राह्मणेषु च गोषु च ॥ इति ।

एतेषु स्थानेषु सन्निहिता इतिशेषः । भूमौ जले आकाशे भावनया देवतात्वम् । अन्नादीनां तु देवतार्चनायां नाधिकरणत्वं शिष्टाचारविरोधात् । किन्तु पूजार्थत्वमेव देवताधारत्वकीर्त्तनम् ॥

**मनुः,**

अप्स्वग्नौ चैव हृदये स्थण्डिले प्रतिमासु च ।
विप्रेषु च हरेः सम्यगर्चनं मनुना स्मृतम् ।
अग्नौ क्रियावतां देवो दिवि देवो मनीषिणाम् ॥
प्रतिमास्वल्पबुद्धीनां योगिनां हृदये हरिः ।
तस्य सर्वगतस्यार्चा स्थण्डिले भावितात्मनाम् ॥
विप्राणां वपुराश्रित्य सर्वास्तिष्ठन्ति देवताः ।
अतस्तत्रैव ताः पूज्या अलाभे प्रतिमादिषु ॥

तथा,

विप्राणां रूपमास्थाय प्रचरन्तीह देवताः।

पूज्यन्ते ब्राह्मणालाभे प्रतिमादिषु कुत्र चित्॥

'ब्राह्मणो वै सर्वा देवता' इतिश्रुतेर्ब्राह्मणे पूजा अतिप्रशस्ता। भारते सर्वदेवताधारत्वकथनाच्च। अत एव श्रावणद्वादशीव्रत-विशेषे ब्राह्मणादेः पूजाधारता श्रूयते

यथा कल्पतरौ ब्रह्मपुराणे;

प्रयागादिषु तीर्थेषु नदीनां सङ्गमेषु च।

कृत्वा स्नानं तु विधिना हृषीकेशं प्रपूजयेत्॥

जले स्थलेऽम्बरे मूर्तौ कुम्भे वा कमलोपरि।

वह्नौ विप्रे गुरौ वापि पितर्यथ च मातरि॥

आहूया ऽऽसनपुण्याहस्वागतैरथ विस्तरैः।

पाद्यार्घपुष्पधूपैश्च दीपालङ्कारचामरैः॥

इत्यादि। कुम्भे दुर्गादिपूजा पुराणोक्ता। उत्सवादिषु कुम्भे सर्वदेवान् पूजयन्ति। कमलोपरि रेखादिना कमलाकारवति पात्रे सर्वदेवपूजा आगमादिप्रसिद्धा। भूमिजलाकाशप्रतिमाः सर्वदेवानाम्। विष्णोर्द्वारकाशिलाशालग्रामशिले। शिवस्य लिङ्गम्। दुर्गायाः पुस्तकशूलखड्गाः। विष्णुपूजा शालग्रामे महाफला। शिवपूजा लिङ्गे महाफला। शालग्रामे सर्वेपि देवाः पूज्या इति शिष्टाः। 'न तु केवलभूतले' इतिवचनात् पूजा केवलभूमौ सति सम्भवे न कार्या। गृहस्थेन तु शिवपूजा जले न कार्येत्यागमिकाः।

श्रीभागवते भगवद्वाक्यम्,

सूर्योऽग्निर्ब्राह्मणा गावो वैष्णवः खं मरुज्जलम्।

भूरात्मा सर्वभूतानि तत्र पूजापदानि ये॥

सूर्ये तु विद्यया त्रय्या हविषाग्नौ यजेत माम् ।
आतिथ्येन तु विप्राग्र्ये गोष्वङ्ग यवसादिना ॥
वैष्णवे बन्धुसत्कृत्या खे हृदि ध्याननिष्ठया ।
वायौ मुख्यधिया तोये द्रव्यैस्तोयपुरस्कृतैः ॥
स्थण्डिले मन्त्रहृदयैर्भोगैरात्मानमात्मनि ।
क्षेत्रज्ञं सर्वभूतेषु समत्वेन यजेत माम् ॥

मुख्यधिया प्राणबुद्ध्या । भोगैरिति स्रक्चन्दनादिना । आत्माऽभिन्नः परमेश्वरः प्रीयतामिति बुध्या भोगाचरणमपि पूजेत्यर्थः ।

तदुक्तं लिङ्गपुराणे,

गन्धपुष्पादिकं सर्वं शिरसा यो विधारयेत् ।
विष्णवे सर्वमित्येवं मत्वासौ वैष्णवः स्मृतः ॥ इति ।

आतिथ्यादिविशेषविधावपि गन्धाद्युपचारपूजा न विरुद्धा । अत एव सूर्यादौ द्रव्यैरपि पूजां वक्ष्यति

अर्चायां स्थण्डिले वह्नौ सूर्ये खे यदि वा द्विजे ।
द्रव्येण भक्तियुक्तोऽर्चेत् स्वगुरुं माममायया ॥ इति ।

आगमिकास्तु यन्त्रे पूजामिच्छन्ति

यन्त्रं मन्त्रमयं प्रोक्तं मन्त्रात्मा देवतेति च ।
यन्त्रं विना कृता पूजा देवता न प्रसीदति ॥

इतिवाक्यात् । तयेति शेषः ।

**नारदोऽपि,**

अप्स्वग्नौ हृदये सूर्ये स्थण्डिले प्रतिमासु च ।
षट्स्थानेषु हरेः सम्यगर्चनं मुनिभिः स्मृतम् ॥ इति ।

**विष्णुधर्मोत्तरे,**

आपो ह्यायतनं तस्य तस्मात्तासु सदा हरिः ।

अर्चाभावे तथा वेद्यां स्थले पर्णपुटेऽपि वा ।
नदीतीरेऽथ कमले केशवं पूजयेन्नरः ॥

**मन्त्रराजानुष्टुब्विधाने,**

अप्स्वग्नौ हृदये सूर्ये स्थण्डिले प्रतिमासु च ।
षट्स्वेतेषु हरिं सम्यगर्चयेत्........ ॥

**तथा,**

कर्मणाग्नौ जले पुष्पैर्ध्यानेन हृदयेऽर्चयेत् ।
जपेन सूर्यबिम्बे स्यात् स्थण्डिले भावितात्मभिः ॥
बाह्यैर्द्रव्यगुणैरेव प्रतिमां पूजयेत्सदा ।

अत्र षड्ग्रहणं नाधिष्ठानान्तरपरिसंख्यार्थम् ।

**तथा,**

पूजार्थमुत्तमं स्थानं शालग्रामं तदुच्यते ॥
प्रतिमादौ षडावृत्त्या पूजिते यत्फलं लभेत् ।
शालग्रामेऽर्चिते देवेप्येकावृत्त्यापि तल्लभेत् ॥

**स्कान्दे,**

नृसिंहपूजने श्रेष्ठा शालग्रामोद्भवा शिला ।
द्वारकाजातचक्राङ्का शिला श्रेष्ठा तथैवच ॥
तयोश्च सङ्गमं कृत्वा पूजयन् मुक्तिभाक् भवेत् ।
तयोरसम्भवे चार्चा सदैव नवधा स्मृता ॥

अर्चा प्रतिमा ।

रत्नजा हेमजा चैव राजती ताम्रजा तथा ।
रैतिकी वा तथा लौही शैलजा द्रुमजा तथा ॥

रैतिकी पित्तलजा ।

अधमाधमा विज्ञेया मृन्मयी प्रतिमा च या ।
सर्वकामप्रदा चैव रत्नजा चोत्तमोत्तमा ॥
रत्नजा लक्ष्मिदाऽऽयुर्दा पुष्टिश्रीदा च हेमजा ।

राजती पुत्रदा चैव तथा प्रज्ञाकरी मता ॥
ब्रह्मवर्चस्करी ताम्री तथाऽऽरोग्यप्रदायिनी ।
रैतिकी कीर्तिदा चैव तथा कान्तिप्रदायिनी ॥
लौही च जयदा ज्ञेया शैलजा भूमिदायिनी ।
द्रुमजा धान्यदा ज्ञेया मृन्मयी भोगदायिनी ॥
तत्रादौ पूजनार्थाय मुख्यं स्थानं मयोच्यते ।
शालग्रामोद्भवा शस्ता जाता या चक्रतीर्थके ॥

ब्रह्मोवाच ।

भगवन् देवदेवेश शङ्खचक्रदाधर ।
संशयं मे समुत्पन्नं छेत्तुमर्हस्यशेषतः ॥
शालग्रामं तु यत्पुण्यं क्षेत्रं त्रैलोक्यविश्रुतम् ।
तत्र तिष्ठति विश्वात्मा सर्वदेवनमस्कृतः ॥
क्षेत्रोत्पन्नाः स्वयम्बिम्बाः सूक्ष्माः सूक्ष्मतरास्तथा ।
प्रादुर्भावैश्च विविधैर्लाछनैश्च समान्विताः ॥
अर्थदाः कामदाश्चैव धर्ममोक्षप्रदायकाः ।
शस्ता अशस्ताः किम्भूता एतदाख्यातुमर्हसि ॥

श्रीभगवानुवाच ।

शृणु ब्रह्मन् प्रवक्ष्यामि शालग्रामे स्थितं हरिम् ।
हरिस्तत्र स्थितो नित्यं प्रादुर्भावैरनेकधा ॥
लाञ्छनैर्विविधाकारैर्लाञ्छनं यत्र दृश्यते ।
चक्राङ्कितं हरेश्चापि शालग्रामस्य लक्षणम् ॥
यथायोग्यं विचार्यैव ग्रहीतव्यं प्रयत्नतः ।
आदौ शिलां परीक्षेत ग्राह्याग्राह्यविभागतः ॥
स्थिरासना सुवृत्ता च फलाकारा यवानना ।
कृष्णा च पाण्डुरा पीता नीला श्यामाथ शुक्लका ॥

कपिलाभा च काचाभा दूर्वाभा रक्तपिङ्गला ।
एताः शुभाः शिला ग्राह्या मिश्राश्चैव विशेषतः ॥
स्थिरासना परिज्ञेया स्वकस्थानसुखप्रदा ।
वृत्ता सुवृत्तदा प्रोक्ता फलाकारा फलप्रदा ॥
यवानना च विज्ञेया वाक्सौन्दर्य्यप्रदायिका ।
(मन्त्रसिद्धिकरी स्निग्धा नित्यश्रीकान्तिदायिका) ॥
कीर्त्तिभोगप्रदा कृष्णा पाण्डुरा पापहारिणी ।
पीता पुत्रप्रदा नित्यं लक्ष्मीशान्तिप्रदा तथा ॥
नीला बहुप्रदा ज्ञेया तथा वै कान्तिदायिनी ।
पुष्टिवृद्धिप्रदा श्यामा श्वेता सत्त्वप्रदायिनी ॥
कपिलाख्या भवेन्मुद्रा ज्ञानैश्वर्यप्रदायिका ।
कामप्रदा च काचाभा दूर्वाभा पशुदायिनी ।
रक्ताऽऽरोग्यप्रदा नित्यं मिश्रा मिश्रफलप्रदा ॥
धात्रीफलप्रमाणा या करसम्पिहिताङ्किका ।
पूजनीया शिलाभावे तत्र जाते द्रुमेऽपि वा ॥
तत्र शालग्रामे ।
तत्राप्यामलकीतुल्या पूज्या सातीव या भवेत् ॥
तस्यामेव सदा ब्रह्मन् श्रिया सह वसाम्यहम् ।
यथायथा शिला सूक्ष्मा तथा चैव वसाम्यहम् ॥
तस्यां मां पूजयेन्नित्यं धर्मकामार्थसिद्धये ।
एवं ब्रह्माणमुक्त्वा धरणीं प्रत्याह ।
तत्राश्चर्यं प्रवक्ष्यामि विशेषं तव सुन्दरि ।
शैलं लिङ्गाङ्कितं तत्र दृश्यते यत्र कुत्रचित् ॥
पूजयेत्तद्विशेषेण तत्र सन्निहितः शिवः ।
शिवनाभिरिति ख्यातं शालग्रामोद्भवं तु यत् ॥

दृष्ट्वा स्पृष्ट्वा नरो देवि सर्वपापैः प्रमुच्यते ।
शैवं नारायणं शैलं यत्र देशे व्यवस्थितम् ॥
तच्चैवं विष्णुमत्तीर्थं शालग्रामसमुद्भवम् ।
पूजनीयं प्रयत्नेन तत्र सन्निहितावुभौ ॥
येऽर्चयन्ति महाभक्त्या शिवनाभिं नरोत्तमाः ।
ते यान्ति मन्दिरं शम्भोः सिद्धचारणसेवितम् ॥
शिवनाभिं च ये भक्त्या विधिवत्पूजयन्ति वै ।
गन्धपुष्पोपहारैश्च ते यान्ति शिवसान्निधिम् ॥
द्विनाभिः पद्मरूपा चेत् भवेद्धरिहरात्मिका ।
नाभौ लिङ्गेन युक्ता वा श्वेताभा वै खुरान्विता ॥
शिवनाभीति विख्याता भुक्तिमुक्तिप्रदायिका ।
यवमात्रं तु गर्त्ते स्याद्यवार्धं लिङ्गमुच्यते ॥
शिवनाभिरिति ख्यातः त्रिषु लोकेषु दुर्लभः ।
वासुदेवमयं क्षेत्रं लिङ्गं शिवमयं स्मृतम् ॥
तस्माद्धरिहरक्षेत्रे पूजयेच्छङ्कराच्युतौ ।
सा चेच्छिलाशतैः शस्ता चतुर्वर्गफलप्रदा ॥
साक्षान्महेश्वरेणात्र संयुक्तं पूजयेद्धरिम् ।
पाञ्चजन्याङ्किता या तु पद्मेन गदया युता ॥
तत्र श्रीः प्रत्यहं तिष्ठेत् सदा सम्पदमादिशेत् ।
जया च परमा मुद्रा चतुर्वर्गफलप्रदा ॥
एषा चैकेन चिह्नेन लाञ्छिता वै प्रशस्यते ।
सकृदभ्यर्चितो येन देवो योगेश्वरो हरिः ॥
दर्शनात्स्पर्शनाच्चैव शालग्रामस्य नित्यशः ।
निर्दहिष्यति तत्सर्वं ज्वालयाग्निरिवेन्धनम् ॥ (?)
न तेषामपराधोऽस्ति शालग्रामशिलार्चने ।

तैश्चाहं पूजितो यस्मान्नान्यथैव वसुन्धरे ॥
कुरुक्षेत्रसमो देशः समन्तात् क्रोशपञ्चकम् ।
तन्मध्ये म्रियते यस्तु साधकः सुसमाहितः ॥
दशधन्वन्तरस्थस्तु जायते न पुनर्भवे ।
दशधन्वन्तरं चत्वारिंशद्धस्तमध्ये ।
शालग्रामशिला यत्र तिष्ठेत्तु हरिचिह्निता ।
हरिचिह्नं चक्रं तद्वती ।
तत्रैवच कुरुक्षेत्रं नैमिषं पुष्करं तथा ।
सा श्रेष्ठा सर्वदा पूज्या मुच्यते पूजको भवात् ॥
शालग्राममयी मुद्रा संस्थिता यत्र कुत्रचित् ।
वाराणस्यां यवाधिक्यं समन्ताद्योजनत्रयम् ॥
शालग्रामसमीपे तु क्रोशमात्रं समन्ततः ।
कीकटेऽपि नरो याति वैष्णवं भवनं मृतः ॥
कामासक्तोऽपि यो नित्यं भक्तिभावाविवर्जितः ।
शालग्रामशिलां पुत्र पूजयेत्सोऽच्युतो भवेत् ॥
कामासक्तोऽपि क्रुद्धोऽपि शालग्रामशिलार्चनम् ।
भक्त्या वा यदिवाऽभक्त्या कृत्वा मुक्तिमवाप्नुयात् ॥
यत्किञ्चित्पैतृकं कुर्यात् सपिण्डं वा तदन्तिके ।
विष्णुलोकं स गच्छेत्तु लभते शाश्वतं पदम् ॥
जन्मप्रभृति यत्पापं दुःखभूतं महत्कृतम् ।
इयं मुद्राऽर्पिता येन नाशयेत्तस्य तत्क्षणात् ॥
मुद्रा शिला । अर्पिता दत्ता ।
हरिस्तत्र सदा विष्णुर्मन्त्रात्मा विश्वरूपधृक् ॥
लक्ष्मीः कीर्त्तिस्तथा कान्तिः पुष्टिः श्रीश्च सरस्वती ।
ह्रीः शान्तिश्च सदा सर्वमुद्रायां पुत्र संस्थिताः ॥

सततं चार्चयेन्नित्यं हरिदेहसमन्विताम् ।
ध्यानं पूजां तथा दानमग्निकार्यं जपादिकम् ॥
तदग्रे पञ्चकं कुर्यात्तत्सर्वं चाक्षयं भवेत् ।
शालग्रामोद्भवं देवं भावयेदपि यो नरः ॥
सोऽपि याति परं ब्रह्म किंपुनर्यः सदाऽर्चयेत् ।
कृत्वा पापसहस्राणि शालग्रामं प्रपश्यति ॥
पापपाशाद्विनिर्मुक्तो विष्णुलोकं स गच्छति ।

तत्रैव,

एवं लक्षणसम्पन्ना पारम्पर्यक्रमागता ।
उत्तमा सा तु विज्ञेया गुरुदत्तापि तत्समा ॥
फलपुष्पैश्च तत्स्थानं गत्वा तत्र समर्चयेत् ।
गुरुभिः पूजयित्वाथ कलान्यासाच्च मन्त्रतः ॥
गुरुभिः कारयित्वैवं शुभे लग्नेऽनुकूलके ।
ततो गुरुं समभ्यर्च्य शक्त्या भक्त्या प्रणम्य तम् ॥
पूजयिष्याम्यहं भक्त्या शालग्रामोद्भवं हरिम् ।
गुरुः शिष्याञ्जलौ दद्याच्छान्तिः शिवमिति ब्रुवन् ॥
गृहीत्वा शिरसा धृत्वा ततः सम्पूजयेत्सदा ।
शालग्रामे स्वयं गत्वा व्रतैः सह विशेषतः ॥
पूर्वाद्रैः पूर्वदृष्टां तु कृत्वाऽऽराध्य सदक्षिणाम् ।
द्वितीया तु स्वयं पूज्या सा शिला चोत्तमोत्तमा ॥
क्रयक्रीता परिज्ञेया मध्यमा याचिताऽधमा ।

व्रती सन् । पूर्वाद्रैः पूर्वं प्रथमतो दृष्टां शिलामाराध्य पूजयित्वा सदक्षिणां ब्राह्मणाय दत्वा द्वितीया मूर्त्तिः स्वयं पूज्या सा सर्वोत्तमेत्यर्थः ।

अथ त्याज्याः शिला उक्तास्तत्रैव,

त्याज्यां शिलामतो वच्मि शृणु ब्रह्मन् समासतः ।
तिर्यक्चक्रा परित्याज्या बद्धचक्रा तथैवच ॥
कूरापिच परित्याज्या स्फोटा रूक्षा तथैवच ।
कुरूपा निष्ठुराऽनास्या कराला विकरालिका ॥
कपिला विषमावर्त्ता व्यात्तास्या कोटरा तथा ।
आसने चलना भग्ना महास्थूला विगर्हिता ॥
विगर्हितेति मूर्त्तिनाम ।
आसने सुषिरं यस्याश्चक्रेणैकेन संयुता ।
दर्दुरा बहुचक्रा च लग्नचक्राप्यधोमुखी ॥
दर्दुरा अश्लक्ष्णा ।
छिद्रा दग्धा सुरक्ता च बृहच्चक्रा विभीषणा ।
चक्रेणावृतचक्रा च बृहच्चक्रा प्रकीर्त्तिता ॥
बहुरेखासमायुक्ता भग्नचक्रा तथैवच ।
दीर्घचक्रा परित्याज्या पाङ्क्तिचक्रा विशेषतः ॥
मस्तकास्या अचिह्ना च वर्ज्या ह्येताः सदा बुधैः ।
क्रूरा दंष्ट्रासमायुक्ता स्फोटा बुद्बुदसंयुता ॥
अचिरात् शुष्कतां याति यस्यां लिप्तं तु चन्दनम् ।
कुरूपा कुत्सिताकारा निष्ठुरा निर्द्रवा स्मृता ॥
स्ववेष्टनतुरीयांशमास्यं यस्याः शुभा हि सा ।
तस्मादधिकवक्त्रा च करालेति प्रकीर्त्तिता ॥
तुरीयांशश्चतुर्थांशः ।
तृतीयांशास्यसंयुक्ता दंष्ट्रया विकरालिका ॥
संवृतास्या परिज्ञेया वेष्टनद्व्यष्टभागतः ।
द्व्यष्टभागः षोडशांशः ।
व्यात्तास्या चाधिका ज्ञेया वृत्ताधिक्ये तु कोटरा ।

स्थूला त्वष्टाङ्गुलायामा पूजकस्याङ्गुलेन तु ॥
अधिके तु महास्थूला तां गृही न तु पूजयेत् ।
अधोमुखी त्वधरास्या ऊर्ध्वास्यापिच निन्दिता ॥
तिर्यक्चक्रान्विता दद्याद्भ्रमणं क्लेशसंयुतम् ।
क्रूरा रोगप्रदा नित्यं स्फोटा वायुर्विनाशिनी ॥
रूक्षा चोद्वेगदा नित्यं दुःखदारिद्र्यदायिका ।
कुरूपा दैन्यदा चैव निष्ठुरा पुण्यनाशिनी ॥
अनास्या मौर्ख्यदा चैव कराला भयदायिका ।
ऐहिकामुष्मिकं हन्ति विकराला स्वभावतः ॥
कपिला पत्नीहा नित्यं व्यात्तास्या जयनाशिनी ।
कोटरा पूजकं हन्ति तथा बन्धुविनाशिनी ॥
आसने चलना नित्यं प्रवासस्य प्रदायिनी ।
भग्ना धनहरा नित्यं महास्थूला व्ययप्रदा ॥
गर्हिनाऽपायदा प्रोक्ता कीर्त्तिदा सुषिरासना ।
एकचक्रा कुलघ्नी स्यान्मस्तकास्या च पुत्रहा ॥
दर्दुरा कुष्ठदा ज्ञेया बहुचक्रा भयप्रदा ।
बहुचिन्ताप्रदा छिद्रा लग्ना चान्ध्यप्रदा हि सा ॥
अधोगतिप्रदा ज्ञेया तथैवाधोमुखी तु सा ।
बहुचक्रान्वयं हन्ति यशोघ्नी बहुरेखिका ॥
पङ्क्तिचक्रा पतिं हन्ति बृहच्चक्रा गृहक्षया ।
अचिह्ना निष्फला ज्ञेया निराशत्वप्रदायिनी ॥
एतत् बहुशालग्रामसद्भावे द्रष्टव्यम् ।
अलाभे तु तत्रैवोक्तम्
क्षेत्रे तु वासुदेवोऽस्ति स्थितश्चोपलकुक्षिषु ।
शालग्रामे विशेषेण हरिस्तत्रैव संस्थितः ॥

खण्डितां स्फुटितां भुग्नां पार्श्वभिन्नां विभेदिताम् ॥
शालग्रामसमुद्भूतां शिलां तु पूजयेन्सदा ।
न तत्र दोषो मन्तव्यो विद्युत्पाताग्निसम्भवः ॥ इति ।

**वाराहे,**

ये केचिच्चैव पाषाणा विष्णुचक्रेण चिह्निताः ।
तेषां स्पर्शनमात्रेण मुच्यते सर्वकिल्विषैः ॥

**पाद्मेपि,**

खण्डितं त्रुटितं भग्नं पार्श्वभिन्नं सुभेदितम् ।
शालग्रामसमुद्भूतं शैलं दोषावहं नहि ॥ इति ।

**तथा,**

शिला द्वादश भो वैश्य शालग्रामसमुद्भवाः ।
विधिवत्पूजिता येन तस्य पुण्यं वदाम्यहम् ॥
कोटिद्वादशलिङ्गैस्तु पूजितैः स्वर्णपङ्कजैः ।
यत्स्यात् द्वादशकल्पेषु दिनेनैकेन तद्भवेत् ॥

**तथा,**

यः पुमान् पूजयेद्भक्त्या शालग्रामशिलाशतम् ।
उषित्वा स हरेर्लोके चक्रवर्त्तीह जायते ॥

**अन्यदपि,**

शालग्रामशिलायां हि यः श्राद्धं कुरुते नरः ।
पितरस्तस्य तिष्ठन्ति तृप्ताः कल्पशतं दिवि ॥

**तथा,**

शालग्रामशिलायां यो मूल्यमुत्पादयेन्नरः ।
विक्रेता चानुमन्ता च यः परीक्ष्यानुमोदकः ॥
सर्वे ते नरकं यान्ति यावदाभूतसंप्लवम् ॥ इति ।
कोटिलिङ्गसहस्रैस्तु पूजितैर्जाह्नवीतटे ।

काशीवासयुगान्यष्टौ दिनेनैकेन तद्भवेत् ॥
गङ्गा गोदावरी रेवा नद्यो मुक्तिप्रदास्तु याः ।
निवसन्ति सतीर्थास्ताः शालग्रामशिलाजले ॥

स्मृत्यन्तरे,

शालग्रामाः समाः पूज्या विषमा न कदाचन ।
समेषु न द्वयं पूज्यं विषमेष्वेक एवहि ॥

तथा,

विषमेष्वेक एवेज्यः समे द्वे षट् विवर्जयेत् ।

अत्रापवादो हेमाद्रौ,

चत्वारो ब्राह्मणैः पूज्यास्त्रयो राजन्यजातिभिः ।
वैश्यैर्द्वावेव सम्पूज्यौ तथैकः शूद्रजातिभिः ॥
ब्राह्मणैर्वासुदेवस्तु नृपैः सङ्कर्षणस्तथा ।
प्रद्युम्नः पूज्यते वैश्यैरनिरुद्धस्तु शूद्रकैः ॥

शालग्रामपूजाधिकारिणः उक्ताः

स्कन्दपुराणे,

ब्राह्मणक्षात्रियविशां स्त्रीशूद्राणामथापि वा ।
शालग्रामेऽधिकारोऽस्ति नान्येषां तु कदाचन ॥

अन्येषां वर्णसङ्कराणाम् । स्त्रीशूद्राधिकारोऽत्र पूजायाम् ।

यः शूद्रेणार्चितं लिङ्गं विष्णुं वा प्रणमेन्नरः ।
तस्येह निष्कृतिर्नास्ति प्रायश्चित्तशतैरपि ॥
योषिद्भिः पूजितं लिङ्गं विष्णुं वा प्रणमेन्नरः ।
स कोटिकुलसंयुक्त आकल्पं रौरवं व्रजेत् ॥

बृहन्नारदीयज्ञापकात् 'अनिरुद्धस्तु शूद्रकै' रित्युदाहृतवचनाच्च । न तु स्पर्शे ।

तदुक्तं स्कान्दे,

स्त्रीशूद्राभ्यां करस्पर्शो वज्रादपि सुदुस्सहः ।
बृहन्नारदीयेपि लिङ्गपरम् । यथोक्तं तत्रैव
यदा प्रतिष्ठितं लिङ्गं मन्त्रविद्भिर्यथाविधि ।
तदाप्रभृति शूद्रश्च योषिद्वापि न संस्पृशेत् ॥ इति ।
विष्णुरपि,
स्त्रीणामनुपनीतानां शूद्राणां च जनेश्वर ।
स्पर्शने नाधिकारोऽस्ति विष्णोर्वा शङ्करस्य च ॥
शूद्रो वाऽनुपनीतो वा स्त्रियो वा पतितोऽपि वा ।
केशवं च शिवं वापि स्पृष्ट्वा नरकमाप्नुयुः ॥

अतश्च स्त्रीशूद्रैरस्पर्शवती पूजा कार्या । तत्पूजामात्रनिषेधे स्कन्दवचनविरोधापत्तेः ।

सांप्रदायिकास्तु स्त्रीशूद्रपदमदीक्षितमद्यपस्त्रीशूद्रपरं मन्यमानाः संप्रदायविधिना विष्णुमन्त्रदीक्षितानां सत्स्त्रीशूद्राणामपि स्पर्शवतीं पूजामिच्छन्ति ।

मद्यपस्तु समासाद्य मम कर्मपरायणः ।
तस्य पापं प्रवक्ष्यामि शृणु सुन्दरि तत्त्वतः ॥
एकजन्म भवेद्गृध्रश्चाण्डालः सप्तजन्मसु ।
इति वाराहोक्तेः । मद्यपोत्र शूद्रः ।
द्विजातेरेव पूज्योऽहं शुचेरप्यशुचेरपि ।
इति स्कान्दात् ।

अत्र प्रतिष्ठितमूर्त्तिलिङ्गपूजा सत्स्त्रीसच्छूद्रैः स्पर्शवत्यपि कार्या। स्पर्शनिषेधस्तु शालग्रामदेवर्षिप्रतिष्ठितमूर्त्तिलिङ्गस्पर्शनिषेधपर इति शिष्टाः ।

स्कन्दपुराणे,
शालग्रामशिलायास्तु प्रतिष्ठा नैव विद्यते ।

महापूजां तु कृत्वादौ पूजयेत्तां ततो बुधः ॥
बृहद्वामने,
प्रतिष्ठादिविधानेन विनैवच स ते हरिः ।
सदा तत्र शिलामात्रे चक्रचिन्हे वरानने ॥
शालग्रामार्चने भूप नावाहनविसर्जने ।
येषां नास्ति विधिर्मन्त्रो न दीक्षा न विधिक्रमः
न तेषामपराधोऽस्ति शालग्रामशिलार्चने ॥
आगम्यागमने पापं तथा विश्वासघातने ।
तत्सर्वं नाशयत्याशु शालग्रामशिलार्चनात् ॥
ब्रह्मपुराणे,
शालग्रामोद्भवो देवो देवो द्वारवतीभवः ।
उभयोः सङ्गमो यत्र मुक्तिस्तत्र न संशयः ॥
एकमूर्त्तिर्न पूज्यैव गृहिणा वृद्धिमिच्छता ।
अनेकमूर्त्तिसम्पन्ना सर्वकामफलप्रदा ॥
अनेकमूर्त्तिकास्तस्मात्पूजयेद्बुद्धिमान् गृही ।
पूजिते फलमाप्नोति इह लोके परत्रच ॥
मूर्त्तिशब्देन द्वारवत्युद्भवा चक्रशिला ।
अत एव,
चक्राङ्कमिथुनं पूज्यं नैकं चक्राङ्कमर्चयेत् ।
चक्राङ्कमिथुनात्सार्द्धं शालग्रामं प्रपूजयेत् ॥
तत्रैव,
धरण्युवाच ।
देवदेव महादेव सर्वयोगीश्वरेश्वर ।
चक्रतीर्थस्य माहात्म्यं तत्र जाताऽश्मलक्षणम् ॥
वक्तुमर्हस्यशेषेण यद्यनुग्रहभागहम् ।

श्रीभगवानुवाच ।
म्लेच्छदेशेऽशुचौ वापि चक्राङ्को यत्र तिष्ठति ।
योजनानां तथा त्रीणि मम क्षेत्रं वसुन्धरे ॥
तन्मध्ये म्रियते यस्तु पूजकः सुसमाहितः ।
प्रेतबाधां च सम्प्राप्तुं न पुनः सोपि जायते ॥
चक्राङ्कस्य तु सान्निध्ये यत्कर्म क्रियते नरैः ।
स्नानं दानं तपो होमः सर्वं तस्याक्षयं भवेत् ॥
संवत्सरं तु यत्पापं मनसा कर्मणा कृतम् ।
तत्सर्वं नश्यते पुंसां सद्यश्चक्राङ्कदर्शनात् ॥
ज्वरदाहो विषं चैव अग्निचौरभयं तथा ।
सर्वे ते प्रलयं यान्ति चक्राङ्को यत्र तिष्ठति ॥
भूतप्रेतपिशाचाश्च डाकिन्यश्च वसुन्धरे ।
सर्वे ते प्रलयं यान्ति यत्र चक्राङ्कितं न्यसेत् ॥
संवत्सरं तु यः कुर्यात् पूजां स्पर्शनदर्शने ।
विना सांख्येन योगेन मुच्यते नात्र संशयः ॥
भक्त्या वा यदिवाऽभक्त्या चक्राङ्कं पूजयेन्नरः ।
अपिचेत्स दुराचारो मुच्यते नात्र संशयः ॥
द्वारवतीशिला देवैर्मुद्रिता मम मुद्रया ।
यत्रापि नीयते तत्स्यात् तीर्थं द्वादशयोजनम् ॥
यत्किञ्चित्तस्य पाषाणं कृष्णचक्रेण मुद्रितम् ।
तस्य दर्शनमात्रेण मुच्यते सर्वपातकैः ॥
हृदि स्थिते तु चक्राङ्के दूता वैवस्वतस्य तु ।
नोपसर्पन्ति ते भीता दृष्ट्वा विष्णुपरिग्रहम् ॥
भिन्नश्चैवार्थनाशया स्थूलो बुद्धिविनाशतः ।
दीर्घश्चायुर्हरो ज्ञेयो रूक्षो बुद्धिविनाशकृत् ॥

रूक्षोऽस्निग्धः। चक्राङ्क इति शेषः।
शुक्लवर्णं शुभं ज्ञेयं वृत्तचक्रं तथैवच ॥
शालग्रामादिलक्षणानि तु लक्षणप्रकाशस्थानि द्रष्टव्याणि।
अथ विष्णुपूजादिफलान्यभिधीयन्ते।
विष्णुरहस्ये,
इति विष्ण्वर्चनं ये तु प्रकुर्वन्ति नरा भुवि।
ते यान्ति शाश्वतं विष्णोरनन्तं परमं पदम् ॥
एवं ज्ञात्वार्चकस्येह सदा सर्वं प्रसिध्यति।
सुखं प्रज्ञां च कीर्त्तिं च लभते स्वर्गमुत्तमम् ॥
त्रिसन्ध्यं पूजयेन्नित्यं स मुक्तः सर्वबन्धनात्।
व्यासः,
सर्वेषामेव लोकानां गुरुर्नारायणो हरिः।
तस्य सम्पूजनं कार्यं सर्वपापहरं हि यत् ॥
येऽर्चयन्ति सदा विष्णुं शङ्खचक्रगदाधरम्।
सर्वपापविनिर्मुक्ता ब्रह्माणं प्रविशन्ति ते ॥
बृहन्नारदीये,
यो भारतभुवं प्राप्य विष्णुपूजापरो भवेत्।
तस्य वै सदृशं नास्ति यथा वै रवितेजसः ॥
स्वाचारमनतिक्रम्य हरिभक्तिरतो हि यः।
स याति विष्णुभवनं यद्वै पश्यन्ति सूरयः ॥
कुर्वन् वेदोदितान् धर्मान् मुनीन्द्र स्वाश्रमोचितान्।
हरिध्यानपरो यस्तु स याति परमं पदम् ॥
शिवपूजापरो वापि विष्णुपूजारतोपि वा।
यत्र तिष्ठति तत्रैव लक्ष्मीः सर्वाश्च देवताः ॥
यत्र पूजापरो विष्णोस्तत्र वह्निर्न बाधते।

राजा वा तस्करो वापि व्याधयश्च न सन्ति हि ॥
प्रेताः पिशाचाः कूष्माण्डा ग्रहा बालग्रहास्तथा।
डाकिन्यो राक्षसाश्चैव न बाधन्तेऽच्युतार्चकम् ॥
परपीडारता ये तु भूतवेतालकादयः।
न सन्ति यत्र तद्भक्ता हरिलिङ्गार्चने रताः ॥
परोपदेशनिरता वीतरागा विमत्सराः।
हरिपादार्च्चनरताः प्रयान्ति ब्रह्मणः पदम् ॥
पूजया रहितं विष्णुं योऽर्चयेदर्कवंशज।
तस्य पुण्यफलं वक्ष्ये वदतस्तन्निशामय ॥
जलेन स्नापयेद्यस्तु पूजारहितमच्युतम्।
स याति विष्णुसालोक्यं कुलसप्ततिसंयुतः ॥
पत्रैः पुष्पैः फलैर्वापि पूजारहितमच्युतम्।
प्रयाति हरिसारूप्यं शतद्वयकुलान्वितः ॥
भक्ष्यभोज्यादिभिर्भूप पूजया शून्यमच्युतम्।
समभ्यर्च्य लभेन्मोक्षं कुलायुतसमन्वितः ॥
शीर्णस्फुटितसन्धानं यः करोति नरोत्तम।
शिवस्यायतनं वापि विष्णोर्वा शृणु तत्फलम् ॥
शतजन्मार्जितैः पापैर्मुक्तो वंशत्रयान्वितः।
स्थित्वा विष्णुपुरे कल्पं तत्रैव परिमुच्यते ॥
देवतायतने राजन् कृत्वा संमार्जनं नरः।
यत्फलं समवाप्नोति तन्मे निगदतः शृणु ॥
यावत्यः पांशुकणिकाः सम्यक् समार्जिता नृप।
तावद्युगसहस्राणि विष्णुलोके महीयते ॥
यत्तु देवालये राजन्नपि गोचर्ममात्रकम्।
जलेन सेचनं कुर्यात् तत्फलं वदतः शृणु ॥

यावत्यः पांशुकणिका द्रवीभूता नरेश्वर ।
तावज्जन्मार्जितैः पापैः सद्य एव विमुच्यते ॥
गन्धोदकेन यो मर्त्यो देवतायतने नृप ।
भक्तितः सेचनं कुर्यात् तस्य पुण्यफलं शृणु ॥
द्रवीभूतानि यावन्ति रजांसि मनुजेश्वर ।
तावत्कल्पसहस्राणि हरिसारूप्यमश्नुते ॥
मृदा धातुविकारैर्वा देवतायतनं नरः । (?)
कुलद्वयसमेतस्तु विष्णुलोके युगं वसेत् ॥
मृदा धातुविकारैश्च वर्णकैर्गोमयेन वा ।
उपलेपनकृद्यस्तु नरो वैमानिको भवेत् ॥
शिलाचूर्णेन यो मर्त्यो देवतायतने नृप ।
करोति स्वस्तिकादीनि तस्य पुण्यं निशामय ॥
यावत्यः कणिका भूमौ लिप्ता रविकुलोद्भव ।
तावद्युगसहस्राणि हरिसालोक्यमश्नुते ॥
यः कुर्याद्दीपरचनं शालिपिष्टादिभिर्नृप ।
न तस्य पुण्यं संख्यातुमुत्सहेऽब्दशतैरपि ॥
अखण्डदीपं यः कुर्याद्विष्णोर्वा शङ्करस्य च ।
दिनेदिनेऽश्वमेधस्य फलमाप्नोत्यनुत्तमम् ॥
अर्चितं शङ्करं दृष्ट्वा विष्णुं वापि नमेत्तु यः ।
स विष्णुभवनं प्राप्य वसेदब्दशतं नृप ॥
मुखवाद्यकृतो ये तु देवतायतने नराः ।
विमानशतसंयुक्ताः कल्पं स्वर्गाधिवासिनः ॥
करशब्दं प्रकुर्वन्ति देवतायतने तु ये ।
ते सर्वपापनिर्मुक्ता विमानेशा युगद्वयम् ॥
देवतायतने ये तु घण्टानादं प्रकुर्वते ।

तेषां पुण्यं निगदितुं कः समर्थो न भूपते ॥
भेरीमृदङ्गपटहनिःसाणाद्यैश्च डिण्डिमैः ।
सन्तर्प्य देवदेवेशं लभन्ते यत्फलं शृणु ॥
देवस्त्रीशतसंयुक्ताः सर्वकामसमन्विताः ।
स्वर्गलोकमनुप्राप्य मोदन्ते कल्पपञ्चकम् ॥
देवतायतने कुर्वन् राजन् शङ्खस्वनं नरः ।
सर्वपापविनिर्मुक्तो ब्रह्मणा सह मोदते ॥
तालकांस्यादिनिनदं कुर्वन् विष्णुगृहे नरः ।
यत्फलं लभते राजन् शृणुष्व गदतो मम ॥
सर्वपापविनिर्मुक्तो विमानशतसङ्कुलः ।
गीयमानश्च गन्धर्वैर्विष्णुना सह मोदते ॥
ध्यातः स्मृतः पूजितो वा स्तुतो वाथ नुतोऽपि वा ।
स्वपदं यो ददातीशस्तं वन्दे पुरुषोत्तमम् ॥ इति ।
नृसिंहपुराणेऽपि,
नारसिंहगृहे नित्यं यः संमार्जनमाचरेत् ।
सर्वपापविनिर्मुक्तो विष्णुलोके स मोदते ॥
गोमयेन मृदा तोयैर्यः करोत्यनुलेपनम् ।
चान्द्रायणफलं प्राप्य विष्णुलोके महीयते ॥
निर्माल्यमपनीयाथ तोयेन स्नाप्य केशवम् ।
नरसिंहाकृतिं राजन् नरः पापैः प्रमुच्यते ॥
गोप्रदानफलं प्राप्य यानेनामरशोभिना ।
नरसिंहपुरं प्राप्य मोदते कालमक्षयम् ॥
आगच्छ नरसिंहेति आवाह्याक्षतपुष्पकैः ।
एतावतापि राजेन्द्र सर्वपापाद्विमुच्यते ॥
पद्मासनमथार्घ्यं च पाद्यमाचमनीयकम् ।

देवदेवस्य विधिना सर्वपापैः प्रमुच्यते ॥
दत्त्वेति शेषः ।
एवं यः पूजयेद्राजन् नरसिंहं नरोत्तमः ।
तस्य स्वर्गापवर्गौ तु भवतो नात्र संशयः ॥
यत्र वै पूजितो विष्णुर्नरसिंहो नरैर्नृप ।
न राजन् तत्र दुर्भिक्षं राजचोरादिकं भयम् ॥
एवमादिफलोपेतं नारसिंहार्चनं नृप ।
कुरु त्वं नृपतेः पुत्र यदि वांछसि सद्गतिम् ॥
इतः परतरं नास्ति स्वर्गमोक्षफलप्रदम् ।
दरिद्रैः सुकरं कर्तुं देवदेवस्य पूजनम् ॥
मनो नियमयेदेकं विष्ण्वाराधनकर्मणा ।
मनो नियमितं येन मुक्तिस्तस्य करे स्थिता ॥
इत्येवमुक्तं भृगुनोदितेन मया तवेहार्चनमच्युतस्य ।
दिनेदिने त्वं कुरु विष्णुपूजां वदस्व वान्यत्कथयामि किं ते ॥
तथा प्रत्युपचाराणां फलं वच्मि फलार्थिनाम् ।
संमार्जनं हरेर्गेहे कृत्वा पापैः प्रमुच्यते ॥
विष्णुलोकं च गत्वाथ कल्पमेकं स तिष्ठति
अभ्युक्षणकृतां चैव विष्णुलोकः प्रसिध्यति ॥
उपलेपकृतां चैव चान्द्रायणफलं भवेत् ।
निर्माल्यमपनीयाग्रे स्नानं यः कुरुते हरेः ॥
गोप्रदानफलं तस्य खेचरत्वं च सिध्यति ।
तथा,

देवमाल्यापनयनं देवागारसमूहनम् ।
स्नपनं सर्वदेवानां गोप्रदानफलं स्मृतम् ॥
समूहनं मृदुश्लक्ष्णया मार्जन्या जन्तुपरिहारेण मार्जनम् ।

लोभाद्देवमाल्यापनयनं च निषिद्धं भविष्यपुराणे,

देवमुल्लुञ्चयेद्यस्तु तत्क्षणात्पुष्पलोभतः ।

पुष्पाणि च सुगन्धीनि पूजको नेतराणि यत् ॥

ब्रह्महत्यामवाप्येह पच्यते शाश्वतीः समाः ।

नरके इति शेषः । उल्लुञ्चनमत्र देवदत्तपुष्पादेर्दृष्टप्रयोजनाय निर्माल्यापनयनकालात्प्राक् हरणम् । निर्माल्यापनयनस्य प्रातःकाले विधानात् । देशकालानुरोधेन कालान्तरेपि तत्करणमदुष्टम् । पुष्पलोभत इति दृष्टार्थत्वेन निषेधात् ।

हलायुधः,

प्रातः काले सदा कुर्यान्निर्माल्योद्वासनं बुधः ।

हरेरिति शेषः ।

वाराहे,

निर्माल्यं मद्वपुर्लग्नं प्रातरेव विवासयेत् ।

यत्तु

गन्धपुष्पादिकं विष्णोः सूर्येऽस्ते नैव धारयेत् ।

तुलस्या मिश्रितं यच्च दिवारात्रौ न दुष्यति ॥

इति, तत् विगन्धम्लायमानपुष्पपरम् । यत्तु क्वचिन्मध्याह्ने निर्माल्यापनयनं प्रतीयते तत् प्रातः पूजितस्य पुनर्मध्याह्ने षोडशोपचारादिभिः पूजने क्रियमाणे निर्माल्यापनयनविषयम् । अन्यथा बहुवाक्यबाधापत्तेः ।

पञ्चरात्रे,

यः प्रातरुत्थाय कृताभिषेको निर्माल्यमीशस्य निराकरोति ।

न तस्य दुःखं न दरिद्रता च नाकालमृत्युर्न च रोगमात्रम् ॥

ईशस्य हरेः, प्रकरणात् ।

तथा तत्रैव,

अरुणोदयवेलायां निर्माल्यं शल्यतां व्रजेत् ।
प्रातस्तु स्यान्महाशल्यं घटिकामात्रयोगतः ॥
अतिशल्यं विजानीयात्ततो वज्रप्रहारवत् ।
अरुणोदयवेलायां शल्यं तत् क्षमते हरिः ॥
घटिकाया अतिक्रान्तौ क्षुद्रं पातकमावहेत् ।
मुहूर्त्ते समतिक्रान्ते पूर्णं पातकमुच्यते ॥
ततः परं ब्रह्मवधो महापातकपञ्चकम् ।
प्रहरे पूर्णतां याते प्रायश्चित्तं ततो नहि ॥
निर्माल्यनिराकरणम् उशीरकूर्चादिना मार्जनम् ।
उशीरकूर्चकं दत्त्वा सर्वपापैः प्रमुच्यते ॥
दत्त्वा गोवालजं कूर्चं सर्वपापान्यपोहति ।
इति विष्णुधर्मोत्तरात् । गौरत्र चमरी ।
उक्तञ्च तत्रैव,
दत्त्वा चामरजं कूर्चं श्रि[illegible]माप्नोत्यनुत्तमाम् ॥ इति ।
तथा,
देवस्यावाहने ज्ञेयं सर्वपापक्षयः फलम् ।
आसने स्थानमुत्कृष्टं सर्वपापक्षयो भवेत ॥
अर्घ्येऽनर्घ्यपदं सिध्येत् पापक्षयपुरःसरम् ।
पाद्ये श्रीपादभक्तिः स्याद्भक्त्या तत्रैव लीयते ॥
हरेराचमनं दत्वा सर्वपापैः प्रमुच्यते ।
आयुःपुष्टिर्भवेन्नित्यं वस्त्रोद्वर्त्तनदानतः ॥
तेजः पुष्टिश्च तुष्टिश्च भवेत्सौगन्धितैलतः ।
यवगोधूमकल्केन लेपने चोष्णवारिणा ॥
क्षालनाद्वारुणे लोके चिरकालं वसेद्ध्रुवम् ।
कषायोदकदानेन नित्यारोगी भवेद्बुधः ॥

बिल्वपत्रैश्च सङ्घर्षात् सर्वपापक्षयो भवेत् ।
अङ्गसौरभ्यमायुष्यं सुगन्धामलकाद्भवेत् ॥
लक्ष्मीसौभाग्यकान्तीश्च सर्वौषध्यम्बुनाप्नुयात् ।
पञ्चगव्यब्रह्मकूर्चस्नापनाद्विष्णुमाप्नुयात् ।
सन्तोषं सौख्यमारोग्यं सारूप्यं सप्तजन्मसु ॥
क्षीरेण स्नापिते विष्णौ व्रजेद्विष्णुपुरं नरः ।
दध्ना तु स्नापिते विष्णौ रूपी विष्णुपुरं व्रजेत् ॥
रूपी रूपवान् ।
घृतेन स्नपनात्सर्ववन्द्यो वैकुण्ठगो भवेत् ।
मधुना स्नापनाद्विष्णोरग्निलोकमवाप्नुयात् ॥
शुद्धोदकेन स्नपनात क्षीणपापो हरिं व्रजेत् ।
मृज्जलस्नपनाद्विष्णोर्मनःशुद्धिमवाप्नुयात् ॥
गन्धर्वलोकमाप्नोति स्नपनाच्चन्दनांभसा ।
सुगन्धितोयस्नपनात् वारुणं लोकमाप्नुयात् ॥
अलक्ष्मीनाशमाप्नोति स्नपनात् पल्लवाम्भसा ।
स्नपनात् कुशपुष्पाद्भिर्ब्रह्मलोकमवाप्नुयात् ॥
पुष्पाम्भःस्नपनात् लोकात् सावित्राद्विष्णुमाप्नुयात् ।
सवितृलोकद्वारा विष्णुं प्राप्नुयादित्यर्थः ।
फलाम्भः स्नपनाद्भक्त्या विष्णुलोकमवाप्नुयात् ।
स्वर्णाम्भः स्नपनात् विष्णोः कौबेरं पदमाप्नुयात् ॥
सावित्रं लोकमाप्नोति रत्नाम्भः स्नपनात्तथा ।
इहलोकाद्विष्णुलोकं कर्पूरागरुवारिणा ॥
चन्द्रलोकाद्विष्णुलोकं वस्त्रदानादवाप्नुयात् ।
इन्द्रलोकमवाप्नोति सर्वाभरणदानतः ॥
भक्त्या चन्दनदानेन विष्णुलोकमवाप्नुयात् ।

कल्पकोटिं वसेद्विष्णौ यक्षकर्दमदानतः ॥
अखण्डविल्वतुलसीसुगन्धकुसुमैर्हरिम् ।
आराध्य कोटिकल्पान् स विष्णुलोके वसेत्सुखी ॥
निष्पापो धूपदो वायोर्लोकाद्विष्णुमवाप्नुयात् ।
सन्ध्यादीपप्रदानाच्च अग्निलोके वसेच्चिरम् ॥
ऐश्वर्यं पुत्रलाभं च सौभाग्यं स्त्रियमेवच ।
वाचं पापक्षयं सौख्यमारोग्यं ब्रह्मणः पदम् ॥
अष्टासु दिक्षु मध्ये च वर्त्तीरुज्वाल्य यत्नतः ।
आरात्रिकप्रदानेन फलमेतदवाप्नुयात् ॥
वसेत्तण्डुलसंख्याकान् लोकान् नैवेद्यदो हरेः ।
हरेस्ताम्बूलदः प्रज्ञां मेधामैश्वर्यमाप्नुयात् ॥
शान्तिः श्रीश्च तथाऽऽरोग्यं भवेद्दिग्बलिदानतः ।
पृथ्व्याः प्रदक्षिणे यावत् फलं तावद्धरेरिति ॥
प्रदक्षिणादिति शेषः ।
नमस्कारं हरेः कृत्वा सायुज्यमधिगच्छति ।
स्तवैश्च क्षीणपापोऽसौ विष्णोर्लोकमवाप्नुयात् ॥
नृत्यादिकं हरेः कृत्वा कामरूपो हरिं व्रजेत् ।
कामवत् रूपं यस्य सः ।
विष्णुलोकमवाप्नोति धनदो गोष्ठकृत् तथा ।
सहस्रकपिलादानफलभाग् गोप्रदो हरेः ॥
कपिलादानतो विष्णोः सायुज्यमधिगच्छति ।
उद्वासनेऽपि सायुज्यमाप्नुयात् परमात्मनः ॥ इति ।

अत्र तत्तदुपचाराश्रिता न गुणकामाः, नापि द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यात्* इतिन्यायेन अत्र फलश्रुति-

* पू० मी० अ० ४ । पा० ३ । सू० १ ।

रर्थवादः । उपचाराणां श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां विनियोजकानामभावेन परस्परमङ्गाङ्गिभावाभावात् । किन्तर्हि, प्रधानफलान्येतानि । तत्र विधिभेदेन एकैकस्योपचारस्य फलवत्त्वेऽपि समुदितानामपि फलवत्त्वं पञ्चोपचारादिपूजायाः फलवत्त्वश्रवणात् । तद्यथा अग्निहोत्रादिकर्मणां 'अग्निहोत्रं जुहुयात् स्वर्गकाम' इत्यादिप्रातिस्विकफलश्रवणेऽपि 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन' इतिशतपथश्रुत्यां यज्ञादीनां सर्वेषां विविदिषारूपफलवत्ता श्रुत्या बोधिता तद्वदिहापीति न काप्यनुपपत्तिरिति ।

### अथ पात्रासादनप्रकारः ।

पुष्पसारसुधानिधौ,

अर्घ्यपात्रं तु वायव्ये नैर्ऋत्यां पाद्यपात्रकम् ।
आग्नेय्यां स्नानकलशमैशे त्वाचमनीयकम् ॥
मध्ये तु मधुपर्कं स्यादित्येतत्पात्रलक्षणम् ।

पात्रलक्षणं पात्रस्थापनलक्षणम् ।

### अथ पाद्यादिपात्रेषु प्रक्षेपणीयद्रव्याणि ।

रत्नकोशे,

पद्मं च विष्णुपर्णं च दूर्वां श्यामाकमेवच ।
चत्वारि पाद्यद्रव्याणि लब्धं वापि समाचरेत् ॥

उक्तेषु यल्लब्धम् ।

कुशाक्षततिलव्रीहियवमाषप्रियङ्गुभिः ।
सिद्धार्थकसमायुक्तमर्घ्यं स्यात्तु विशेषतः ॥
रक्तबिल्वाक्षतैः पुष्पैर्दधिदूर्वाकुशैस्तिलैः ।
सामान्यः सर्वदेवानामर्घोऽयं परिकीर्त्तितः ॥
अलाभे दधिदूर्वादेर्मनसापि विचिन्तयेत् ।

रक्तं कुङ्कुमम् । रक्तचन्दनमित्यन्ये ।
तथा,
आपः क्षीरं कुशाग्राणि दधि सर्पिश्च तण्डुलाः ।
*यवा सिद्धार्थकाश्चैव अष्टाङ्गोर्घः प्रकीर्त्तितः ॥*
आगमे,
गन्धपुष्पाक्षतयवकुशाग्रतिलसर्षपैः ।
सदूर्वैः सर्वदेवानामर्घोऽयं परिकीर्त्तितः ॥ इति ।
अन्यच्च,
शङ्खे कृत्वा तु पानीयं गन्धपुष्पाक्षतान्वितम् ।
अर्घं ददाति देवस्य ससागरधराफलम् ।
ससागरधरादानफलं प्राप्नोतीति शेषः ।
इक्षुर्मधु घृतं चैव पयो दधि सहैव तु ।
प्रस्थप्रमाणं वा ग्राह्यं मधुपर्कमिहोच्यते ॥
इक्षुः ऐक्षवम् ।
एलालवङ्गौशीरं च कक्कोलं च चतुर्थकम् ।
आचमनीयं विज्ञेयं यथालाभं प्रगृह्य वा ॥
अथ स्नानद्रव्यविधिः ।
गवां शतस्य विप्राणां यद्दत्तस्य भवेत्फलम् ॥
घृतप्रस्थेन तद्विष्णोर्भवेत्स्नानान्न संशयः ।
नरसिंहपुराणे,
क्षीरेण पूर्वं कुर्वीत दध्ना पश्चात् घृतेन च ॥
मधुना चाथ खण्डेन क्रमो ज्ञेयो विचक्षणैः ।
बृहन्नारदीये,
प्रस्थमात्रेण पयसो यः स्नापयति केशवम् ।
कुलायुतायुतयुतो विष्णोः सारिष्टिमाप्नुयात् ॥
सार्ष्टिरित्यर्थे सारिष्टिरित्यार्षम् । तदर्थः सौभाग्यं फलम् ।

कपिलाक्षीरमादाय शङ्खे कृत्वा जनार्दनम् ॥
यज्ञायुतसहस्रस्य स्नापयित्वा लभेत्फलम् ।
अन्यगोसम्भवं क्षीरं शङ्खे कृत्वा तु नारद ॥
यः स्नापयति देवेशं लभेत्पारायणं फलम् ।
पारायणं वेदाध्ययनजं फलम् ।
दध्यादीनां विकाराणां क्षीरतः संभवो यतः ।
दुःखानि सर्वपापानि क्षीरस्नानं ततो हरेत् ॥
नृसिंहपुराणे,
स्नाप्य दध्ना सकृद्विष्णुं निर्मलं प्रियदर्शनम् ।
विष्णुलोकमवाप्नोति सेव्यमानः सुरोत्तमैः ॥
बृहन्नारदीये,
घृतेन मधुना वापि दध्ना वा तत्फलं शृणु ।
सर्वयज्ञफलं प्राप्य सर्वपापविमोचितः ॥
वसेद्विष्णुपुरं कल्पं त्रिःसप्तपुरुषान्वितः ।
तत्रैव ज्ञानमासाद्य योगिनामपि दुर्लभम् ॥
तत्रैव मोक्षमाप्नोति पुनरावृत्तिदुर्लभम् ।
इक्षुक्षीरेण देवेशं यः स्नापयति केशवम् ॥
कुलायुतायुतयुतो विष्णुना सह मोदते ।
ब्राह्मे,
देवानां प्रतिमा यत्र घृताभ्यङ्गक्षमा भवेत् ।
पलानि तत्र देयानि श्रद्धया पञ्चविंशतिः ॥
अष्टोत्तरं पलशतं स्नाने देयं च सर्वदा ।
द्वे सहस्रे पलानां तु महास्नाने तु सङ्ख्यया ॥
दातव्यं येन सर्वासु दिक्षु निर्याति तद्घृतम् ।
अत्र घृतेत्युपलक्षणम् । तेन दुग्धादावपीयमेव सङ्ख्या। 'घृ-

ताभ्यङ्गक्षमा भवेत्' इत्यतश्चित्रमृन्मयादिप्रतिमायां स्नानाभ्यञ्जने न स्तः।

नारसिंहे,

यः पुनः पुष्पतैलेन दिव्यौषधियुतेन च।
अभ्यङ्गं कुरुते विष्णोस्तस्य प्रीतो भवेत्सदा॥
यवगोधूमयोश्चूर्णैरुद्वर्त्योष्णेन वारिणा।
प्रक्षाल्य देवदेवेशं वारुणं लोकमाप्नुयात्॥ इति।

जलस्नानमाह भारद्वाजः,

स्वच्छं सुशीतलं स्वादु लघु सत्पात्रपूरितम्।
आनीतं सज्जनैर्यत्तत्सलिलं श्रेष्ठमुच्यते॥

गरुडपुराणे,

तुलसीमिश्रतोयेन स्नापयन्ति जनार्दनम्।
पूजयन्ति च भावेन धन्यास्ते भुवि मानवाः॥

नारसिंहे,

पुष्पोदकेन गोविन्दं स्नाप्य भक्त्या नरोत्तम।
सावित्रं लोकमासाद्य विष्णुलोके महीयते॥

स्कन्दपुराणे,

शङ्खे कृत्वा तु पानीयं साक्षतं कुसुमान्वितम्।
स्नापयेद्देवदेवेशं हन्यात्पापं पुराकृतम्॥
क्षिप्त्वा गन्धोदकं शङ्खे यः स्नापयति केशवम्।
नमो नारायणायेति मुच्यते योनिसङ्कटात्॥
वादित्रनिनदैरुच्चैर्गीतमङ्गलसंस्तवैः।
यः स्नापयति देवेशं जीवन्मुक्तो भवेद्धि सः॥
वादित्राणामभावे तु पूजाकाले च सर्वदा।
घण्टाशब्दो नरैः कार्यः सर्ववाद्यमयो यतः॥

सर्ववाद्यमयी घण्टा देवदेवस्य वल्लभा ।
तस्मात्सर्वप्रयत्नेन घण्टानादं तु कारयेत् ॥
विष्णुं स्नानार्द्रगात्रं तु वस्त्रेण परिमार्जति ।
तस्य भक्त्या हृषीकेशः कुरुते पापमार्जनम् ॥

अथ वस्त्रम् ।

अग्निपुराणे,

दुकूलपट्टकौशेयकार्पासराङ्कवादिभिः ।
वासोभिः पूजयेद्देवं सुशुभ्रैरात्मनः प्रियैः ॥

तथा,

वस्त्राणि सुपवित्राणि सारवन्ति मृदूनि च ।
रूपवन्ति हरेर्दत्वा सदशानि नवानि च ॥
यावद्वस्त्रस्य तन्तूनां परिमाणं भवत्यथ ।
तावद्वर्षसहस्राणि विष्णुलोके महीयते ॥

नारसिंहे,

वस्त्राभ्यामच्युतं भक्त्या परिधाप्य विचित्रितम् ।
सोमलोके रमित्वा तु विष्णुलोके महीयते ॥

भरद्वाजः,

नेत्रप्रियाणि सूक्ष्माणि नूतनानि घनानि च ।
न्यायागतानि वस्त्राणि प्रशस्तानि भवन्ति हि ॥

अथ निषिद्धानि ।

बौधायनः,

परिहितमधिरूढमप्रक्षालितं प्रावरणीकृतं मनुष्यसंयुक्तं न देवतासु युञ्जीयात् ।

आखुदष्टानि दग्धानि जीर्णान्यन्यैर्धृतानि च ।
कृमिदष्टानि शीर्णानि स्थूलान्युपहतानि च ।

दुष्कर्मसु प्रयुक्तानि देवताभिधृतानि च ॥
स्यूतान्यन्यायलब्धानि न स्युः शस्तानि जातुचित् ।
वाराहे,
नीलीरञ्जितवस्त्रं यो मर्त्यो मह्यं निवेदयेत् ।
नवमक्षालितं चैव स चिरं रौरवं वसेत् ॥
वस्त्रं कार्पासम् ।
ऊर्णायां पट्टवस्त्रे वा नीलीरागो न दुष्यति । इत्युक्तेः ।

अथ यज्ञोपवीतम् ।

यज्ञोपवीतदानेन सुरेभ्यो ब्राह्मणाय वा ।
भवेद्विप्रश्चतुर्वेदी शुद्धधीर्नात्र संशयः ॥
नरसिंहपुराणे,
त्रिवृच्छुक्लं च पीतं च पट्टसूत्रादिनिर्मितम् ।
यज्ञोपवीतं गोविन्दे दत्वा वेदान्तगो भवेत् ॥
त्रिवृत् नवगुणम् ।
नन्दिपुराणे,
अलङ्कारं च यो दद्याद्विप्राय च सुराय च ।
सोमलोके रमित्वा तु विष्णुलोके महीयते ॥
स्वशक्त्या देवदेवेशं भूषणैर्भूषयन्ति ये ।
हेमजै रत्नजैः शुभ्रैर्मणिजैश्च सुशोभितैः ॥
तेषां फलं शतानन्दो न रुद्रो वासवादयः ।
जानन्ति मुनयो नैव वर्जयित्वा तु माधवम् ॥
नृसिंहपुराणे,
सुवर्णाभरणैर्दिव्यैर्हारकेयूरकुण्डलैः ।
मुकुटैः कटकाद्यैस्तु यो विष्णुं पूजयेन्नृप ॥
सर्वपापविनिर्मुक्तः सर्वभूषणभूषितः ।

इन्द्रलोके वसेच्छ्रीमान् यावदिन्द्राश्चतुर्दश ॥ इति ।

अथ गन्धाः ।

नरसिंहपुराणे,

कुङ्कुमागुरुश्रीखण्डकर्पूरेणाच्युताकृतिम् ।
आलिप्य भक्त्या राजेन्द्र कल्पकोटिं वसेद्दिवि ॥
चन्दनागुरुकर्पूरकुङ्कुमोशीरपद्मकैः ।
अनुलिप्तो हरिर्भक्त्या वरान् भोगान् प्रयच्छति ॥

पद्मपुराणे,

गन्धेभ्यश्चन्दनं पुण्यं चन्दनादगुरुर्वरः ।
कृष्णागुरुस्ततः श्रेष्ठः कुङ्कुमं तु ततो वरम् ॥
कालेयं च तुरुष्कं च रक्तचन्दनमेव च ।
नृणां भवन्ति दत्तानि पुण्यानि पुरुषोत्तमे ॥

नारदीये,

सचन्दनं सकर्पूरं कुङ्कुमागुरुमिश्रितम् ।
मृगनाभिसमायुक्तं जातीफलविमिश्रितम् ॥
तुलसीचन्दनोपेतं महाविष्णोः सुखावहम् ।
अनुलेपनमिति शेषः ।

गारुडे,

कस्तूरिकाया भागौ द्वौ चत्वारश्चन्दनस्य तु ।
कुङ्कुमस्य त्रयश्चैव शशिनः स्याच्चतुःसमम् ॥
कर्पूरं चन्दनं दर्पः कुङ्कुमं च चतुःसमम् ।
सर्वगन्धमिति प्रोक्तं समस्तसुरवल्लभम् ॥

विष्णुधर्मोत्तरे,

दारिद्र्यं पद्मकं कुर्यादस्वास्थ्यं रक्तचन्दनम् ।
उशीरं विप्र विभ्रंशमन्ये कुर्युरुपद्रवम् ॥ इति ।

एतानि केवलानि निषिद्धानि। मिलितानि विहितानि ।
त्रिपलं चन्दनं प्रोक्तं कुङ्कुमं तत्समं स्मृतम् ॥
कर्पूरं तु तदर्धं स्यात् घनसारश्च तत्समः ।
पलेनैकेन कस्तूरीमिलनाद्यक्षकर्दमः ॥
यथालाभानिमान् विद्वान् कलयेत्सङ्ख्यया ऽनया ।
एवं कर्त्तुमशक्तश्चेदेकैकेनापि पूजयेत् ॥ इति ।

**वाराहपुराणे,**

कर्पूरं कुङ्कुमं चैव त्वचं तगरमेवच ।
रक्तं च चन्दनं चैव अगुरुं गुग्गुलं तथा ॥
एतैर्विलेपनं दद्यात् सुरभिं तु विचक्षणः ।

**वामनपुराणे,**

चन्दनेनानुलिम्पेत कुङ्कुमेन तु यत्नतः ।
उशीरपद्मकाभ्यां चँ तथा कालेयकादिना ॥
सुगन्धैश्च सुरामांसीकर्पूरागुरुचन्दनैः ।
तथाऽन्यैश्च शुभैर्द्रव्यैरर्चयेज्जगतः पतिम् ॥

**तथा नारसिंहे,**

बकुलस्य च निर्यासैरग्निष्टोमफलं लभेत् ।
बकुलागुरुमिश्रेण चन्दनेन सुगन्धिना ॥
समालभ्य जगन्नाथं पौण्डरीकफलं लभेत् ।
एकीकृत्य च सर्वाणि समालभ्य जनार्दनम् ॥
अश्वमेधस्य यज्ञस्य फलं प्राप्नोत्यसंशयम् ।
कामगेन विमानेन विचरत्यमरप्रभः ॥
योऽनुलिम्पेत देवेशं कीर्तितैरनुलेपनैः ।
पार्थिवाद्यानि यावन्ति परमाणूनि तत्र वै ॥
तावदब्दानि लोकेषु कामचारी भवत्यसौ ।

तथा,

तुलसीकाष्ठसम्भूतं चन्दनं यच्छतो हरेः ।
निर्याति पातकं सर्वं पूर्वजन्मशतैः कृतम् ॥
यो ददाति हरेर्नित्यं तुलसीकाष्ठचन्दनम् ।
युगानि वसते स्वर्गे अनन्तानि नरोत्तम ॥

पाद्मे,

सर्वेषामपि देवानां तुलसीकाष्ठचन्दनम् ।
पितॄणां च विशेषेण सदाभीष्टं हरेर्यथा ॥
तावत्कस्तूरिकामोदः कर्पूरस्य सुगन्धिता ।
यावन्न दीयते विष्णोस्तुलसीकाष्ठचन्दनम् ॥
तुलसीदललग्नेन चन्दनेन जनार्दनम् ।
विलेपयति यो नित्यं लभते चिन्तितं फलम् ॥
न तेन सदृशो लोके वैष्णवो भुवि विद्यते ।
यः प्रयच्छति कृष्णस्य तुलसीकाष्ठचन्दनम् ॥
तुलसीचन्दनालिप्तः कुरुते हरिपूजनम् ।
पूजितेन दिनैकेन लभते शतवार्षिकम् ॥
पुण्यमिति शेषः ।
यो हि भागवतो भूत्वा कलौ तुलसिचन्दनम् ।
न चार्पयति वै विष्णोर्न स भागवतो नरः ॥
मृतिकाले तु संप्राप्ते तुलसीतरुचन्दनम् ।
भवेच्च यस्य देहे तु हरिर्भूत्वा हरिं व्रजेत् ॥

अथ पुष्पाणि ।

तत्र तुलसीसमर्पणादिमहिमा ।

हारीतः,

तुलस्यौ पङ्कजे जात्यौ केतक्यौ करवीरके ।

शस्तानि दश पुष्पाणि तथा रक्तोत्पलानि च ॥

स्कान्दे,

तुलसीं ये विचिन्वन्ति धन्यास्ते करपल्लवाः ।
केशवार्थे कलौ ये तु रोपयन्तीह भूतले ॥
किं करिष्यति संरुष्टो यमोऽपि सह किङ्करैः ।
तुलसीदलैस्तु देवेशः पूजितो येन दुःखहा ॥
मणिकाञ्चनपुष्पाणि तथा मुक्तामयानि च ।
तुलसीदलमात्रस्य कलां नार्हन्ति षोडशीम् ॥

पाद्मे ,

तुलसीमञ्जरीभिर्यः कुर्याद्धरिहरार्चनम् ।
न स गर्भगृहं याति मुक्तिभागी भवेन्नरः ॥
आरोप्य तुलसीं वैश्य संपूज्य तद्दलैर्हरिम् ।
वसन्ति मोदमानास्ते यत्र देवश्चतुर्भुजः ॥
तावत् गर्जन्ति पुष्पाणि मालत्यादीनि भूरिशः ।
यावन्न प्राप्यते कृष्णा तुलसी विष्णुवल्लभा ॥
तावद्गर्जन्ति रत्नानि कौस्तुभादीनि भूतले ।
यावन्न प्राप्यते कृष्णतुलसीपत्रमञ्जरी ॥

पत्रसहिता मञ्जरीति व्युत्पत्तिबलात् मञ्जर्यां पत्रसाहित्यमपेक्षितम् ।

तुलसी कृष्णगौरा च तयाऽभ्यर्च्य जनार्दनम् ।
नरो याति तनुं त्यक्त्वा वैष्णवीं शाश्वतीं गतिम् ॥

तथा पाद्मे वृन्दोपाख्याने,

सत्त्वं प्रीतिकरं वाक्यं कोपस्तस्यास्तु तामसः ।
भावद्वयं हरौ जातं तत्तद्वर्णद्वयं बभूव ॥

तस्या वृन्दायाः ।

श्यामापि तुलसी विष्णोः प्रिया गौरी विशेषतः ।
यत्फलं सर्वपुष्पेषु सर्वपत्रेषु नारद ॥
तुलसीदलेन देवर्षे प्राप्यते केशवार्चनात् ।
तुलसीं प्राप्य यो नित्यं न करोति ममार्चनम् ॥
तस्याहं प्रतिगृह्णामि न पूजां शतवार्षिकीम् ।
तुलसीदलपूजाया मया वक्तुं न शक्यते ॥
अत्यन्तवल्लभा सा हि शालग्रामाभिधे हरौ ।
तथा,
पूर्वजन्मन्यसौ लेभे कृष्णसंयोगमुत्तमम् ।
अस्या एवहि शापेन माधवो भक्तवत्सलः ॥
असौ वृन्दा । अस्या वृन्दायाः ।
शालग्रामशिलाभावं प्राप्तश्चित्सुखविग्रहः ॥
यथाहि वासुदेवस्य वैकुण्ठो भोगविग्रहः ।
शालग्रामशिलारूपं स्थावरं भुवि विद्यते ॥
तथा लक्ष्म्यैक्यमापन्ना तुलसी भोगविग्रहः ।
अपरं स्थावरं रूपं भुवि लोकहिताय वै ॥
इदं तु शालग्रामशिलायां फलातिशयार्थम् ।
यत्तु तुलसीं प्रति वासुदेववाक्यं स्कान्दे,
करवीरप्रसूनं वा मल्लिका वाथ चम्पकम् ।
उत्पलं शतपत्रं वा पुष्पेष्वन्यतमं तु वा ॥
त्वत्पत्ररहितं चेत्तु पत्रं वा पुष्पमेव वा ।
सुवर्णेन कृतं पुष्पं राजतं रत्नमेव वा ॥
मम पादाब्जपूजायामनर्हं भवति ध्रुवम् ।
तत् तुलसीसद्भावे प्राशस्त्यसूचकम् ।
गारुडे,

तुलसीदलजां मालामेकादश्यां विशेषतः ।
मुच्यते सर्वपापेभ्यो यद्यपि ब्रह्महा भवेत् ॥ इति ।
भगवते दत्त्वा, धृत्वेति वा शेषः ।
तन्मूलमृत्तिकां चाङ्गे कृत्वा स्नाति दिने दिने ।
दशाश्वमेधावभृथस्नानजं लभते फलम् ॥
तुलसीदलसंमिश्रं तोयं गङ्गासमं विदुः ।
यो वहेच्छिरसा नित्यं धृता भवति जाह्नवी ॥
तुलसीदलसंमिश्रं यस्तोयं शिरसा वहेत् ।
सर्वतीर्थाभिषेकस्तु तेन प्राप्तो न संशयः ॥
तुलसीकाननच्छाया यत्र यत्र भवेद्द्विज ।
तत्र श्राद्धं प्रकर्त्तव्यं पितृणां तृप्तिहेतवे ॥
पितृपिण्डार्चनं श्राद्धे यैः कृतं तुलसीदलैः ।
तर्पिताः पितरोऽत्यर्थं यावच्चन्द्रार्कमेदिनी ॥
तुलसीमृत्तिका यत्र काष्ठं पत्रं च वेश्मनि ।
तिष्ठन्ति मुनिशार्दूल न दूरे वैष्णवं पदम् ॥
तुलसीमृत्तिकालिप्तो यदि प्राणान् विमुञ्चति ।
याति विष्ण्वन्तिकं नित्यं यदि पापशतैर्युतः ॥
प्रयाणकाले यस्यास्ये दीयते तुलसी यदि ।
निर्वाणं याति पक्षीन्द्र पापकोटियुतोऽपि सन् ॥
प्रयाणकाले मरणकाले ।

स्कान्दे,

शरीरं दह्यते येषां तुलसीकाष्ठवह्निना ।
न तेषां पुनरावृत्तिर्विष्णुलोकात् कथञ्चन ॥
ग्रस्तो यदि महापापैरगम्यागमनादिभिः ।
मृतः शुद्ध्यति दाहेन तुलसीकाष्ठवह्निना ॥

दत्त्वा तु तुलसीकाष्ठं सर्वाङ्गेषु मृतस्य च ।
पश्चाद्यः कुरुते दाहं सोऽपि पापात्प्रमुच्यते ॥
तीर्थं यदि न सम्प्राप्तं कीर्त्तनं स्मरणं हरेः ।
तुलसीकाष्ठदग्धस्य न तस्य पुनुरावृत्तिः ॥
यद्येकं तुलसीकाष्ठं मध्ये काष्ठशतस्य हि ।
दाहकाले भवेन्मुक्तिः पापकोटियुतस्य च ॥
गङ्गाम्भसो विशेषेण यान्ति तोयानि पुण्यताम् ।
तुलसीकाष्ठामिश्राणि यान्ति दारूणि पूतताम् ॥
दह्यमानं नरं दृष्ट्वा तुलसीकाष्ठवह्निना ।
नीयमानो यमेनाशु विष्णुलोकं स गच्छति ॥
जन्मकोटिसहस्रैस्तु पूजितो यैर्जनार्दनः ।
दह्यन्ते ते नराः सर्वे तुलसीकाष्ठवह्निना ॥
तुलसीपावकेनैव दीपं यः कुरुते हरेः ।
दीपलक्षसहस्राणां पुण्यं भवति दैत्यज ॥

**विष्णुधर्मोत्तरे,**

होमं कुर्वन्ति ये विप्रास्तुलसीकाष्ठवह्निना ।
सिक्थे सिक्थे तिले वापि अग्निष्टोमफलं भवेत् ॥
यो ददाति हरेर्धूपं तुलसीकाष्ठवह्निना ।
मेरुतुल्यं भवेद्दत्तं तद्दत्तं केशवस्य हि ॥
तुलस्या कुरुते यस्तु शालग्रामशिलार्चनम् ।
द्वात्रिंशदपराधांश्च क्षमते तस्य केशवः ॥

**ब्रह्मपुराण,**

लिङ्गमभ्यार्चितं दृष्ट्वा प्रतिमां केशवस्य हि
तुलसीपत्रनिकरैर्मुच्यते ब्रह्महत्यया ॥
अभिन्नपत्रां हरितां हृद्यमञ्जरिसंयुताम् ।

क्षीरोदार्णवसम्भूतां तुलसीं दापयेद्धरिम् ॥

पाद्मे,

तुलसीकाननं वैश्य गृहे यस्मिंस्तु तिष्ठति ।
तद्गृहं तीर्थभूतं हि न यान्ति यमकिङ्कराः ॥
तावद्वर्षसहस्राणि यावद्बीजदलानि च ।
वसन्ति वैष्णवे लोके तुलसीं रोपयन्ति ये ॥
रोपणात्पालनात्सेकाद्दर्शनात्स्पर्शनान्नृणाम् ।
तुलसी दहते पापं वाङ्मनःकायसञ्चितम् ॥

श्रीवासुदेववाक्यम्—

तुलसीपत्रमादाय यः करोति ममार्चनम् ।
पुनर्न योनिमायाति मुक्तिभागी भवेद्धि सः ॥

स्कान्दे,

तुलसीगन्धमादाय यत्र गच्छति मारुतः ।
दिशश्च विदिशः पूता भूतग्रामश्चतुर्विधः ॥
उपोष्य द्वादशीं शुद्धां पारणे तुलसीदलम् ।
प्राशयेद्यदि विप्रेन्द्रश्चाश्वमेधाष्टकं लभेत् ॥
तुलसीकानने यस्तु मुहूर्त्तमपि विश्रमेत् ।
कोटिजन्मशतात् पापात् मुच्यते नात्र संशयः ॥

गारुडे,

मुखे तु तुलसीपत्रं दृष्ट्वा शिरसि कर्णयोः ।
कुरुते भास्करिस्तस्य दुरितस्यापमार्जनम् ॥

पाद्मे,

अस्नात्वा तुसलीं छित्वा सोपानत्कस्तथैवच ।
स याति नरके घोरे यावदाभूतसंप्लवम् ॥
न ददाति गयां गत्वा पिण्डं पुत्रो महामुने ।

तुलसीकानने श्राद्धं दत्त्वा सन्तारयेत्पितॄन् ॥
तुलसीमूलमध्ये तु यः क्षिपेत्तर्पणोदकम् ।
भवन्ति पितरस्तृप्ता द्वादशाब्दानि भूमिप ॥
तुलस्यां तर्पणं ये च पितॄनुद्दिश्य मानवाः ।
कुर्वन्ति तेषां पितरस्तृप्ता वर्षायुतं जलैः ॥
दृष्टा स्पृष्टा रक्षिता च महापातकनाशिनी ।
कृष्णार्चनार्थं विप्राणां यच्छन्ति तुलसीदलम् ॥
अन्येषामपि भक्तानां ते यान्ति परमं पदम् ।
विप्रा मन्त्राः कुशा वह्निस्तुलसी च खगेश्वर ॥
न ते निर्माल्यतां यान्ति क्रियमाणाः पुनः पुनः ।
समञ्जरिदलैर्युक्तं तुलसीसम्भवैः क्षितौ ॥
कुर्वन्ति पूजनं विष्णोस्ते कृतार्थाः कलौ युगे ।
स्नाने दाने तथा ध्याने प्राशने केशवार्चने ॥
तुलसी दहते पापं कीर्त्तने रोपणे कलौ ।
तुलस्यमृतनामासि सदा त्वं केशवप्रिया ॥
केशवार्थं विचिन्वामि वरदा भवशोभने ।
त्वदङ्गसम्भवैर्नित्यं पूजयामि यथा हरिम् ॥
तथा कुरु पवित्राङ्गि कलौ मलविनाशिनि ।
मन्त्रेणानेन यः कुर्यात् गृहीत्वा तुलसीदलम् ॥
पूजनं वासुदेवस्य लक्षपूजाफलं लभेत् ।
पूजा न सा या तुलसीं विना कृता
स्नानं न तद्यत्तुलसीं विना कृतम् ।
भुक्तं न तद्यत्तुलसीविवर्जितं ।
पीतं न तद्यत्तुलसीविवर्जितम् ॥
विष्णुधर्मोत्तरे,

रविवारं विना दूर्वां तुलसीं द्वादशीं विना ।
जीवितस्याविनाशाय प्रविचिन्वीत धर्मवित् ॥
तथा,
पक्षे पक्षे तु सम्प्राप्ते द्वादश्यां मुनिसत्तम ।
ब्रह्मादयोऽपि कुर्वन्ति तुलसीवनपूजनम् ॥
सङ्क्रान्तावर्कपक्षान्ते द्वादश्यां निशि सन्ध्ययोः ।
अर्कः रविवारः ।
यैश्छिन्नं तुलसीपत्रं तैश्छिन्नो हरिमस्तकः ॥
पाद्मे,
द्वादश्यां तुलसीपत्रं धात्रीपत्रं च कार्त्तिके ।
लुनाति स नरो गच्छेन्नरकानतिगर्हितान् ॥
देवार्थे तुलसीछेदो होमार्थे समिधस्तथा ।
इन्दुक्षये न दुष्येत गवार्थे तु तृणस्य च ॥
इत्यास्तां प्रसक्तानुप्रसक्तिः ।
धर्मसारे,
शालग्रामशिलामूर्ध्नि तुलसीपत्रपातनम् ।
कर्मनिर्मलनायोक्तमेकादश्यामभोजनम् ॥
योऽर्चयेद्धरिपादाब्जं तुलस्याः कोमलैर्दलैः ।
न तस्य पुनरावृत्तिर्ब्रह्मलोकात् कथञ्चन ॥
पद्मपुराणे,
सुगन्धितुलसीपत्रैः प्रतिमायाः समन्ततः ।
निश्छिद्रमास्तरेद्यस्तु सोऽनन्तफलमाप्नुयात् ॥
न विप्रसदृशं पात्रं न दानं सुरभीसमम् ।
न गङ्गया समं तीर्थं न पत्रं तुलसीसमम् ॥
तुलसीपत्रसममन्यत्पत्रं नास्तीत्यर्थः ।

त्यक्त्वा तु मालतीपुष्पं पुष्पाण्यन्यानि च प्रभुः ।
गृह्णाति तुलसीं शुष्कामपि पर्युषितां प्रभुः ॥
वर्ज्यं पर्युषितं पत्रं वर्ज्यं पर्युषितं जलम् ।
न वर्ज्यं जाह्नवीतोयं न वर्ज्यं तुलसीदलम् ॥
अपामार्गदलं पुण्यं तस्माद् भृङ्गरजस्य च ।
तस्माच्च खादिरं श्रेष्ठं शमीपत्रं ततः परम् ॥
दूर्वापत्रं ततः श्रेष्ठं ततश्च कुशपत्रकम् ।
ततो दमनकं श्रेष्ठं ततो बिल्वस्य पत्रकम् ॥
बिल्वपत्रादपि हरेस्तुलसीपत्रमुत्तमम् ।
तुलसीदललक्षेण योऽर्चयेद्रुक्मिणीपतिम् ॥
जन्मार्जितसहस्रस्य पापस्य कुरुते क्षयम् ।
शुद्धकाञ्चनपुष्पाणि रत्नमुक्ताफलान्यपि ॥
सर्वाणि तुलसीपत्रकलां नार्हन्ति षोडशीम् ।
योगिनां निर्वृतौ वाञ्छा कामिनां तु रतौ यथा ॥
पुष्पेष्वपि च सर्वेषु तुलस्यां तु तथा हरेः ।
सर्वेषु पुष्पेषु सत्स्वपि हरेस्तुलस्यां रतिरित्यर्थः ।
विष्णुरहस्ये,
सकृदभ्यर्च्य गोविन्दं बिल्वपत्रेण मानवः ।
मुक्तिभागी निरातङ्कः कृष्णस्यानुचरो भवेत् ॥
अग्निपुराणे,
बिल्वपत्रं शमीपत्रं पत्रं भृङ्गरजस्य च ।
तमालपत्रं च हरेः सद्यस्तुष्टिकरं परम् ॥
अस्यापवादः ।
शमीपत्राणि दूर्वाश्च भृङ्गराजस्तथैव च ।
सुप्ते देवे न देयानि निद्राभङ्गकराणि वै ॥

वामनपुराणे,

बिल्वपत्रं शमीपत्रं पत्रं भृङ्गरजस्य च ।
तमालामलकीपत्रं प्रशस्तं केशवार्चने ॥

विष्णुपुराणे,

शमीपत्रैश्च ये देवं पूजयन्ति जनार्दनम् ।
यममार्गो महाघोरो निस्तीर्णस्तैस्तु नारद ॥
दूर्वाङ्कुरं हरेर्यस्तु पूजाकाले प्रयच्छति ।
पूजाफलं शतगुणं सम्यगाप्नोति मानवः ॥

नरसिंहपुराणे,

दश दत्त्वा सुवर्णानि यत्फलं लभते नरः ।
तत्फलं लभते मर्त्यो विष्णोः कुसुमदानतः ॥

विहितपुष्पमात्रफलमेतत् । तत्रैव,

पुष्पैररण्यसंभूतैः पत्रैर्वा गिरिसंभवैः ।
अपर्युषितनिश्छिद्रैः प्रोक्षितैर्जन्तुवर्जितैः ॥
आत्मारामोद्भवैर्वापि पुष्पैः संपूजयेद्धरिम् ।

आत्मनः स्वस्य आरामः पुष्पवाटिका ।

विष्णुधर्मोत्तरे,

धर्मार्जितधनक्रीतैर्यः कुर्यात् केशवार्चनम् ।
उद्धरिष्यत्यसन्देहं दश पूर्वांस्तथाऽपरान् ॥
आरामोत्थैस्तु कुसुमैर्यः कुर्यात् केशवार्चनम् ।
एतदेव समाप्नोति नात्र कार्या विचारणा ॥

नारसिंहे,

द्रोणपुष्पे तथैकस्मिन् माधवाय निवेदिते ।
दत्त्वा दश सुवर्णानि यत्फलं तदवाप्नुयात् ॥
द्रोणपुष्पसहस्रेभ्यः खादिरं वै प्रशस्यते ।

खादिरपुष्पसहस्रेभ्यः शमीपुष्पं विशिष्यते ॥
शमीपुष्पसहस्रेभ्यो बकपुष्पं विशिष्यते ।
बकपुष्पसहस्राद्धि नन्द्यावर्तो विशिष्यते ॥
नन्द्यावर्त्तसहस्राद्धि करवीरं विशिष्यते ।
करवीरस्य पुष्पाद्धि श्वेतं तत्पुष्पमुत्तमम् ॥
कुशपुष्पसहस्राद्धि वनमल्ली विशिष्यते ।
वनवल्लीसहस्राद्धि चाम्पकं पुष्पमुत्तमम् ॥
चांम्पकात् पुष्पसाहस्रादशोकं पुष्पमुत्तमम् ।
अशोकपुष्पसाहस्रात् वासन्तीपुष्पमुत्तमम् ॥
वासन्तीपुष्पसाहस्रात् गोजटापुष्पमुत्तमम् ।
गोजटापुष्पसाहस्रात् मालतीपुष्पमुत्तमम् ॥
मालतीपुष्पसाहस्रात् त्रिसन्ध्यं रक्तमुत्तमम् ।
त्रिसन्ध्यरक्तसाहस्रात् त्रिसन्ध्यश्वेतकं वरम् ॥
त्रिसन्ध्यश्वेतसाहस्रात् कुन्दपुष्पं विशिष्यते ।
कुन्दपुष्पसहस्राद्धि शतपत्रं विशिष्यते ॥
शतपत्रसहस्राद्धि मल्लिकापुष्पमुत्तमम् ।
मल्लिकापुष्पसाहस्रात् जातीपुष्पं विशिष्यते ।
सर्वासां पुष्पजातीनां जातीपुष्पमिहोत्तमम् ॥
जातीपुष्पसहस्रेण यस्तु मालां प्रयच्छति ।
विष्णवे विधिवद्भक्त्या तस्य पुण्यफलं शृणु ॥
कल्पकोटिसहस्राणि कल्पकोटिशतानि च ।
वसेद्विष्णुपुरे श्रीमान् विष्णुतुल्यपराक्रमः ॥
मल्लिकामालतीजातीकेतकाशोकचम्पकैः ।
पुन्नागनागबकुलैः पद्मैरुत्पलजातिभिः ॥
एतैर्वन्यैश्च कुसुमैः प्रशस्तैरच्युतं नरः ।

अर्चयंश्च सुवर्णस्य प्रत्येकं फलमाप्नुयात् ॥
एवं हि राजन् नरसिंहमूर्त्तेः प्रियाणि पुष्पाणि तवेरितानि ।
एतैश्च नित्यं हरिमर्च्य भक्त्या नरो विशुद्धो हरिमेव याति ॥
स्कान्दे,
अगस्त्यवृक्षसंभूतैः कुसुमैरसितैः सितैः ।
येऽर्चयन्ति हि देवेशं तैः प्राप्तं परमं पदम् ॥
आग्नेये,
मालती मल्लिका चैवं यूथिका चातिमुक्तकः ।
पाटला करवीरं च जपा यावन्तिरेव च ॥
कुब्जकस्तगरश्चैव कर्णिकारः कुरण्टकः ।
चम्पको धातकः कुन्दो बाणो बर्बरमल्लिका ॥
अशोकास्तिलकश्चम्पस्तथा चैवाटरूषकः
अमी पुष्पाकराः सर्वे शस्ताः केशवपूजने ॥
वामनपुराणे बलिं प्रति प्रह्लादवाक्यम्,
तान्येव च प्रशस्तानि कुसुमानि महासुर ।
यानि स्युर्वर्णयुक्तानि रसगन्धयुतानि च ॥
जाती शताह्वा सुमनाः कुन्दं चारुपुटं तथा ।
बाणं च चम्पकाशोकं करवीरं च यूथिका ॥
पारिभद्रं पाटला च बकुलं गिरिशालिनी ।
तिलकं जम्बुवनजं पीतकं तगरं तथा ॥
एतानि तु प्रशस्तानि कुसुमान्यच्युतार्चने ।
सुरभीणि तथान्यानि वर्जयित्वा तु केतकीम् ॥
जाती सुवर्णजाती । शताह्वा शतपुष्पा । सुमनाः जाती । चारुपुटः कर्णिकारः । गिरिशालिनी अपराजिता । कुब्ज इत्यन्ये । जम्बुवनजं जपाकुसुमम् । पीतकं पुष्पमाणक् । केतकी-

*निषेधस्तु गोपालमूर्त्त्यतिरिक्तमूर्त्तिपूजापरः ।*

**विष्णुधर्मोत्तरे,**

सुवर्णकेतकीपुष्पं यो ददाति जनार्दने ।
कोटिजन्मार्जितं पापं दहते गरुडध्वजः ॥

सुवर्णकेतकी सुवर्णकेतकी । तस्या नरसिंहपुराणगौतमीतन्त्रयोर्विधानात् इत्याहुः । वनकेतक्येव निषिद्धेति माधवमानसोल्लासः ।

अत एव आग्नेये,

पत्रेणैकेन केतक्याः पूजितो मधुसूदनः ।
सहस्रमब्दं सुप्रीतो भवेच्च गरुडध्वजः ॥

अन्यच्च,

अर्चयित्वा हृषीकेशं कुसुमैः केतकोद्भवैः ।
पुण्यवद्भवनं याति केशवस्य निरामयम् ॥
केतकीपत्रपुष्पं च भृङ्गराजस्य पत्रकम् ।
तुलसी कृष्णतुलसी सद्यस्तुष्टिकरं हरेः ॥

अत्र पत्रं च पुष्पं चेति समाहारद्वन्द्वो न युक्तः केतक्याः पुष्पदान इव पत्रदाने शिष्टाचारादर्शनात् । किंतर्हि, कर्मधारयोऽत्र युक्तः । एवं च सति केतक्याः पत्ररूपं यत्पुष्पं तद्देयमित्यर्थः। समाहारेऽपि पुष्पस्यैव पत्रं नतु पुष्पावयवाभिन्नं पत्रम् । एवं च म्पकादेः पुष्पेणेव पत्रेण पूजाऽपि युक्ता, शिष्टाचारात् । यत्र तु पत्रेण पूजनविधिस्तत्र पत्रपूजैव युक्तेति ।

**विष्णुधर्मोत्तरे,**

केतकीपत्रमादय मिथुनस्थे दिवाकरे ।
यैरर्चितो हरिर्भक्त्या प्रीतो मन्वन्तरं मुने ॥

पत्रशब्दः पुष्पावयवपरः ।

एकयापि हि केतक्या यदा सम्पूज्यते हरिः ।
पूजितो द्वादशाब्देन केशवस्तेन निश्चितम् ॥
योऽर्चयेत्केतकीपुष्पैः कृष्णं कलिमलापहम् ।
पत्रे पत्रेऽश्वमेधस्य फलं यच्छति केशवः ॥
सकृत् कदम्बपुष्पेण हेलया हरिरर्चितः ।
सप्तजन्मानि देवर्षे तस्य लक्ष्मीर्न दूरगा ॥
अभ्यर्च्य कुन्दकुसुमैः केशवं कल्मषापहम् ।
प्रयाति भवनं विष्णोर्वन्दितं मुनिचारणैः ॥
येऽर्चयन्ति जगन्नाथं करवीरैः सितासितैः ।
चतुर्युगानि विप्रेन्द्र प्रीतो भवति केशवः ॥
तथा,
बन्धुजीवस्य पुष्पाणि रक्तान्यपि निवेदयेत् ।
कृत्रिमेणानुलेपेन गन्धेनापि सुगन्धिना ॥
धूपेन पटवासेन चन्दनाद्यनुलेपनैः ।
मध्येऽन्यवर्णो यस्य स्यात् शुक्लस्य कुसुमस्य च ॥
पुष्पं युक्तं तु विज्ञेयं मनोज्ञं केशवप्रियम् ।
अरण्यादाहृतैः पुष्पैर्मूलपत्रफलाङ्कुरैः ॥
यथोपगन्धैः सततमभ्यर्चयति केशवम् ।
सर्वकामप्रदो देवस्तस्य स्यान्मधुसूदनः ॥
तथा शुक्लान्यवर्णं च दातव्यं कुङ्कुमस्य यत् ।
पद्मोत्पले च धर्मज्ञ तथा वै पीतयूथिका ॥
तथा च चम्पकं दद्याच्चूतकेतकिजं च यत् ।
रक्ताशोकस्य कुसुममतसीकुसुमं तथा ॥
वृक्षायुर्वेदविधिना शुक्लं रक्तं कृतं च यत् ।
तद्रक्तमपि दातव्यं बिल्वपत्रं तथैव च ॥

तथा,

कुङ्कुमस्य तु पुष्पाणि बन्धुजीवस्य चाप्यथ ।
चम्पकस्य च देयानि तथा भूचम्पकस्य च ॥
पीतयूथिकजान्येव नीपबन्धूकजान्यपि ।
मञ्जर्यः सहकारस्य तथा देव जनार्दने ॥
भूचम्पकः यस्य पत्राभावेऽपि मूलात्पुष्पमुद्गच्छति ।

तथा,

जातीनामपि सर्वासां शुक्ला जातिः प्रशस्यते ।
तथा पुरन्ध्रिपुष्पैर्यः कुर्यात्पूजां मधुद्विषः ॥
तस्य प्रसादमायाति देवश्चक्रगदाधरः ।
रम्याः पुरन्ध्रिमञ्जर्यो दयितास्तस्य नित्यशः ॥

तथा,

श्वेतैः पुष्पैः समभ्यर्च्य सर्वान् कामानवाप्नुयात् ।
ऐश्वर्यं प्राप्नुयाल्लोके पीतैरेवं समर्चयन् ॥
शत्रूणामभिचारेषु तथा कृष्णैः समर्चयन् ।
सुवर्णपुष्पदानेन राजसूयफलं लभेत् ॥
दत्तमात्रं हरेः पुष्पं निर्माल्यं भवति क्षणात् ।
उपभुङ्क्ते त्वहोरात्रं मालत्याः कुसुमं हरिः ॥
कर्णिकारमयैः पुष्पैः कान्तैः कनकसप्रभैः ।
अर्चयित्वाऽच्युतं लोके मम लोके महीयते ॥
तिलकस्योज्वलैः पुष्पैः सम्पूज्य मधुसूदनम् ।
धूतपापो निरातङ्कः कृष्णस्यानुचरो भवेत् ॥
गोकर्णनागकर्णाभ्यां तथा बिल्वदलेन च ।
अर्चयित्वाऽच्युतं देवं देवानामधिपो भवेत् ॥
मञ्जरीकेतकीपुष्पैः कुसुमैस्तामिरोद्भवैः ।

अलङ्कृत्वा नरः कृष्णं कृतार्थो विष्णुलोकभाक् ॥
तथा,
भक्त्या दूर्वाङ्कुरैश्चैव पूजितः परमेश्वरः ।
हरिर्ददाति हि फलं सर्वयज्ञैः सुदुर्लभम् ॥
ननु दूर्वामयैः पुष्पैः तथा काशकुशोद्भवैः ।
भवनं समलङ्कृत्य विष्णुलोके व्रजेन्नरः ॥
विविधैः कुसुमैरन्यैर्जन्ममृत्युजरापहम् ।
पूजयित्वाऽच्युतं विष्णुं याति विष्णुमनामयम् ॥
तथा,
मालतीबकुलाऽशोकशेफालीनवमल्लिकाः ।
आम्रातनगरास्फोतामल्लिकामधुमल्लिकाः ॥
यूथिकाष्टपदं स्कंदं कदम्बं मधुपिङ्गलम् ।
पाटला चम्पकं हृद्यं लवङ्गमतिमुक्तकम् ॥
केतकं कुरवं बिल्वं कह्लारं वासकं द्विजाः ।
पञ्चविंशतिपुष्पाणि लक्ष्मीतुल्यप्रियाणि मे ॥
तथा,
येषां न प्रतिषेधोऽस्ति गन्धवर्णान्वितानि च ॥
तानि पुष्पाणि देयानि विष्णवे प्रभविष्णवे ।
विष्णुरहस्ये,
मारवं केतकीपुष्पं तथा दमनकं मुने ।
उत्तमां तु हरेः प्रीतिं करोति शतवार्षिकीम् ॥
मारवं मरुवकभवम् ।
अपराधसहस्राणि अपराधशतानि च ।
कमलैकेन देवेशं योऽर्चयेत् कमलाप्रियम् ॥
वर्षायुतसहस्रस्य पापस्य कुरुते क्षयम् ।

तत्त्वसागरसंहितायां नारदेन्द्रसंवादे,
तत्र सङ्क्षेपतो वक्ष्ये पुष्पदानविधिक्रमम् ।
द्विविधं पुष्पमाख्यातं शुद्धं निर्माल्यमेव च ।
मानसं शुद्धमित्युक्तं निर्माल्यं बाह्यमुच्यते ।
बाह्यपुष्पसहस्राणां सहस्रायुतकोटिभिः ॥
पूजिते यत्फलं पुंसां तत्फलं त्रिदशाधिप ॥
मानसेनैकपुष्पेण विद्वानाप्नोत्यसंशयम् ।
तस्मान्मानसमेवातः शस्तं पुष्पं मनीषिणाम् ॥
इन्द्र उवाच ।
बाह्यं पुष्पं तु निर्माल्यं यदि तस्मात्फलं कथम् ।
पूजकानां भवेदेतद्वद नारद मे स्फुटम् ॥
नारद उवाच ।
निर्माल्यं द्विविधं प्रोक्तमुत्सृष्टं घ्रातमेव च ।
मन्त्रेण विधिना दत्तं देवायोत्सृष्टमेव तत् ॥
न क्रियान्तरयोग्यं तत् सर्वथा त्याज्यमेव च ।
घ्रातपुष्पफलं सिद्ध्येदल्पं तन्मनसाऽन्यथा ॥
जातमात्राणि पुष्पाणि घ्रातान्येव निसर्गतः ।
अल्पबुद्धित्वतो नृणां बाह्यपुष्पैर्भवेत् क्रिया ॥
बाह्यान्यपि च पुष्पाणि पञ्चधोक्तानि जातितः ।
परं चैवापरं चान्यदुत्तमं मध्यमाधमम् ॥
मणिरत्नसुवर्णादिनिर्मितं कुसुमोत्तमम् ।
तत्परं कुसुमं प्रोक्तमपरं चित्रवस्त्रजम् ॥
उत्तमं वृक्षजं पुष्पं मध्यमं फलरूपकम् ।
अधमं कुसुमं प्रोक्तं पत्रिकाजातमेव वा ॥
पराणामपराणां च निर्माल्यत्वं न विद्यते ।

तेषामपि परं पुष्पं निर्माल्यं न कदाचन ॥
यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठन्ति देवताः ।
*परं पुष्पं न निर्माल्यं तावत् प्रोक्तं सुराधिप ॥*
वस्त्रमभ्युक्षणाच्छुध्येदपरं तु दिने दिने ।
उत्तमानि च पुष्पाणि प्रतिसन्ध्यं तु कानि चित् ॥
निर्माल्यानि भवन्त्येव कानि चिन्नैव वासव ।
मध्यमं चाधमं चैव निर्माल्यं प्रतिसन्ध्यतः ॥
पञ्चधा भिन्नपुष्पाणां फलमुद्देशतः शृणु ।
परेणैकेन पुष्पेण मन्त्रपूर्वं सुभाविताम् ॥
देवतां सकृदभ्यर्च्य सर्वान् कामानवाप्नुयात् ।
कृत्वा पापसहस्राणि पातकानि महान्त्यपि ॥
स्वर्णपुष्पेण चैकेन पूज्य मुक्तिमवाप्नुयात् ।
एकं तु नलिनं स्वर्णपुष्पं कृत्वा समर्चयेत् ॥
सर्वपापाद्विनिर्मुक्तः शाश्वतीं गतिमाप्नुयात् ।
किम्पुना रत्नमुक्तादिखचितं स्वर्णपुष्पकम् ॥
आरोप्य प्रतिमामूर्द्धिन पूजया सिद्धिभाग्भवेत् ।
वस्त्रनिर्मितपुष्पैस्तु पूजयित्वेष्टदेवताम् ॥
साधयेदीप्सितं कामं सत्यमेतद्ब्रवीमि ते ।
वस्त्रपुष्पार्चको विद्वान् जन्मजन्मान्तरेष्वपि ॥
सुवासा जायते सत्यं नानावस्त्रार्चिताकृतिः ।
तत्राप्युत्कृष्टवस्त्रैश्च नेत्रपट्टोलिकादिभिः ॥
नेत्रं परिधानीयवस्त्रम् । पट्टोलिका पट्टदुकूलम् ।
प्रभामण्डलमाच्छाद्य पट्टिकां च विशेषतः ॥
अर्चयेद्वस्त्रपुष्पैश्च सर्वान् कामानवाप्नुयात् ।
परं चैवापरं चैव पुष्पं प्रोक्तं यथातथा ॥

वृक्षवल्ल्यादिपुष्पाणां शृणु मे लक्षणं यथा ।
स्वयम्पतितपुष्पाणि कालातीतानि चैव हि ॥
*मुक्त्वा भ्रमरमेकं तु घ्राण्याघातानि यानि च ।*
मुकुलात्प्रातिफुल्लानि कुरूपाण्यथवा तथा ॥
कुपात्रान्तरसंस्थानि कुत्सितस्थानजानि च ॥
वह्निकीटानि चान्यानि विशोभान्यशुभानि वै ।
एवं विधानि पुष्पाणि त्याज्यान्येव विचक्षणैः ॥

**विष्णुरहस्ये,**

न शुष्कैः पूजयेद्देवं कुसुमैर्न महीगतैः ।
न विशीर्णदलैः स्पष्टैर्नाशुभैर्नाविकासिभिः ॥
पूतिगन्धीन्यगन्धीनि अम्लगन्धीनि वर्जयेत् ।

**तथा,**

गन्धवन्त्यपवित्राणि उग्रगन्धीनि वर्जयेत् ।
गन्धहीनमपि ग्राह्यं पवित्रं यत्कुशादिकम् ॥

**गारुडे,**

चतुष्पथे शिवावासे श्मशानस्यापि मध्यतः ।
न गन्धफलपुष्पाद्यमाददीतार्चने बुधः ॥

**विष्णुधर्मोत्तरे,**

न गृहे करवीरोत्थैः कुसुमैरर्चयेद्धरिम् ।
पतितैर्मुकुलैर्म्लानैश्चाम्लैर्वा जन्तुदूषितैः ॥
आघ्रातैरङ्गसंस्पृष्टैरुषितैश्चैव नार्चयेत् ।
गृहे करवीरोत्थैः गृहकरवीरजातैरित्यर्थः ।
बन्धूककरवीरे तु न गृहे रोपयेत्क्वचित् ।
इति वामनोक्तेः, उषितैः पर्युषितैः ।

तथा,

नार्कं नोन्मत्तकं काञ्चीं तथैव गिरिकार्णिकाम् ।
न कण्टकारिकापुष्पमच्युताय निवेदयेत् ॥
कौटजं शाल्मलीपुष्पं शैरीषं च जनार्दने ।
निवेदितं भयं शोकं निःस्वतां च प्रयच्छति ॥

निःस्वतां दारिद्र्यम् ।

करानीतं पटानीतमानीतं चार्कपत्रके ।
एरण्डपत्रेऽप्यानीतं तत्पुष्पं सकलं त्यजेत् ॥

करोऽत्र वामकरः । पटः अधोवस्त्रम् ।

अत एव,

देवोपरिधृतं यच्च वामहस्ते च यद्धृतम् ।
अधोवस्त्रधृतं यच्च तत्पुष्पं परिवर्जयेत् ॥

विष्णुः,

नोग्रगन्धि पुष्पं नच कण्टकिजं कण्टकिजमपि शुक्लं सुगन्धिपत्रं दद्यात् । न रक्तं रक्तमपि जलजं कुङ्कुमजमपि दद्यात् ।

विष्णुधर्मोत्तरे,

श्मशानचैत्यद्रुमजं भूमाववनिपातजम् ।
कलिका तु न दातव्या देवदेवस्य चक्रिणः ॥

रक्तं करवीरपुष्पं तु पूर्वोदाहृतवचनबलाच्छिष्टाचाराच्च देयमेव ।

करवीरस्य पुष्पाणि तथा धत्तूरकस्य च ।
कृष्णं च कुटजं चार्कं नैव देयं जनार्दने ॥

इति यद्वाक्यं तत् गृहोत्थकरवीरविषयम् तस्य पूर्वोदाहृतवाक्यनिषेधात् ।

गन्धोत्कटानि शुभ्राणि दीप्तिदीधितिमन्ति च ।
घनच्छन्नदलाग्राणि घनकेसरकाणि च ॥

मधुमन्त्यविकीर्णानि स्वकालाहृतकानि च ।
शुभपात्रान्तरस्थानि शुचिहस्ताहृतानि च ॥
गन्धवन्ति मनोहारिकान्तिकान्तानि यानि वै ।
पुष्पाणां लक्षणं प्रोक्तं हेयोपादानवर्त्मना ॥
फलानामथ पत्राणां हेयोपादानलक्षणम् ।
शृणु तत्रैव वक्ष्यामि यथातथ्यफलाप्तये ॥
विहितानि फलान्येव निर्व्रणानि मृदूनि च ।
शुभबीजानि रम्याणि फलान्युक्तानि पूजने ॥
पत्रिका च शुभा रम्या कोमलाऽमलरूपिणी ।
कृमिकेशपतङ्गादिदोषानुपहताऽऽकृतिः ॥
शुभगन्धवती श्लक्ष्णा पत्रिका पापहारिणी ।
वैष्णवान्यपि पुष्पाणि संक्षेपेण निबोध मे ॥
रक्तोत्पलशतेनापि यत्फलं पूजिते नृणाम् ।
श्वेतोत्पलेन चैकेन तत्फलं समवाप्नुयात् ॥
श्वेतानामेकलक्षेण यत्फलं पूजिते भवेत् ।
नीलोत्पलेन चैकेन तत्फलं समवाप्नुयात् ॥
नीलोत्पलायुतानां तु लक्षकोट्ययुतायुतैः ।
समर्चिते हृषीकेशे यत्फलं देहिनां भवेत् ॥
तत्फलं समवाप्नोति पद्मेनैकेन पूजकः ।
किमन्यैर्बहुभिः पुष्पैर्नैवेद्यैर्वान्नसाधनैः ॥
पद्मेनैकेन संपूज्य कृष्णं विष्णुपुरं व्रजेत् ।
अवशेनापि चैकेन पद्मेन मधुसूदनम् ॥
यदा तदापि वाऽभ्यर्च्य नरो विष्णुपुरीं व्रजेत् ।
एकया वापि केतक्या यदा संपूज्यते हरिः ॥
पूजितो द्वादशाब्देन केशवस्तेन निश्चितम् ।

करवीरकपुष्पेण रक्तेनाथ सितेन वा ।
मुचुकुन्दस्य चैकेन संपूज्य गरुडध्वजम् ॥
यावच्चन्द्रश्च सूर्यश्च स्वर्गे भुक्त्वा ततः पुनः ।
पुरीं नारायणीं याति सत्यमेतन्मयोदितम् ॥
जातिभिर्मल्लिकाभिश्च पुन्नागैर्नागचम्पकैः ।
अकाले चाप्यभक्त्या च तथैवामन्त्रपूर्वकम् ॥
श्रीपतिं सकृदभ्यर्च्य श्रियं पूर्णामवाप्नुयात् ।
चम्पकैर्नन्दिकावर्त्तैः कुन्दैश्चैव कुरण्टकैः ॥
बाणैश्च शतपत्रैश्च माधवैः कुसुमैस्तथा ।
अकाले वाप्यभक्त्या वा तथैवामन्त्रपूर्वकम् ॥
संपूजितो नृणां विष्णुः सर्वान् कामान् प्रयच्छति ।
किंपुनर्भक्तिपूर्वं तु मन्त्रपूतं सनातनम् ।
अर्चयन् कुसुमैरेतैर्मुक्तिभागी भवेन्नरः ।
यो जपाकुसुमैकेन नारसिंहमथापरम् ॥
जलशायिनमभ्यर्च्य सर्वान् कामानवाप्नुयात् ॥
मालतीकुसुमैश्चान्यैः कुसुमैः कुटजोद्भवैः ।
नारायणं समभ्यर्च्य परं स्वर्गे महीयते ॥
कर्णिकारमयैः पुष्पैर्बकुलैः केसरैः शुभैः ।
गोकर्णनामकर्णानां कुसुमैश्च सुगन्धिभिः ॥
कह्लारैश्च तथा कुन्दैः कदम्बैरर्जुनैस्तथा ।
सकृदभ्यर्च्य संपूज्य सर्वान् कामानवाप्नुयात् ॥
एवं पुष्पाणि देवेन्द्र संक्षेपेणोदिता नि वै ।
वैष्णवानि प्रसिद्धानि पुष्पाण्यन्यानि मे शृणु ॥
यानि यानि च रम्याणि गन्धवन्त्यमलानि च ।
वन्यानि च शुभान्येवमन्यान्याभिनवानि च ॥

मनोहारीणि शुद्धानि कुसुमान्युत्कटानि वै ।
याभिश्च पत्रिकाभिश्च पूजितो यत्फलप्रदः ॥
ताः समासेन वक्ष्यामि पत्रिका हरितोषिकाः ।
आद्या तु तुलसीपत्री तया संपूजितो हरिः ॥
सकृन्मन्त्रेण देवेन्द्र सर्वदा पूजितो भवेत् ।
यत्र यत्र भवेदिन्द्र तुलसीपत्रिका शुभा ॥
तत्र तत्र स्थितो विष्णुर्मुक्तये पुरुषस्य वै ।
अष्टोत्तरशतैः शुद्धैर्बिल्वपत्रैर्जनार्दनम् ॥
यस्तु पूजयते भक्त्या सोपि विष्णुपुरीं व्रजेत् ॥
शमीपत्रैः सकृत्पूज्य विष्णुं विश्वेश्वरं हरिम् ।
सर्वान् कामानवाप्नोति सत्यमेतन्मयोदितम् ॥
दूर्वयाऽगस्त्यपत्रैश्च श्रीदेव्या विष्णुयोषिता ॥
तमालैश्चाच्युतं पूज्य नरः पापात्प्रमुच्यते ।
येषां पुष्पाणि पत्राणि कथितानि मया तव ॥
तत्फलैश्चार्चयेद्विष्णुं विनैकं करवीरकम् ।
पनसैः कदलीभिश्च मातुलिङ्गैश्च दाडिमैः ॥
नारङ्गैश्चैव जम्बीरैः पूर्वोक्तैर्नारिकेलकैः ।
सर्वधान्यौषधीभिश्च फलैश्चान्यैः सुशोभनैः ॥
पूजयेद्योऽच्युतं भक्त्या स वै मोक्षैकभाजनम् ।
एवं सङ्क्षेपतः प्रोक्तो वैष्णवः पुष्पसङ्ग्रहः ॥
एतैरेवोक्तपुष्पैर्यः स्रजो बद्धा विचक्षणः ।
अर्चयेत्सकृदप्येतं स याति परमां गतिम् ॥
प्रतिमायाः प्रमाणेन मालामेतां सुपुण्यकाम् ।
आरोप्य निखिलैः पुष्पैर्वन्द्यमानो दिवं व्रजेत् ॥
यः पुनः स्वयमुद्यानं कृत्वा पुष्पं तदुद्भवम् ।

आदाय च स्रजा बद्धा तांभदेवं समर्चयेत् ॥
सर्वलोकेश्वरो भूत्वा ततो मुक्तिमवाप्नुयात् ।
तेन यागाः कृताः सर्वे दानानि निखिलानि वै ॥
देवताः पूजिताः सर्वास्तीर्थानि निखिलानि वै ।
पुष्पोद्यानं कृतं येन हस्तमात्रमथापि वा ॥
नृत्यन्ति सकला देवा गायन्ति हर्षसङ्कुलाः ।
क्रियमाणं शुभोद्यानं दृष्ट्वा सन्तोषगर्विताः ॥
प्रमादेनाथ भक्त्या वा लोभाद्दम्भात्तथैव च ।
वितस्तिमात्रकं वापि हस्तमात्रमथापि वा ॥
उद्यानं स्थिरमुत्कृष्टं यः करोति कलौ युगे ।
किं तेन न कृतं पुण्यमश्वमेधादिसंज्ञितम् ॥
यावदुद्यानभूमिश्च यावच्चन्द्रदिवाकरौ ।
तावत्तत्पितरः स्वर्गे मोदन्ते देवराडिव ॥
तेऽपि दूता यमस्यान्ते दृष्ट्वैवोद्यानकारकम् ।
नित्यं दूरात्पलायन्ते तमो भानुकरादिव ॥
तस्माद्बुद्धिमता कार्यं मानुष्ये जन्म भाजिना ।
वित्तानुरूपमुद्यानं कृत्वा मुक्तिमवाप्नुयात् ॥
योऽपि दूरात्समाहृत्य सुपुष्पाणि च पत्रिकाम् ।
महारथं समुद्धाह्य पूजयेद्देवतां बुधः ॥
सर्वपापक्षयस्तस्य तत्क्षणादेव जायते ।
जीवन् कामान् प्रभुज्येह मृतो मुक्तिमवाप्नुयात् ॥
पुनर्जन्मनि सम्भूतो यदि तां भुवमश्नुते ।
पुष्पाणि तत्फलं चैव यथा यस्य तु यद्भवेत् ॥
तत्सर्वं तेऽधुना प्रोक्तं यथाशास्त्रविनिश्चयम् ।
केषांचिदपि पुष्पाणां शृणु निर्माल्यताविधिम् ॥

अहोरात्रं न निर्माल्यं पालाशं ब्रह्ममूर्धनि।
कैतकं चैव ह्रीबेरं सुगन्धोत्पलमेव च॥
त्रिकालोत्थितमन्यद्वा पुष्पजातं सुरार्चितम्।
निजगन्धक्षयं यावन्नास्ति तेषां सुराधिप॥
शङ्करेण विना तेषु सर्वदैव स्थितेष्वपि।
नास्ति निर्म्माल्यता तेषां तावदित्याह भागुरिः॥

ह्रीबेरं मुंडिवालेति कार्णाटकभषया। महाराष्ट्रभाषया करमाळ।

तथा,

जम्बूजम्बीरखर्जूरबीजपूराम्रसंभवम्।
वदर्यामलनारङ्गदाडिमं पनसोद्भवम्॥
कदलीनालिकेरोत्थं तथा च लकुचोद्भवम्।
फलं प्रशस्तमुद्दिष्टं विष्णुपूजाविधौ बुधैः॥
मन्त्रिपत्रं दमनकं तमालो बर्बरी तथा।
अपामार्गमतिश्रेष्ठं पत्रं विष्ण्वर्चने सदा॥
न द्रोणैरर्चयेत्सिंहं मनसापि सदा बुधः।

सिंहम् नृसिंहम्।

स्वर्णपुष्पाद्दशगुणमखण्डं बिल्वपत्रकम्।
अखण्डैर्बिल्वपत्रैस्तु नृसिंहं यः प्रपूजयेत्॥
सप्तजन्मकृतं पापं क्षिप्रमेव विनश्यति।
पुष्पाभावे फलं शस्तं फलाभावे तु पल्लवम्॥
पल्लवस्याप्यभावे तु सलिलं ग्राह्यमिष्यते।
पुष्पाद्यसंभवे देवं पूजयेत्सिततण्डुलैः॥
व्रीहिभिर्वा यवैर्वापि तिलैः कृष्णैर्विशेषतः।
यद्वा पर्युषितैश्चापि पुष्पाद्यैरविकारिभिः॥

गन्धोदकेन वास्त्रेण त्रिः प्रोक्ष्यैव प्रपूजयेत् ।
स्कन्दपुराणे,
कदम्बकुसुमैर्हृद्यैर्ये यजन्ते जनार्दनम् ।
तेषां यमालयो नैव प्रसादाच्चक्रपाणिनः ॥
येऽर्चयन्ति शमीपत्रैः प्रमादेनापि केशवम् ।
ते प्रसन्ने हृषीकेशे नरा यान्ति परां गतिम् ॥
हरिं भृङ्गरजेनापि येऽर्चयन्ति सुरेश्वरम् ।
अपि युक्ता जरारोगैर्नरा यान्ति हरेः पदम् ॥
योऽर्चयति तमालस्य पत्रैः पापहरं हरिम् ।
धूतपाप्माऽच्युतावासं प्रयाति सुकृती नरः ॥
वीरुधां तु प्रवालेन वर्हिषा चार्चयेत्सदा ।
नानारूपैश्चाम्बुभवैः कमलेन्दीवरादिभिः ॥
प्रवालैः शुचिभिः श्लक्ष्णैर्जलप्रक्षालितैर्वले ।
वनस्पतीनामर्चयेत् तथा दूर्वाग्रपल्लवैः ॥ इति ।
विष्णुधर्मोत्तरे,
भृङ्गराजस्य बिल्वस्य बकपुष्पस्य च द्विजाः ।
जम्ब्वाम्रबीजपूराणां पत्राणि विनिवेदयेत् ॥
फलानि च सुगन्धीनि पर्णानि सुमृदूनि च ।
तेन पुण्यमवाप्नोति पुष्पदानसमुद्भवम् ॥
सुगन्धैर्मल्लिकापुष्पैरर्चयित्वाऽच्युतं नरः ।
सर्वपापविनिर्मुक्तो विष्णुलोके महीयते ॥
योऽर्चयेत्पाटलापुष्पैः सर्वपापहरं हरिम् ।
स तु पुण्यतरं स्थानं वैष्णवं लभते नरः ॥
अतिरक्तैर्महापुण्यैः कुसुम्भैः करवीरकैः ।
अर्चयित्वाऽच्युतं याति यत्रास्ते गरुडध्वजः ॥

गन्धाढ्यैर्निर्मलैर्वन्यैः कुसुमैः कुब्जकोद्भवैः ।
भक्त्याभ्यर्च्य हृषीकेशं श्वेतद्वीपे वसेन्नरः ॥
शुभ्राशुभ्रैर्महागन्धैः कुसुमैः पङ्कजोत्पलैः ।
अधोक्षजं समभ्यर्च्य नरो याति हरेः पदम् ॥

**रत्नावल्याम्,**

जलजानां च सर्वेषां पत्राणामहतस्य च ।
कुशपुष्पस्य रजतसुवर्णकृतयोस्तथा ॥
न पर्युषितदोषोऽस्ति तीर्थतोयस्य चैवहि ।
मुकुलैर्नार्चयेद्देवं चम्पकैर्जलजैर्विना ॥ इति ।
तत्र प्रवालमुक्तादिपुष्पैरभ्यर्च्य केशवम् ।
सर्वपापविनिर्मुक्तो मुक्तो भवति मानवः ॥
कदम्बमल्लिकाकुन्दमालत्युत्पलजातिभिः ।
बकुलाशोकपुन्नागकेतकैरतिमुक्तकैः ॥
कुब्जचम्पकपुष्पैश्च रक्तपुष्पैश्च यो हरिम् ।
अर्चयेद्दशसौवर्णफलं प्रत्येकमाप्नुयात् ॥
योऽर्चयेद्विधिवद्भक्त्या विष्णुं नीलोत्पलैः शुभैः ।
नागचम्पकपुन्नागमल्लिकाकुसुमैर्हरिम् ॥
सकृदभ्यर्चयेत् भक्त्या पूर्णां श्रियमवाप्नुयात् ।
सुवर्णपुष्पमालाभी राजसूयफलं लभेत् ॥
जातीपुष्पशतैर्मालां केशवाय निवेदयेत् ।
धेनुदानसहस्रेण फलं प्राप्नोत्यसंशयम् ॥
मालां दद्यान्माधवाय जातीपुष्पसहस्रकैः ।
कल्पकोटिसहस्राणि विष्णुलोके महीयते ॥
मालतीकल्पितां मालामीषद्विकसितां हरेः ।
दत्त्वा [illegible] द्विपेन्द्र वाजिमेधायुतं फलम् ॥

फलेष्वामलकं श्रेष्ठं जम्बूबदरिकाफलम् ।
दाडिमं मातुलिङ्गं च जम्बीरं पनसोद्भवम् ॥
कदलीचूतखर्जूरनारिकेलकपित्थकम् ।
नित्यं प्रशस्तमुद्दिष्टं विष्णुपूजाविधौ बुधैः ॥
अतिपक्कमपक्कं च फलं सम्परिवर्जयेत् ।
अपक्कमपिच ग्राह्यं कदलीफलमुत्तमम् ॥
मञ्जरीं सहकारस्य केशवोपरि नारद ।
ये यच्छन्ति महाभागा गोकोटिफलभागिनः ॥
यवगोधूममाषाश्च व्रीहयः कुशसर्षपाः ।
तिलश्यामाकनीवारा ग्रामारण्याश्च वैष्णवाः ॥
औषध्य एता निर्दिष्टा विष्णुमेताभिरर्चयेत् ।
पत्रं पुष्पं फलं तोयं भक्त्या देयं जनार्दने ॥
तेन लोकानवाप्नोति भक्तिरेवात्र कारणम् ।
अहिंस्रः सत्यवादी च दृढभक्तिर्जितेन्द्रियः ॥
यैरेवाभ्यर्चयेद्विष्णुं पुष्पैस्तैरेव मुक्तिभाक् ॥

हारीतः,

स्नानं कृत्वा तु ये केचित् पुष्पं गृह्णन्ति वै द्विजाः ।
देवतास्तन्न गृह्णन्ति भस्मीभवति काष्ठवत् ॥

स्नानमत्र प्रातः स्नानातिरिक्तं, प्रातः स्नानोत्तरं पुष्पाहरणादिविधानात् ।

तत्त्वसागरसंहितायाम्,

वर्जनीयानि यानि स्युस्तानि मे शृणु चक्रिणः ।
गिरिकर्णिकापुष्पाणि पुष्पाण्यर्कस्य चैवहि ॥
धत्तूरस्य च पुष्पाणि कुटजस्य तथैवच ।
एरण्डकारिकापुष्पं शाल्मलीकुसुमं तथा ॥

शिरीषस्य च पुष्पाणि शैवान्यन्यानि यानि च ।
एतानि वर्जितान्येव विष्णुमेतैर्न पूजयेत् ॥

*विष्णुरहस्ये,*

यैरनर्च्यैस्त्रिलोकेशमर्चयन्ति जनार्दनम् ।
तेभ्यः क्रुद्धः क्षयं दुःखं क्रोधाद्विष्णुः प्रयच्छति ॥
उन्मत्तकेन ये मूढाः पूजयन्ति त्रिविक्रमम् ।
उन्मादं दारुणं तेषां ददाति गरुडध्वजः ॥
कोशातक्यर्कधत्तूरशाल्मलीगिरिकर्णिका ।
कपित्थलाङ्गुलीशिग्रुकोविदारशिरीषकैः ॥
अज्ञानात्पूजयेद्विष्णुं नरो नरकमाप्नुयात् ।
अर्कपुष्पैर्विनाशः स्याद्धत्तूरैर्मतिविभ्रमः ॥
कोविदारैस्तु दारिद्र्यं गिरिकर्ण्या कुलक्षयः ।
कण्टकारिकया शोकः कुटजैर्दुःखसङ्गमः ॥
शाल्मलीकुसुमारोपे स्वपापैरनुलिप्यते ।
न्यग्रोधोदुम्बरप्लक्षसपिप्पलकपीतनैः ॥
कोविदारैश्च तत्पत्रैर्नैव विष्णुं प्रपूजयेत् ।
विहितप्रतिषिद्धैस्तु विहितालाभतोऽर्चयेत् ॥ इति ।

विहितालाभत इति अप्रतिषिद्धविहितालाभे विहितप्रतिषिद्धैरर्चयेदित्यनुकल्पः । विहितालाभे अप्रतिषिद्धानामनुकल्पो द्रष्टव्यः ।

स्मृत्यर्थसारे,

समित्पुष्पकुशादीनि श्रोत्रियः स्वयमाहरेत् ।
शूद्रानीतैः क्रयक्रीतैः कर्म कुर्वन् पतत्यधः ॥

अत्र क्रयक्रीतैः अन्यायोपार्जितधनक्रीतैः । पूर्वग्रन्थे न्यायार्जितधनक्रीतैः पुष्पैरभ्यर्चयेदिति न्यायपदोपादानादयमर्थो-

ऽवगम्यते । यद्वा विहितप्रतिषिद्धत्वात्षोडशिग्रहणाग्रहणवद्विकल्पः ।

प्रातरुत्थाय चिनुयात्स्वारामात्स्वयमेव हि ।
पूजार्थमस्त्रमन्त्रेण पुष्पादीन् प्रयतः सदा ॥

अत्र प्रातर्वचनं अष्टधाविभक्तस्याऽह्नो द्वितीयभागोपलक्षणार्थम् ।

अत एव दक्षः,

समित्पुष्पकुशादीनां द्वितीयः परिकीर्त्तितः । इति ।

यायादरण्यमथवा संवादरहितं शुभम् ।
त्रिधिनैव गृहीतैस्तु दर्भैर्वा प्रोक्षितैः सदा ॥
शुद्धैरेव यजेद्यत्नान्नच चौर्यादुपाहृतैः ।
अस्वामिकवनानीतं स्वीकृतं विक्रयेण च ॥
फलेत देवपूजायां निष्फलं याचितं तु यत् ।
क्रीतं शिष्यादिनानीत पुष्पं पूजार्थमुच्यते ॥
प्रक्षाल्य पाणी पादौ च आचम्य च कृताञ्जलिः ।
पादपाभिमुखो भूत्वा प्रणवादिनमोन्तकम् ॥
विसृज्य पुष्पमेकं तु वाचा वरुणमुच्चरेत् ।
व्योमाय च पृथिव्यै च द्वित्रिपुष्पं यथाक्रमम् ॥

विसृजेदिति शेषः । अत्रैवं प्रयोगः । ॐवरुणाय नमः । ॐव्योमाय नमः । ॐपृथिव्यै नमः । वरुणशब्दे यद्यपि चतुर्थी नास्ति तथापि नमसो योगात्, व्योमादिपदद्वये तद्दर्शनाच्चतुर्थ्याः प्रयोगः । व्योमायेति छान्दसम् ।

पूर्वं पूर्वमुखो भूत्वा पुष्पं संचिनुयाच्छुभम् ।

तत्र मन्त्रः

माऽनुशोकं कुरुष्व त्वं स्थानत्यागं च मा कुरु ।

देवतापूजनार्थाय प्रार्थयामि वनस्पते ॥
स्थलजं नोद्धरेत्पुष्पं छेदयेज्जलजं न तु ।
उच्छिष्टाद्यैरुपहतं केशकीटादिसंयुतम् ॥
अगन्धमुग्रगन्धं च हीनवर्णरसादिकम् ।
शुष्कं विशीर्णं भूयुक्तं म्लानमन्योपभुक्तकम् ॥
कृष्णं पर्युषितं पुष्पं त्यजेदन्यार्थमाहृतम् ।
वृन्तच्युतं च मुकुलं फलयुक्तमदेशजम् ॥
तथा,
देवा वृक्षस्वरूपेण जातास्ते मत्सरान्विताः ।
तेषां परस्परं वैरं तत्पुष्पं तेषु निन्दितम् ॥
यमो निहन्ता सर्वासां प्रजानां ब्राह्मणामपि । (१)
तस्मात्तत्कुसुमं सर्वदेवानामप्रियं मतम् ॥
यमो विभीतक इति वोपदेवोऽव्याख्यत् ।
दन्तपातभयत्रस्तः पूषा वैरपरः सदा ।
देवीपत्रोद्भवं पत्रं सूर्ये दुःखप्रदायकम् ॥
बिल्वपत्रेण सूर्यो नार्च्यः ।
बिल्वपत्रं शमीपत्रं पत्रं भृङ्गरजस्य च ।
तमालपत्रं च हरे सदैव तपनप्रियम् ॥
अत्र सूर्ये बिल्वपत्रस्य विहितप्रतिषिद्धत्वाद्विकल्पः ।
तापोन्मादकरं द्रव्यं सात्त्विकानां हितं नहि ।
तस्मात्स्वर्णरवी नेष्टौ स्वर्णश्रीविभवे सुरे ॥
विष्णुं धत्तूरार्कपुष्पाभ्यां नार्चयेदित्यर्थः ।
शेषतल्पे शयानस्य तच्छ्वासोच्छ्वाससङ्गमात् ।
सन्तप्तो विग्रहस्तस्य तच्छान्त्यै पङ्कजं प्रियम् ॥
अनुक्तकुसुमं दत्वा दौर्भाग्यं समवाप्नुयात् ।

लोकविद्विष्टपुष्पैश्च लोकविद्वेषतां व्रजेत् ॥
उक्तं न दुष्यते कञ्जं कुसुमं चानुलेपनम् ।
मूर्त्तिभेदे तथा काम्ये रक्तादीनां न दूषणम् ॥
बिल्वं च तुलसीपत्रं बकुलं शुष्कमेव वा ।
यानि स्युर्वर्णयुक्तानि रसगन्धयुतानि च ॥
तानि पुष्पाणि देवानां पूजार्हाणि यथाविधि ।
पुष्पं वस्त्रे न बध्नीयाच्छिरसा न वहेद्बुधः ॥
नयेत्पत्रपुटेनैव पाणिमालम्ब्य संयतः । इति ।
आश्वलायनाचार्यः,
नाग्निना सह पुष्पं वा जलं चान्नं च वा नयेत् ।
अंसाभ्यां शिरसा वाग्निं न वहेच्च जलं तथा ॥
तथा गन्धांश्च पुष्पं च न वहेदोदनं द्विजः ।

इति पुष्पविधिः ॥

अथ धूपाः ।

धूपांश्च विविधान् साधूनसाधूंश्च निबोध मे ।
निर्यासाः सारिणश्चैव कृत्रिमाश्चेति ते त्रयः ॥
इष्टोऽनिष्टो भवेद्गन्धस्तन्मे निगदतः शृणु ।
निर्यासाः शल्लकीवर्जा देवानां दयिताश्च ते ॥
गुग्गुलुः प्रवरस्तेषां सर्वेषामिति निश्चयः ॥
अगुरुः सारिणां श्रेष्ठो यक्षराक्षसभोगिनाम् ।
दैत्यानां शल्लकीयश्च काङ्क्षितो यश्च तद्विधः ॥
अथ सर्जरसादीनां गन्धैः पार्थिवदारवैः ।
दारवै रससंयुक्तैर्मनुष्याणां विधीयते ॥
देवदानवभूतानां सद्यस्तुष्टिकरः स्मृतः ।
य एवोक्ताः सुमनसः प्रसादे गुणहेतवः ॥

धूपेष्वपि परिज्ञेयास्त एव प्रीतिवर्धनाः ॥ इति ।

**वामनपुराणे,**

रुहिकाख्यं कणो दारु सिह्लकं चागुरु सितम् ।
शङ्खो जातीफलं श्रीशे धूपानि स्युः प्रियाणि वै ॥

रुहिका मांसी । कणो गुग्गुलुः । दारुः देवदारुः । सितं कर्पूरम् । शङ्खो नखी । धूपानीति बहुवचतात् प्रत्येकं धूपत्वमेषाम् ।

**नरसिंहपुराणे,**

महिषाख्यं गुग्गुलुं य आज्यसिक्तं सशर्करम् ।
धूपं ददाति राजेन्द्र नरसिंहाय भक्तिमान् ॥
स धूपितः सर्वदिक्षु सर्वपापविवर्जितः ।
अप्सरोगणयुक्तेन विमानेन विराजता ।
वायुलोकं समासाद्य विष्णुलोके महीयते ॥

**विष्णुधर्मोत्तरे,**

वसन्ते गुग्गुलं दत्त्वा अग्निष्टोमफलं लभेत् ।
ग्रीष्मे चन्दनसारेण द्वादशाहफलं लभेत् ॥
तुरुष्कदानेन तथा प्रावृष्यमरतां व्रजेत् ।
कर्पूरदानाच्छरदि राजसूयमवाप्नुयात् ॥
हेमन्ते मृगदर्पेण वाजिमेधफलं लभेत् ।
शिशिरेऽगुरुसारेण सर्वमेधफलं लभेत् ॥
कृष्णागुरुसमुत्थेन धूपेन श्रीधरालयम् ।
धूपयेद्वैष्णवो यस्तु स मुक्तो नरकार्णवात् ॥

**गौतमः,**

तीर्थकोटिशतैर्मर्त्यो यथा भवति निर्मलः ।
करोति निर्मलं देहं धूपशेषस्तथा हरेः ॥

नारदीये,

आघ्राणं यद्धरेर्दत्तं धूपोत्सृष्टस्य सर्वतः ।
तद्भवव्यालदष्टस्य तस्य कर्मविषापहम् ॥

नारदीये,

शङ्खोदकं हरेर्भुक्तं निर्माल्यं पादयोर्जलम् ।
चन्दनं धूपशेषस्तु ब्रह्महत्यापहारकम् ॥
धूपं वाऽऽरात्रिकं विष्णोः कराभ्यां यः प्रवन्दते
कुलकोटिं समुद्धृत्य याति विष्णोः परं पदम् ॥

तथा,

न भयं विद्यते तस्य दिव्यं भौमं रसातलम् ।
कृष्णधूपावशेषेण यस्याङ्गं परिवासितम् ॥ इति ।

अथ दीपाः ।

दीपदाने प्रवक्ष्यामि ज्ञानयोगमनुत्तमम् ।
यथा येन यदा चैव प्रदेया यादृशाश्च ते ॥
ज्योतिस्तेजः प्रकाशं वाप्यूर्ध्वगं चापि वर्ण्यते ।
प्रदानोत्तेजनात्तस्मात्तेजो वर्धयते नृणाम् ॥
तान् दत्त्वा नोपहिंसेत न हरेन्नापि नाशयेत् ।
दीपहर्त्ता भवेदन्धस्तमोगतिरसुप्रभः ॥

तथा,

हविषा प्रथमः कल्पो द्वितीयश्चौषधीरसैः ।
वसामेदोऽस्थिनिर्यासैर्न कार्यः पुष्टिमिच्छता ॥
गिरिप्रपाते गहने चैत्यस्थाने चतुष्पथे ।
दीपदाता भवेन्नित्यं य इच्छेद्भूतिमात्मनः ॥

विष्णुः,

घृतं तिलतैलं विना न किंचन दीपार्थे दद्यात् । इति ।

नरसिंहपुराणे,

घृतेन वाथ तैलेन दीपं यो ज्वालयेन्नरः।
विष्णवे विधिवद्भक्त्या तस्य पुण्यफलं शृणु॥
विहाय सकलं पापं सहस्रादित्यसन्निभः।
ज्योतिष्मता विमानेन विष्णुलोके महीयते॥

विष्णुधर्मोत्तरे,

प्रज्वाल्य देवदेवस्य कर्पूरेण च दीपकम्।
अश्वमेधमवाप्नोति कुलकोटिं समुद्धरेत्॥

संवर्त्तः,

देवागारे द्विजानां च दीपं दत्त्वा चतुष्पथे।
मेधावी ज्ञानसंपन्नश्चक्षुष्मान् जायते नरः॥

स्कान्दे,

कर्पूरेण तु यः कुर्याद्भक्त्या केशवमूर्धनि।
आरात्रिकं मुनिश्रेष्ठ प्रविशेद्विष्णुमव्ययम्॥
बहुवर्त्तिसमायुक्तं ज्वलितं केशवोपरि।
कुर्यादारात्रिकं यस्तु कल्पकोटिं दिवं वसेत्॥
घृतेन दीपं यो दद्याच्छङ्करायाथ विष्णवे।
स मुक्तः सर्वपापेभ्यो गङ्गास्नानफलं लभेत्॥
तिलतैलान्वितं दीपं विष्णोर्वा शङ्करस्य च।
दत्त्वा नरः सर्वकामान् संप्राप्नोति नरोत्तमः॥

विष्णुधर्मोत्तरे,

पद्मपत्रोद्भवं वर्त्तिं गन्धतैलेन दीपकम्।
कुर्वन्निति शेषः।
नीरोगः सुभगश्चैव राजा भवति मानवः॥
महावर्त्तिः सदा देया भूमिपाल महाफला।

कृष्णपक्षे विशेषेण तत्रापि च विशेषतः ॥
*अमावास्या च निर्दिष्टा द्वादशी च महाफला ।*
आश्वयुज्यामतीतायां कृष्णपक्षे च या भवेत् ॥
अमावास्या तदा पुण्या द्वादशी च विशेषतः ।
देवस्य दक्षिणे पार्श्वे देया तैलतुला नृप ॥
पलाष्टकयुतां राजन् वर्त्तिं तत्र तु दापयेत् ।
महारजनरक्तेन समग्रेण तु वाससा ॥
पलाष्टकयुता तैलतुला अष्टोत्तरं शतम् ।
तैलपलानामिति शेषः ।
वामपार्श्वे तु देवस्य या घृतेन तुला नृप ॥
पलाष्टकयुतां शुक्लां वर्त्तिं तत्र तु दापयेत् ।
वाससा तु समग्रेण सोपवासो जितेन्द्रियः ॥
महावर्त्तिद्वयमिदं सकृद्दत्त्वा महामते ।
स्वर्लोके सुचिरं भुक्त्वा जायते भूतले नृपः ॥
कुले च राजशार्दूल तत्र स्याद्दीपवत्प्रभः ।
अत्युज्वलश्च भवति युद्धेषु कलहेषु च ॥
ख्यातिं याति तथा लोके सज्जनानां च संसदि
एकमप्यथ यो दद्यादभीष्टमनयोर्द्वयोः ॥
मानुष्ये सर्वमाप्नोति यदुक्तं ते मयाऽनघ ।
स्वर्गे तथात्वमाप्नोति भोगकालं च भूमिप ॥
स्कान्दे,
नीराजनप्रभा विष्णोर्येषां गात्राणि संस्पृशेत् ।
यज्ञावभृथलक्षाणां स्नानजं लभते फलम् ॥
स्नानार्चनक्रियाकाले घण्टानादं करोति यः ।
पुरतो वासुदेवस्य तस्य पुण्यफलं शृणु ॥

वर्षकोटिसहस्राणि वर्षकोटिशतानि च ।
वसते देवलोकेषु अप्सरोगणसेवितः ॥
सर्ववाद्यमयी घण्टा केशवस्य सदा प्रिया ।
वादनाल्लभते पुण्यं यज्ञकोटिशतोद्भवम् ॥
मन्वन्तरसहस्राणि मन्वन्तरशतानि च ।
घण्टानादेन देवश्च प्रीतो भवति केशवः ॥
वेणुवीणास्वनं चैवं करोति स्तवनं हरेः ।
मृदङ्गवादनयुतं प्रणवेन समन्वितम् ॥
अर्चनं वासुदेवस्य तन्नित्यं मोददं नृणाम् ।
दीपनिर्वापणनिषेधश्च भविष्ये,
तांश्च दत्त्वा न हिंसेत तिलतैलविवर्जनात् ।
कुरूपो दीपहन्ता च मूषकोऽन्धश्च जायते ॥
अन्धे तमसि दुष्पारे नरके पच्यते किल । इति ।
इति दीपाः ।

## अथ नैवेद्यम् ।

तत्र विष्णुः, साज्यशाल्योदनपायसखण्डलड्डुकपक्कफलमूलशाकमृणालव्रीहिमाषमुद्गगवेधुकगव्यपयोदधिघृतादीनि । देयानीति शेषः ।

नरसिंहपुराणे,
हविष्यान्नोदकं दिव्यमाज्ययुक्तं सशर्करम् ।
निवेद्य नरसिंहाय यावकं पायसं तथा ॥
समास्तण्डुलसङ्ख्याता यावत्यस्तावतीर्नृप ।
विष्णुलोके महाभोगान् भुञ्जन्नास्ते स वैष्णवः ॥
बृहन्नारदीये,
हविः शाल्योदनं दिव्यमाज्ययुक्तं सशर्करम् ।

नैवेद्यं देवदेवाय विष्णवे विनिवेदयेत् ॥
संस्कृतं चान्नमाज्याद्यैर्दधिक्षीरमधूनि च ।
फलमूलव्यञ्जनादि मोदकं च निवेदयेत् ॥
**तथा,**
दुग्धान्नं पूपकं चैव शष्कुली मोदकं तथा ।
सूपान्नं पायसाद्यं च भक्ष्यं श्रीकृष्णवल्लभम् ॥
**वामनपुराणे,**
हविष्यार्थे कृता ये च यवगोधूमशालयः ।
तिलमुद्गादयो माषा व्रीहयश्च प्रिया हरेः ॥
**भारद्वाजः,**
परमान्नमतिश्रेष्ठं श्रेष्ठमन्नं तु केवलम् ।
अपूपा मण्डकाद्यास्तु यवगोधूमपिष्टजाः ॥
मोदकाद्यास्तु ये केचित् व्रीहिपिष्टघृतस्नुताः ।
तेऽधमा इत्यभिहिता नैवेद्यपरिकल्पने ॥
**विष्णुधर्मोत्तरे,**
मूलकस्य तथा शाकं चिञ्चाशाकं तथैव च ।
आर्द्रकस्य तथा शाकं पालकं शाकमेव च ॥
आम्ललोलस्य शाकं च सदैव हरिवल्लभम् ।
फलेष्वामलकं पूज्यं बादरं तिन्तिडीफलम् ॥
दाडिमी मातुलुङ्गं च बीजपूररसोद्भवम् ।
कदली चूतसम्भूतं ज्येष्ठजम्बूफलं तथा ॥
अन्यान्यपि प्रशस्तानि भक्तियुक्तानि सर्वदा ।
**वाराहे,**
कालिङ्गस्य फलं चैव द्विविधा कर्कटी तथा ।
खर्जूरान् पनसांश्चैव बिल्वाञ्जीरपरूषकम् ॥

आक्षोटोदुम्बरं तालं जातीङ्गुदफलं तथा ।
कालिन्दकं फलं चैव बृहतीफलमेव च ॥
उभयानि पटोलानि कुमुदस्य फलं तथा ।
मूलकं माफलं चैव करमर्दफलं तथा ॥
कर्मण्यं च फलं ह्येतत् प्रतिगृह्णामि माधवि ।
मोचकं पनसं जम्बू तथाऽन्यल्लवलीफलम् ॥
प्राचीनामलकं श्रेष्ठं मधूकोदुम्बरं तथा ।
फलं पक्वमपि ग्राह्यं कदलीफलमुत्तमम् ॥
प्राचीनामलकं करमर्दः ।
इङ्गुदीफलबिम्बानि बदरामलकानि च ।
खर्जूरान् पनसांश्चैव मालकार्कपरूषकान् ॥
आम्रानुदुम्बरांश्चैव तथा प्लक्षफलानि च ।
पिण्डारकफलं चैव पुन्नागफलमेव च ॥
शमी च करवीरं च बीजपूरफलं तथा ।
उर्वारुकफलं चैव तथा निम्बफलानि च ॥
सर्जं कर्कोटकं चैव तथा तालफलानि च ।
कुमुदस्य फलं चैव बहेलकफलं तथा ॥
मृणालं पुष्करं चैव शालूकस्य फलं तथा ।
प्लक्षं च दाडिमं चैव पिण्डखर्जूरमेव च ॥
मरीचं शिशुपाकं च भल्लातं करमर्दकम् ।
एते चान्ये च बहवः कन्दमूलफलानि च ॥
एतानि चोपयोज्यानि यान्युक्तानि मया च ते ।
फलानामप्यलाभे तु तृणगुल्मौषधीरपि ॥
औषधीनामलाभे तु तोयान्यपि निवेदयेत् ।
तदलाभे तु सर्वत्र मानसं प्रवरं स्मृतम् ॥

यद्यदिष्टतमं भोज्यं तत्तदीशाय विष्णवे ।
दत्त्वा तु तत्पदं याति चत्वारिंशत्कुलान्वितः ॥

**बौधायनः,**

पयसा वत्सरं तृप्तिर्घृतपक्वैर्दशाब्दिकी ।
दध्ना चैव शतार्द्धं च घृतेन शतवत्सरम् ॥
नैवेद्यं कल्पयेद्विष्णोस्तदभावे तु पायसम् ।
केवलं घृतसम्पृक्तं पायसं च प्रकल्पयेत् ॥
परिपक्वं सुपात्रस्थं सुगन्धि नयनप्रियम् ।
सद्यस्कमेतत्त्रितयं नैवेद्येऽतिशुभप्रदम् ॥
सद्यस्क तत्कालपक्वम् ।
कदलीनारिकेलानां पनसानां फलानि च ।
जम्बूफलेक्षुदण्डानि सुपक्वानि शुभानि च ॥
भक्ष्याणि यानि श्रेष्ठानि कन्दमूलफलानि च ।
नैवेद्ये तानि सर्वाणि दातव्यानीतराणि च ॥
मुद्गा निष्पावका माषास्तुवर्यश्चणका अपि ।
पञ्चैतेऽतिप्रशस्ताः स्युर्नैवेद्ये दोषवर्जिताः ॥

अथ नैवेद्ये निषिद्धानि ।

**विष्णुः**

नाभक्ष्यं नैवेद्यार्थे, भक्ष्येष्वपि पञ्चनखमत्स्यवाराहमांसानि मेषीमहिषीछागानां दुग्धदधिघृतान्यदेयानि ।

**तथा वाराहपुराणम्,**

अमरायोपयोज्यानि गव्यं दधि पयो घृतम् ।
माहिषं चाविकं छागमयज्ञियमुदाहृतम् ॥

**कौर्मे,**

वृन्ताकं जालिकाशाकं कुसुम्भान्मालकं तथा ।

पलाण्डुं लशुनं शुक्तं निष्पावं चैव वर्जयेत् ॥

जालिका शतपुष्पा । शुक्तं पर्युषितम् । निष्पावनां विहितप्रतिषिद्धत्वात् विकल्पः ।

अतिपक्का अपक्काश्च दुःस्पृष्टा मण्डकादयः ।
नैवेद्ये तेऽप्ययोग्याः स्युर्मोदकाद्याः पुरातनाः ॥
अतिपक्कमपक्कं च सुपक्कं कृमिसंयुतम् ।
दुर्भाण्डस्थमसद्यस्कं दुर्गन्धि न शुभं स्मृतम् ॥

हलायुधः,

यन्यथा भक्ष्यते भक्ष्यं तत्तथैव प्रदापयेत् ।
अन्यथा तत्प्रदानेन न तत्फलमवाप्नुयात् ॥ इति ।

यथा पाचनखण्डनप्रक्षालनादिना यस्यान्नादेर्भक्षार्हता भवेत् तथा देयमित्यर्थः । अथवा यथा स्वयमुत्तमं भुज्यते तथा देवायापि देयम्, अन्यथा दोष इति ।

## अथ प्रसङ्गान्नैवेद्यपात्राणि ।

स्कन्दपुराणे,

नैवेद्यपात्रं वक्ष्यामि केशवस्य महात्मनः ।
हैरण्यं राजतं कांस्यं ताम्रं मृन्मयमेव च ॥
पालाशं पद्मपत्रं वा पात्रं विष्णोरतिप्रियम् ।

वाराहे,

सौवर्णं राजतं कांस्यं येन दीयेत प्रायणम् ।
तानि सर्वाणि संत्यज्य ताम्रं तु मम रोचते ॥
सुदीक्षितैर्विशुद्धैस्तु मम कर्मपरायणैः
सदा ताम्रेण कर्त्तव्यमेवं भूमे मम प्रियम् ॥

प्रायणं नैवेद्यम् ।

नैवेद्यं तुलसीमिश्रं घण्टाद्यैर्जयनिःस्वनैः ।

नीराजनैश्च हरये दद्यादापोशनं ततः ॥

स्कन्दपुराणे,

मुनीन्द्र करकोपेतं कुम्भं कृष्णाग्रतो न्यसेत् ।
कल्पान्ते न जलापेक्षां कुर्वन्ति च पितामहाः ॥

अथ नैवेद्यप्रतिपत्तिः ।

हरिनाथीयस्मृतिसारे,

ब्रह्माङ्गलग्नं विप्रेभ्यो वैष्णवं च प्रदीयते ।
रुद्राङ्गलग्नमग्नौ तु दहेत्सर्वं च तत्क्षणात् ॥
शिष्टेभ्यस्त्वथ देवेभ्यो यत्तत् दीनेषु निःक्षिपेत् ।

तथा,

विप्रेभ्यस्त्वथ तद्देयं ब्रह्मणे यन्निवेदितम् ।
वैष्णवं सात्वतेभ्यश्च भस्माङ्गेभ्यश्च शाम्भवम् ॥
सौरं मगेभ्यः शाक्येभ्यस्तापिने यन्निवेदितम् ।
स्त्रीभ्यश्च देयं मातृभ्यो यत्तु किञ्चिन्निवेदितम् ॥
भूतप्रेतपिशाचेभ्यो यत्तद्दीनेषु निःक्षिपेत् ।

विष्णुरपि,

सूर्याय निवेदितं मगाय ब्रह्मणाय देयम् । देव्यै निवेदितं कुमार्यै देयम् । शिवाय निवेदितं तल्लिङ्गधारिणे देयम् । विष्णवे निवेदितं सात्वताय देयं ब्राह्मणाय वा । इति ।

सात्वतलक्षणं ब्रह्माण्डे,

पञ्चमः सात्वतो नाम विष्णोरायतनान्यपि ।
पूजयत्याज्ञया राज्ञो यदि स्यात्संयतेन्द्रियः ॥ इति ।

मगः शाकद्वीपीयो ब्राह्मणः । तापी बुद्धः । क्वचित्तिथ्यादौ बुद्धपूजा विहिता । मातृभ्य इति देवीमात्रोपलक्षणम् ।

स्कन्दपुराणे,

नैवेद्यशेषं तुलसीविमिश्रितं
विशेषतः पादजलेन विष्णोः ।
योऽश्नाति नित्यं पुरुषोऽथ नारी
प्राप्नोति यज्ञायुतकोटिपुण्यम् ॥

इति वचनात् विष्णुनिवेदितं सात्वताय ब्राह्मणाय वा दत्त्वा स्वयं भुञ्जीत । न च स्वयंग्रहणे दत्तापहारापत्तिरिति वाच्यम् । वचनेन प्रतिपत्तिविशेषविधाने दोषाभावात् । तद्यथा, वार्त्तिककारमते अग्नये त्यक्तस्य पुरोडाशस्य वचनेन स्विष्टकृदादिप्रतिपत्तिस्तद्वत् ।

सात्वतासान्निध्ये तु
नैवेद्यप्रतिपत्त्यर्थं सात्वतश्चेन्न लभ्यते ।
ग्रासमात्रं समुद्धृत्य जलेऽग्नौ वा विनिःक्षिपेत् ॥

इति अनुकल्पो द्रष्टव्यः । इदं च प्रतिमादिपूजायाम् । स्थावरपूजायां तु सात्वतेभ्य एव देयम्, तथाशिष्टाचारात् । स्वयं तदुपभोगस्य शिष्टाचारविरोधाच्च ।

विष्णुरहस्ये,
यद्योनिरत्ति नैवेद्यं दातुश्चानवधानतः ।
दाता तद्योनिमाप्नोति तस्माद्देयं तदुत्तमे ॥

यत्र यत्र यस्य यस्य देवस्य नैवेद्यप्रतिपत्तिर्विहिता सा तद्धीनेषु न कार्येत्यर्थः ।

यद्वा सच्छब्देन सत्त्वमूर्त्तिर्भगवान् उपास्यतया विद्यते यस्य स सत्वान् सत्वानेव सात्वतः ।

नैवेद्यमुपयुञ्जीत दत्त्वा तद्भक्तिशालिने ।
इति भागवतात्,
निवेदितं तद्भक्ताय दद्याद्भुञ्जीत वा स्वयम् ।

अनर्पयित्वा गोविन्दे यो भुङ्क्ते धर्मवर्जितः ॥
शुनो विष्ठासमं चान्नं नीरं च सुरया समम् ।
इति कूर्मपुराणाच्च ।
**ब्रह्माण्डपुराणे,**
पत्रं पुष्पं फलं तोयमन्नं पानीयमौषधम् ।
अनिवेद्य न भुञ्जीत यदाहाराय कल्पितम् ॥
**गारुडे,**
पादोदकं पिबेन्नित्यं नैवेद्यं भक्षयेद्धरेः ।
शेषा स्वमस्तके धार्या इति वेदानुशासनम् ॥
शेषा निर्माल्यम् ।
**ब्रह्माण्डे,**
षड्भिर्मासोपवासैश्च यत्फलं परिकीर्त्तितम् ।
विष्णोर्नैवेद्यसिक्थान्नं भुञ्जतां तत्फलं भवेत् ॥
**विष्णुधर्मोत्तरे,**
मुकुन्दाशितशेषं तु यो हि भुङ्क्ते दिने दिने ।
सिक्थे सिक्थे भवेत्पुण्यं चान्द्रायणशताधिकम् ॥
गौरीं प्रति शिववाक्यम्
अग्निष्टोमसहस्रैश्च वाजपेयशतैरपि ।
यत्फलं लभते देवि विष्णोर्नैवेद्यभक्षणात् ॥
तत्फल भवतीति शेषः ।
**भागवतेऽपि,**
त्वयोपभुक्तस्रग्गन्धवासोऽलङ्कारचार्चिताः ।
उच्छिष्टभोजिनो दासास्तव मायां जयेमहि ॥
**बह्वृचपरिशिष्टे,**
पवित्रं विष्णुनैवेद्यं सुरसिद्धर्षिभिः स्मृतम् ।

अन्यदेवस्य नैवेद्यं भुक्त्वा चान्द्रायणं चरेत् ॥

**विष्णुधर्मोत्तरे,**

प्राणेभ्यो जुहुयादन्नमनिवेदितमुत्तमम् ।
तृप्यन्ति सर्वदा प्राणा अनिवेदितभक्षणात् ॥

**पाद्मे गौतमः,**

अम्बरीष नवं वस्त्रं फलमन्नं रसादिकम् ।
कृत्वा कृष्णोपभोग्यं हि सदा सेव्यं च वैष्णवैः ॥
अनिवेद्य प्रभुञ्जानः प्रायश्चित्ती भवेन्नरः ।
हृदि रूपं मुखे नाम नैवेद्यमुदरे हरेः ॥
पादोदकं च निर्माल्यं मस्तके यस्य सोऽच्युतः ।
मृत्युकाले तु यस्यास्ये दीयते पादयोर्जलम् ॥
अपि पापसमाचारः स गच्छेद्वैष्णवं पदम् ।
तस्मात्सर्वं निवेद्यैव विष्णोर्भुञ्जीत नान्यथा ॥

**कूर्मपुराणे,**

मध्याह्ने विधिवत्पूज्य श्रीविष्णुं वैष्णवोत्तमः ।
नैवेद्यं शिरसा नत्वा श्लोकमेतदुदीरयेत् ॥
यस्योच्छिष्टं हि वाञ्छन्ति ब्रह्माद्या ऋषयोऽमलाः ।
सिद्धाद्याश्च हरेस्तस्य वयमुच्छिष्टभोजिनः ॥
यस्य नाम्ना विनश्यन्ति महापातककोटयः ।
तस्य श्रीकृष्णदेवस्य वयमुच्छिष्टभोजिनः ॥
उच्छिष्टभोजिनस्तस्य वयमद्भुतकर्मणः ।
येन लीलावतारेण हिरण्याक्षो निपातितः ॥

वैष्णवे दानमन्त्रः—

बलिर्विभीषणो भीष्मः कपिलो नारदार्जुनौ ।
प्रह्लादो जनको व्यास अम्बरीषस्तथैवच ॥

वैष्वक्सेनोद्धवाक्रूरसनकाद्याः शुकादयः ।
वासुदेवप्रसादं वै सर्वे गृह्णन्तु वैष्णवाः ॥
एवं प्रसङ्गागतमुक्त्वा अथ प्रकृतमनुसन्धीयते ।
अथ भुक्तवते दद्याज्जलैः कर्पूरवासितैः ॥
आचमनं तु ताम्बूलं चन्दनैः करमार्जनम् ।

अथ ताम्बूलविधिः ।

गन्धकर्पूरसंयुक्तं ताम्बूलं यो निवेदयेत् ।
विष्णवे भक्तियुक्तस्तु विष्णुलोके महीयते ॥ इति ।
रत्नकोशे,
महापिप्पलपत्रं च क्रमुकस्य फलानि च ।
शुक्तिक्षारेण संयुक्तं ताम्बूलमिति संज्ञितम् ॥
श्वेतपत्रं च चूर्णं च क्रमुकाणां फलानि च ।
नारिकेलफलोपेतं मातुलुङ्गसमायुतम् ॥
एलाकङ्कोलकर्पूरैर्मुखवासं प्रचक्षते ।
एतेषामप्यलाभे तु तत्तद्द्रव्यं स्मरेद्बुधः ॥
तत्तद्द्रव्यं तु सङ्कल्प्य पुष्पैर्वापि समर्चयेत् ।
अर्चनेषु विहीनं यत्तत्तोयेन प्रकल्पयेत् ॥ इति ।
पूगजातीफले दत्त्वा जातीपत्रं तथैव च ।
लवङ्गकं च कङ्कोलमेला कटफलं तथा ॥
ताम्बूलीनां किसलयं दत्त्वा स्वर्गमवाप्नुयात् ।
सौभाग्यमतुलं लोके तथा रूपमनुत्तमम् ॥
अवाप्नुयादिति पूर्वेणान्वयः ।
इति ताम्बूलम् ।
अनुलिप्य जगन्नाथं तालवृन्तेन वीजयेत् ।
वायुलोकमवाप्नोति पुरुषस्तेन कर्मणा ॥

चामरैर्वीजयेद्यस्तु देवदेवं जनार्दनम् ।
तिलप्रस्थप्रदानस्य फलं प्राप्नोत्यसंशयम् ॥
दर्पणस्य प्रदानेन रूपवान् दर्पवान् भवेत् ।
दर्शयित्वा तथा तं च न भूयस्त्वभिजायते ॥

अथ आरात्रिकम् ।

बहुवर्त्तिसमायुक्तं ज्वलन्तं केशवोपरि ।
कुर्यादारात्रिकं यस्तु कल्पकोटिं दिवं वसेत् ॥
नीराजनं च यः पश्येद्देवदेवस्य चक्रिणः ।
सप्तजन्म भवेद्विप्रो ह्यन्ते च परमं पदम् ॥
कर्पूरेण च यः कुर्याद्भक्त्या केशवमूर्धनि ।
आरात्रिकं मुनिश्रेष्ठ प्रविशेत् विष्णुमव्ययम् ॥
मन्त्रहीनं क्रियाहीनं यत्कृतं पूजनं हरेः ।
सर्वं संपूर्णतामेति कृते नीराजने हरेः ॥ इति ।

अथ प्रदक्षिणानमस्काराः ।

एवं कृत्वा तु कृष्णस्य यः कुर्याच्च प्रदक्षिणाम् ।
सप्तद्वीपवतीपुण्यं लभते तु पदे पदे ॥
सप्तद्वीपवती पृथ्वी, तत्प्रदक्षिणाजनितपुण्यमित्यर्थः ।
विष्णोर्विमानं यः कुर्यात्सकृद्भक्त्या प्रदक्षिणाम् ॥
अश्वमेधसहस्रस्य फलमाप्नोति मानवः ।

**नारदीये,**

विष्णुं प्रदक्षिणं कुर्वन् यत्तत्रावर्त्तते पुनः ।
तदेवावर्त्तनं तस्य पुनर्नावर्त्तते भवे ॥

**यथा,**

एका चंड्यां रवौ सप्त तिस्रो दद्यात् विनायके ।
चतस्रः केशवे दद्याच्छिवे त्वर्द्धं प्रदक्षिणम् ॥

एकहस्तप्रणामश्च एका चैव प्रदक्षिणा ।
अकाले दर्शनं चैव हन्ति पुण्यं पुराकृतम् ॥
सकृद्वा न नमेद्यस्तु विष्णवे शर्मकारिणे ।
शवोपमं विजानीयात्कदाचिदपि नालपेत् ॥ इति ।

अत्र वा अप्यर्थः ।

कृत्वा प्रदक्षिणं भूमौ प्रणमेद्दण्डवन्मुहुः ।
पश्यन् दृष्ट्या स्तुवन् वाचा मनसा च हरिं स्मरन् ॥

वाराहे,

वस्त्रप्रावृतदेहस्तु यो नरः प्रणमेत माम् ।
सदा स जायते मूर्खः सप्तजन्मानि भामिनि ॥

इत्यत्र वस्त्रावरणनिषेधोऽधरीयोत्तरीयातिरिक्तवस्त्रविषयः । तस्य निषेद्धुमशक्यत्वात् ।

प्रणम्य दण्डवद्भूमौ नमस्कारेण योऽर्चयेत् ।
स यां गतिमवाप्नोति न तां क्रतुशतैरपि ॥
जन्मप्रभृति यत्किञ्चित् पुमान् वै धर्ममाचरेत् ।
सर्वं निष्फलतामेति हस्तेनैकेन वन्दनात् ॥
दोर्भ्यां पद्भ्यां च जानुभ्यामुरसा शिरसा तथा ।
मनसा वचसा दृष्ट्या प्रणामोऽष्टाङ्ग ईरितः ॥

तथा,

पद्भ्यां कराभ्यां शिरसा पञ्चाङ्गा प्रणतिः स्मृता ।
अष्टाङ्ग उत्तमः प्रोक्तः पञ्चाङ्गो मध्यमः स्मृतः ॥

अष्टाङ्गलक्षणं पुराणान्तरे,

उरसा शिरसा दृष्ट्या मनसा श्रद्धया तथा ।
पद्भ्यां कराभ्यां वाचा च प्रणामोऽष्टाङ्ग उच्यते ॥ इति ।

सङ्ग्रहे तु

शिरो हस्तौ च जानू च चिबुकं बाहुकद्वयम्।
पञ्चाङ्गं तु नमस्कारो नमस्कारत्रयं स्मृतम्॥
उत्थायोत्थाय कर्त्तव्यः प्रणामो दण्डवद्भुवि।
प्रदक्षिणं न कर्त्तव्यं पुरतः पृष्ठदर्शनात्॥

तथा,

प्रदक्षिणा न कर्त्तव्या विमुखस्य हि कारणात्।
करणमेव कारणम् विमुखीकरणादित्यर्थः।
न देवं पृष्ठतः कृत्वा प्रणामं क्वचिदाचरेत्।
वरमुत्थाय कर्त्तव्यं न वृथा भ्रमणं चरेत्॥
पश्चात्कृत्वा तु यो देवं भ्रमित्वा प्रणमेन्नरः।
तस्यैहिकफलं नास्ति न परत्र दुरात्मनः॥

नरसिंहपुराणे,

स्तोत्रैर्जप्यैश्च देवाग्रे यः स्तौति मधुसूदनम्।
यः कारयति विष्णोस्तु सन्ध्यायां मन्दिरं नरः॥
पर्वकाले विशेषेण कामगः कामरूपवान्।
स सुखी च विदग्धश्च सेव्यमानोऽप्सरोगणैः॥
महार्हमणिचित्रेण विमानेन विराजता।
स्वर्गात्स्वर्गमनुप्राप्य विष्णुलोके महीयते॥ इति।

अथ द्रव्यदानविधिः।

आराधनार्थं यो मां तु यत्किञ्चिद्द्रव्यमुत्तमम्।
तद्दत्त्वा नरसिंहाय विष्णुलोके महीयते॥
ध्वजं तु विष्णवे यस्तु गरुडेन समन्वितम्।
दद्यात्सोऽपि ध्वजाकीर्णविमानेन विराजता॥
विष्णुलोकमवाप्नोति सेव्यमानोऽप्सरोगणैः॥ इति।

अथ होमविधिर्नरसिंहपुराणे,

नारसिंहं समाराध्य विधिनाऽनेन मानवः ।
नित्यं सर्पिस्तिलैर्होमं ग्रामे यस्मिन् प्रयच्छति ॥
न भवेत्तस्य ग्रामस्य भयं भूतस्य कस्य चित् ।
अनावृष्टिर्महामारी राजचोरभयं न च ॥ इति ।

अथ निर्माल्यधारणम् ।

तत्र स्कन्दपुराणम्,
पादपीठार्चितं पुष्पं व्यपोह्यैव च तत्त्ववित् ।
यथा देवस्य निर्माल्यं विष्वक्सेनाय दापयेत् ॥
तथा पवित्रीं स्रक्शेषसूत्रं शक्त्यै प्रदापयेत् ।
विष्णुमूर्ध्नि स्थितं पुष्पं शिरसा यो वहेन्नरः ॥
अपर्युषितपापस्तु भवेद्युगचतुष्टयम् ।
कृष्णमूर्ध्नाभिषिक्तं तु जलं तत्पादसम्भवम् ॥
कृत्वा मूर्धन्यवाप्नोति फलं कोट्यैन्दवं मुने ।
यस्य नाभिस्थितं पत्रं मुखे शिरसि कर्णयोः ॥
तुलसीसम्भवं नित्यं तीर्थैस्तस्य मखैस्तु किम् ।
मुखे शिरसि देहे तु विष्णुतीर्थं तु यो वहेत् ॥
तुलसीं मुनिशार्दूल तं च न स्पृशते कलिः ।
विष्णुतीर्थं तु निर्माल्यं यस्याङ्गं स्पृशते मुने ॥
स च रोगैस्तथा पापैर्मुक्तो भवति नारद ।
गृहीत्वा विष्णुपादाम्बु शङ्खे कृत्वा तु वैष्णवः ॥
यो वहेच्छिरसा नित्यं स मुनिस्तपताम्वरः ।
कृत्वा शङ्खोदकं शङ्खे वैष्णवानां महात्मनाम् ॥
यो ददाति तिलैर्मिश्रं चान्द्रायणशतं लभेत् ।
शङ्खोदकं हरेर्भुक्तं निर्माल्यं पादयोर्जलम् ॥
चन्दनं धूपशेषश्च ब्रह्महत्यापहारकम् ।

शङ्खमध्यगतं तोयं भ्रामितं केशवोपरि ॥
अङ्गलग्नं मनुष्याणां ब्रह्महत्यायुतं दहेत् ।
**गरुडपुराणे,**
त्रैलोक्ये यानि तीर्थानि वासुदेवस्य चाज्ञया ।
शङ्खे वसन्ति विप्रेन्द्र तस्माच्छङ्खं प्रपूजयेत् ॥
**अन्यत्रापि,**
दर्शनादेव शङ्खस्य किंपुनः स्पर्शने कृते ।
विलयं यान्ति पापानि हिमवत् भास्करोदये ॥
भूमौ न स्थापयेच्छङ्खं कदाचिदपि मानवः ।
विष्णुपूजावसाने तु शङ्खमेवं समर्च्चयेत् ॥
पूजामन्त्रः—
त्वं पुरा सागरोत्पन्नो विष्णुना विधृतः करे ।
नमितः सर्वदेवैश्च पाञ्चजन्य नमोऽस्तु ते ॥
शङ्खतोयं समादाय भ्रामयेत्केशवोपरि ।
अपराधसहस्रं मे क्षमस्व मधुसूदन ॥
भ्रामयित्वा हरेर्मूर्ध्नि मन्दिरं शङ्खवारिणा ।
प्रोक्षयेद्वैष्णवो यस्तु नाशुभं तद्गृहे भवेत् ॥
**स्कान्दे,**
शङ्खस्थितं च यत्तोयं भ्रामितं केशवोपरि ।
वन्दते शिरसा नित्यं गङ्गास्नानेन तस्य किम् ॥
अर्घ्यं दत्त्वा तु शङ्खेन यः करोति प्रदक्षिणम् ।
प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा ॥
कृत्वा पादोदकं शङ्खे वैष्णवानां महात्मनाम् ।
यो दद्यात्तुलसीमिश्रं चान्द्रायणफलं लभेत् ॥
**गारुडे,**

विलेपयन्ति देवेशं शङ्खे कृत्वा तु चन्दनम् ।
परमात्मा परां प्रीतिं करोति शतवार्षिकीम् ॥

अथ गीतनृत्यादिविधिः ।

गारुडे,
ततः प्रमुदितैर्भक्तैस्तालवीणादिभूषितैः ।
कारयेद्गीतनृत्यादि कुर्याच्चानन्दयन् जनम् ॥
विसृज्य लज्जां योऽधीते गायते नृत्यतेऽपि च ।
कुलकोटिसमायुक्तो लभते मामकं पदम् ॥
यो नृत्यति प्रहृष्टात्मा भक्तिभावैरनेकधा ।
स निर्दहति पापानि मन्वन्तरशतान्यपि ॥ इति ।
नारदः,
नृत्यतां श्रीपतेर्गेहे तालिकावादनैर्भृशम् ।
उड्डीयन्ते शरीरस्थाः सर्वपातकपक्षिणः ॥
कृष्णं सन्तोषयेद्यस्तु सुगीतैर्मधुरस्वरैः ।
सामवेदफलं तस्य क्रीडतो विष्णुसन्निधौ ॥
नारदीये,
विष्णोर्नृत्यं च गीतं च नटनं च विशेषतः ।
ब्रह्मन् ब्राह्मणजातीनां कर्त्तव्यं नित्यकर्मवत् ॥
वाराहे,
ब्राह्मणो वासुदेवार्थं गायमानोऽनिशं परम् ।
नववर्षसहस्राणि कुबेरभवने वसेत् ॥
जीवनाय तत्करणे निषेधमाह—
विष्णुः,
नृत्यगीतादि कुर्वीत द्विजदेवाग्नितुष्टये ।
न जीवनाय युञ्जीत विप्रः पापभिया क्वचित् ॥

स्कन्दपुराणे,

यस्तु वादयते घण्टां वैनतेयेन चिह्निताम् ।
धूप नीराजने स्नाने पूजाकाले विलेपने ॥
ममाग्रे प्रत्यहं वत्स प्रत्येकं लभते फलम् ।
मखायुतं गोनियुतं चान्द्रायणशतोद्भवम् ॥
विधिबाह्या कृता पूजा सफला जायते नृणाम् ।
वैनतेययुता घण्टा सुदर्शनयुता यदि ॥
ममाग्रे स्थापयेद्यस्तु देहे तस्य वसाम्यहम् ।
वादनाल्लभते पुण्यं यज्ञकोटिसमुद्भवम् ॥
सर्वदोषाः प्रलीयन्ते घण्टानादे कृते सति ।
देवतानां मुनीन्द्राणां पितॄणामुत्सवे भवेत् ॥

तत्रैव,

वादित्रनिनदैरुच्चैर्गीतिमङ्गलसंस्तवैः ।
यः स्नापयति देवेशं जीवन्मुक्तो भवेत्तु सः ॥
वादित्राणामभावे तु पूजाकाले तु सर्वदा ।
घण्टाशब्दो नरैः कार्यः सर्ववाद्यमयी यतः ॥

तथा तत्रैव,

स्वकरेण प्रकुर्वन्ति घण्टानादं तु भक्तितः ।
मदीयार्चनकाले तु फलं कोट्ययुतं कलौ ॥
घण्टादण्डस्य शिखरे वक्रं स्थापयते तु यः ।
गरुडं च प्रियं विष्णोः स्थापितं भुवनत्रयम् ॥
सचक्रघण्टानादं तु अन्तकाले शृणोति यः ।
पापकोटियुतस्यापि नश्यन्ति यमकिङ्कराः ॥

तत्रैव,

यस्य घण्टा गृहे नास्ति शङ्खो वा पुरतो हरेः ।

कथं भागवतो नाम गीयते तस्य देहिनः ॥

भागवत इत्यस्यानन्तरम् इति पदस्याध्याहारः ।

## अथ स्तोत्रपाठादिमहिमा ।

स्कान्दे,

गीतं नृत्यं च वाद्यं च तथा पुस्तकवाचनम् ।
पूजाकाले तु राजेन्द्र सर्वदा केशवप्रियम् ॥
गीतवाद्याद्यभावे तु विष्णोर्नामसहस्रकम् ।
स्तवराजं मुनिश्रेष्ठ गजेन्द्रस्य च मोक्षणम् ॥

तथा,

स्तोत्राणां परमं स्तोत्रं विष्णोर्नामसहस्रकम् ।
हित्वा स्तोत्रसहस्राणि पठनीयं महामुने ॥
तेनैकेन मुनिश्रेष्ठ पठितेन सदा हरिः ।
प्रीतिमायाति देवेशो युगकोटिशतानि च ॥
विष्णोर्नामसहस्रं च कलिकाले पठेत्तु यः ।
वेदानां सपुराणानां फलमाप्नोति मानवः ॥
मन्त्रहीनं क्रियाहीनं यत्कृतं पूजनं हरेः ।
परिपूर्णं भवत्याशु सहस्राख्यस्य कीर्त्तनात् ॥

हलायुधः,

शालग्रामशिलाग्रे तु गीताभ्यासं करोति यः ।
संवत्सरसहस्राणि वसते ब्रह्मणः क्षये ॥

क्षये गृहे ।

आब्रह्मस्तम्बपर्यन्तं जगत्तृप्तिं करोति सः ।
विश्वरूपं सदा ध्यायन् विभूतिं यः पठेद्द्विजः ॥
गीताध्यायं पठेद्यस्तु श्लोकार्द्धं श्लोकमेव वा ।
सर्वपापविनिर्मुक्तो याति विष्णोः परं पदम् ॥

तथा,

महाभागवताख्यस्य पुराणस्यैकमक्षरम् ।
यः पठेत्परया भक्त्या स गोदानफलं लभेत् ॥
श्लोकार्द्धं श्लोकपादं वा नित्यं भागवतं पठेत् ।
शृणोति श्रद्धया वापि गोसहस्रफलं लभेत् ॥ इति ।

अथाऽऽसनम् ।

वंशाश्मदारुधरणीतृणपल्लवनिर्मितम् ।
वर्जयेदासनं विद्वान् दारिद्र्यव्याधिदुःखदम् ॥
कृष्णाजिनं कम्बलं च नान्यदासनमिष्यते ।

नारदः,

वंशासने दरिद्रः स्यात् पाषाणे पापसम्भवः ।
धरण्यां दुःखसम्भूतिर्दौर्भाग्यं दारुजासने ॥
तृणासने पशोर्हानिः पल्लवे चित्तविभ्रमः ।
कृष्णाजिने ज्ञानसिद्धिर्मोक्षसिद्धिस्तु व्याघ्रजे ॥

तत्रैव,

अभिचारादिके नीलं रक्तं वश्यादिकर्मणि ।
धनदं शान्तिदं मोक्षः सर्वार्थाश्चैव कम्बले ॥

तथा भागुरिः,

कौशेयं कम्बलं वापि अजिनं पट्टमेव च ।
दारुजं तालपर्णं च आसनं परिकल्पयेत् ।
कृष्णाजिनं गृहस्थेतरपरम् । अत्र काष्ठशब्देनायज्ञीयं काष्ठम् ।

नारदीये,

देवार्चामासुरे काष्ठे उपविश्य करोति यः ।
श्राद्धं वा द्विजशार्दूल तत्पापं त्रिहितं मम ॥

*इति वचनात्, दारुजमिति विष्णुपूजान्यातिरिक्तकर्मपरम्।*

काष्ठासनोपविष्टेन वासुदेवस्य पूजनम् ।

इत्यागमेऽपराधोक्तेः,

पीठासनोपविष्टस्तु पूजयेद्वा निरासनः ।

मृन्मये धूपदानं च दीपं च कुरुतेऽर्चने ॥

इत्यपराधोक्तेश्च। दारुजमपि कुशाद्यन्तारितं ग्राह्यमिति शिष्टाः।

**तथा,**

गोमयं मृन्मयं भौमं नैम्बं पालाशमेव च ।

लोहबद्धं तथा दग्धमासनं परिवर्जयेत् ॥

**तथा,**

शमी च काश्मरी शालः प्लक्षो वा वरणस्तथा ।

पञ्चासनानि शस्तानि श्राद्धे देवार्चने तथा ॥

**पुलस्त्यः,**

पालाशं वटवृक्षोत्थमाश्वत्थं शाकवृक्षकम् ।

मृत्तिकोदुम्बरं पीठं मधूकं च विवर्जयेत् ॥

भिन्नपीठानि वर्ज्यानि पितृदैवतकर्मणि ।

अथ प्रातः उत्थाय शुचिर्भूत्वा विष्णुं विज्ञापयेत् ।

यदुद्यमादिकं कर्म तत्त्वया प्रेरितो हरे ।

करिष्यामि त्वदाज्ञयेति विज्ञापनं मम ॥

प्रातः प्रबोधितो विष्णो हृषीकेशेन यत्त्वया ।

यद्यत्कारयसे कर्म तत्करोमि तवाज्ञया ॥

इति विज्ञाप्य स्तुत्वा वादित्रादिना प्रबोधयेत् ।

**यथा,**

प्रबोधकाले देवस्य तूर्यघोषं करोति यः ।

देवदुन्दुभयस्तस्य तिष्ठन्ति द्वारसन्निधौ ॥

प्रबोधं नैव कुर्वीत देवदेवस्य शार्ङ्गिणः।
विना तूर्यैर्विना स्तोत्रैर्जयेत्युच्चारणैर्विना ॥

अयं प्रबोधविधिः कार्त्तिकशुक्लैकादश्यां द्वादश्यां वा क्रियमाणपरमेश्वरजागरविषयः। नित्यप्रबोधविषय इति केचित्।

इति प्रबोध्य मुखप्रक्षालनार्थं जलं दद्यात्। ततो दन्तकाष्ठं पादुकां मृद्रागं च दद्यात्। यथोक्तम्—

पादुकायाः प्रदानेन गतिमिष्टामवाप्नुयात्।
दन्तकाष्ठप्रदानेन नरः सौभाग्यमृच्छति ॥
जिह्वोल्लेखनिकां दत्त्वा विरोगस्त्वभिजायते।
मृद्रागदानाद्देवस्य भूतिमाप्नोत्यनुत्तमाम् ॥

प्रबोधनमभिधाय विष्णुधर्मोत्तरे,

पठित्वा तु प्रियान् श्लोकान् बहुवादित्रनिःस्वनैः।
प्रभो नीराजनं कुर्यात् मङ्गलाख्यं जगद्धितम् ॥
नीराजनमिदं सर्वैर्द्रष्टव्यं भुवि विग्रहैः।
परमश्रद्धयोपेतैर्वासुदेवपरायणैः ॥ इति।

अथ पूजाप्रकारोऽभिधीयते।

तत्र विष्णूक्तः, सुप्रक्षालितपाणिपादः शुचिर्बद्धशिखी दर्भपाणिराचान्तः प्राङ्मुख उपविष्टो ध्यानी मौनी सम्पूजयेत् न नक्तंगृहीतोदकेन देवकर्म कुर्यात्।

तत्र देहादिशुद्धिक्रमो रत्नकोशे,

प्रथमं देहशुद्धिः स्यात्स्थानशुद्धिरनन्तरम्।
पात्रशुद्धिस्तृतीया तु आत्मशुद्धिः चतुर्थिका ॥
पञ्चमी बिम्बशुद्धिः स्याच्छुद्धयः पञ्च वै स्मृताः। इति।

बिम्बशुद्धिर्देवप्रतिमादिशुद्धिः।

अथ गृह्यपरिशिष्टोक्तः।

प्रतिमाः प्राङ्मुखीरुदङ्मुखो यजेतान्यत्र प्राङ्मुखः सम्भृतसम्भारो यजनभवनमेत्य द्वारदेशे स्थित्वा हस्ततालत्रयेण

अपसर्पन्तु ये भूता ये भूता दिवि संस्थिताः ।
ये भूता विघ्नकर्त्तारस्ते नश्यन्तु शिवाज्ञया ॥

इति विघ्नानुद्वास्य प्रविश्य, येभ्यो माता मधुमत्पिन्वते पयः। एवा पित्रे विश्वेदेवाय वृष्णे ॥ इति जपित्वा, शुचावासने

पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ।
त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥

इत्युपविश्याऽऽयम्य प्राणान्, कर्म सङ्कल्प्य शुचिशङ्खादिजातं सपवित्रमद्भिः प्रणवेन पूरयित्वा गन्धाक्षतपुष्पाणि प्रक्षिप्य सावित्र्याभिमन्त्र्य तीर्थान्यावाह्य तदुदकेनापोहिष्ठीयाभिरात्मानमायतनं यजनाङ्गानि चाभ्युक्ष्य क्रियाङ्गोदकुम्भं गन्धादिभिरभ्यर्च्य नमोऽन्तनाम्ना तत्तल्लिङ्गमन्त्रेण वा क्रमेणोपचारान् कुर्यात् । आवाहनमासनं पाद्यमर्घ्यमाचमनीयं स्नानमाचमनं वस्त्रमाचमनमुपवीतमाचमनं गन्धपुष्पाणि धूपं दीपमुपहारमाचमनं मुखवासं स्तोत्रं प्रणामं प्रदक्षिणं विसर्जनं कुर्यात् । असंपन्नो मनसा सम्पादयेत् । आचमनमपृथगुपचारः, प्रणामः स्तोत्राङ्गं, प्रदक्षिणं विसर्जनाङ्गम् । अथ मन्त्राः । गणानां त्वा गणपतिमिति गणपतेः । कुमारश्चित्पितरमिति स्कन्दस्य । आकृष्णेनेत्यादित्यस्य । पावकान इति सरस्वत्याः । जातवेदस इति शक्तेः । त्र्यम्बकमिति रुद्रस्य । गन्धद्वारामिति श्रियः । इदंविष्णुरिति विष्णोः । एवं षोडशोपचारान् पौरुषेण वा सूक्तेन प्रत्यृचं सर्वत्र प्रयुञ्जते । अन्ये सावित्र्या वा जातवेदसर्चया वा प्राजापत्यया व्याहृतिभिर्वा प्रणवेन वा कुर्वन्ति । स एष देवयज्ञोऽहरहर्गोदानसम्मितः सर्वाभीष्टप्रदः स्वर्गापवर्गदश्च । तस्मादे-

नमहरहः कुर्वीत। तमेनं वैश्वदेवहुतशेषेण पृथगन्नेन वा कुर्यान्नास्य शेषेण वैश्वदेवं कुर्यादिति।

अत्र प्रतिमाः प्राङ्मुखीरुदङ्मुखो यजेतेति यदुक्तं तत्स्थिरप्रतिमाविषयम्। तथा तत्र दर्शनात्। अन्यत्रेति चलप्रतिमाविषयमिति।

अथ शौनकोक्तः।

शौनकोऽहं प्रवक्ष्यामि पुरुषसूक्तार्चने विधिम्।
उत्थाय पश्चिमे यामे शुचिर्भूत्वा समाहितः॥
गुरुं प्रणम्य पूतात्मा त्रिकालमर्चनमारभेत्।
प्रातर्मध्यन्दिने सायं विष्णुपूजां समाचरेत्॥
यथा सन्ध्या भवेन्नित्या देवपूजा तथा बुधैः।
अशक्तौ विस्तरेणैव ततः सम्पूज्य केशवम्॥
मध्याह्ने चैव सायं च प्रातः पुष्पाञ्जलीन् क्षिपेत्।
मध्याह्ने वा विस्तरेण संक्षेपेणाथवा हरिम्॥
सम्पूज्य भोजनं कुर्यादन्यथा नरकं व्रजेत्।
नदीकूपतडागादिह्रदे प्रस्रवणे तथा॥
स्नात्वा यथोक्तविधिना प्राङ्मुखः स्वस्थमानसः।
तीर्थाभिषेकपूतात्मा कृत्वा चैवोर्ध्वपुण्ड्रकम्॥
भूषणाद्यैरलङ्कृत्य भूषणार्दीश्च धारयेत्।
मौक्तिकं च प्रवालं च पद्माक्षं तुलसीं मणिम्॥
जपपूजनवेलायां धारयेद्यः स वैदिकः।
पवित्रपाणिः पूतात्मा पद्मस्थः स्वस्तिकासने॥
उपविश्य स्वशाखोक्तक्रियाः कृत्वाऽग्निहोत्रिकाः।
धारयेदक्षमालां च पद्माक्षं वाथ धारयेत्॥
कुर्यादाराधनं विष्णोर्देवदेवस्य चक्रिणः।

प्रक्षाल्य पादौ हस्तौ च आचम्य प्रयतः शुचिः ॥
पूजागृहं प्रविश्याथ मण्डलं परिलिख्य च ।
सौवर्णेन चतुर्द्वारं समाकारं सविस्तरम् ॥
मण्डपं रचयित्वा तु वितानध्वजतोरणैः ।
अपसर्पन्तुमन्त्रेण सर्वविघ्नं निवार्य च ॥
अपसर्पन्तु ये भूता ये भूता भुवि संस्थिताः ।
ये भूता विघ्नकर्त्तारस्ते नश्यन्तु शिवाज्ञया ॥
नाराचास्त्रं योनिमुद्रां चक्रमुद्रां च दर्शयेत् ।
सुस्थिरो भव ईशान भव मां रक्ष रक्ष च ॥
दिव्यान्तरिक्षभूमिष्ठान् विघ्नानस्त्रेण वारयेत् ।
स्वर्णमयं चतुर्द्वारयुतं विमलशोभितम् ॥
नयनं मीलितं कृत्वा रचितं मण्डपं स्मरेत् ।
नानारत्नैश्च खचितं मौक्तिकैरुपशोभितम् ॥
ध्यात्वा सिंहासनं मध्ये द्वारपालांश्च पूजयेत् ।
पूजयेद्वरुणं भानुं तिलकस्वामिनं तथा ॥
क्षेत्रपालं च धातारं विधातारमनन्तरम् ।
चतुर्द्वाराङ्किते देशे एतान् देवान् पुरो यजेत् ॥
ततः पूर्वद्वारमुख्यान् भद्रादीनर्चयेत् पृथक् ।
भद्रं सुभद्रं गङ्गां च यमुनां द्वारशाखयोः ॥
चतुर्थ्यन्तं नमोऽन्तं च प्राग्द्वारं संप्रपूजयेत् ।
बलप्रबलाचिच्छक्तीर्मायाशक्तिं तथैव च ॥
चतुर्थ्यन्तं नमोऽन्तं च दक्षिणे संप्रपूजयेत् ।
चण्डं प्रचण्डं गौरीं च श्रियं पश्चिमशाखयोः ॥
चतुर्थ्यन्तं नमोऽन्तं च पश्चिमे संप्रपूजयेत् ।
जयं च विजयं चैव शङ्खपद्मनिधी तथा ॥

September. 1911.

THE

# CHOWKHAMBÂ SANSKRIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

## NO. 165.

# वीरमित्रोदयः ।

पूजाप्रकाशः ।

महामहोपाध्यायश्रीमित्रमिश्रविरचितः ।

साहित्योपाध्यायविष्णुप्रसादशर्मणा संशोधितः ।

# VÎRAMITRODAYA,

PUJA PRAKÂSA,

BY

MAHÂMAHOPÂDHYÂYA PANDITA MITRA MIŚRA.

EDITED BY

Vishnu Prashada Saarma.

VOL. III,

FASCICULUS II.

*PUBLISHED AND SOLD BY THE SECRETARY,*

CHOWKHAMBÂ SANSKRIT BOOK-DEPOT.

BENARES.

AGENTS - OTTO HARRASSOWITZ LEIPZIG

PANDITA JYESHTHARÂMA MUKUNDAJI BOMBAY:

PROBSTHAIN & CO., BOOKSELLERS LONDON

*Printed by Jai Krishna Dâsa Gupta,*

AT THE VIDYÂ VILÂSA PRESS.

BENARES.

*Price Rupee one.*

॥ श्रीः ॥

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥
स्तबकः— १६५

१ अस्यां चौखम्बा-संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकःस्तबको मुद्रयित्वा प्रकाश्यते। एकस्मिन् स्तबके एक एव ग्रन्थो मुद्यते।

२ प्राचीना दुर्लभाश्चामुद्रिता मीमांसावेदान्तादिदर्शनव्याकरण धर्मशास्त्रसाहित्यपुराणादिग्रन्था एवात्र सुपरिष्कृत्य मुद्यन्ते।

३ काशिकराजकीयप्रधानसंस्कृतपाठशालाऽध्यापकाः पण्डिता अन्ये च शास्त्रदृष्टयो विद्वांस एतत्परिशोधनादिकार्यकारिणो भवन्ति।

४ भारतवर्षीयैः, ब्रह्मदेशीयैः, सिंहलद्वीपवासिभिश्च एतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम्-मुद्राः ७ आणकाः ८

५ अन्यैर्देयं प्रतिस्तबकम् ,, ,, १ ,, ०

६ प्रापणव्ययः पृथग् नास्ति।

७ साम्प्रतं मुद्यमाणा ग्रन्थाः— मुद्रिताः स्तबकाः

(१) संस्काररत्नमाला। गोपीनाथभट्टकृता (संस्कारः) २

(२) शब्दकौस्तुभः। भट्टोजिदीक्षितकृतः (व्याकरणम्) १०

(३) श्लोकवार्तिकम्। भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृत-न्यायरत्नाकराख्यया व्याख्यया सहितम्। सम्पूर्णम्। १०

(४) भाष्योपबृंहितं तत्त्वत्रयम्। विशिष्टाद्वैतदर्शनप्रकरणम्। श्रीमल्लोकाचार्य्यप्रणीतम्। श्रीनारायणतीर्थ विरचित भाष्टभाषा प्रकाशसहितम्। सं० (वेदान्त) २

(५) करणप्रकाशः। श्रीब्रह्मदेवविरचितः सम्पूर्णः (ज्योतिषः) १

(६) भाट्टचिन्तामणिः। महामहोपाध्याय-श्रीगागाभट्ट विरचितः। तर्कपादः (मीमांसा) २

चतुर्थ्यन्तनमोऽन्तं च तूत्तरे संप्रपूजयेत् ।
अत्र प्रागादिदिग्विभागे विशेषः—
देवस्य मुखमारभ्य दिशं प्राचीं प्रकल्पयेत् ।
तदादि परिवाराणामङ्गावरणसंस्थितिः ॥ इति ।
वामाङ्गं सङ्कुचीकृत्य दक्षिणेन प्रवेशयेत् ।
अन्तःस्थविघ्नानुत्सार्य अस्त्रमन्त्रं समुच्चरन् ॥
दक्षिणस्य तु पादस्य पार्ष्णिघातपुरःसरम् ।
उपविश्यासने शुद्धे प्राणानायम्य यत्नतः ॥
धर्मार्थकाममोक्षार्थं विधिं सङ्कल्पपूर्वकम् ।
कृत्वा तु भूतशुद्धिं च मातृकान्यासमाचरेत् ॥
वायुबीजेन संशोध्य अग्निबीजेन तद्दहेत् ।
आप्लाव्यामृतबीजेन भूतशुद्धिविधिक्रमः ॥
कारयेन्मातृकान्यासमृषिच्छन्दोऽधिदैवतम् ।
स्थानं मन्त्रं तथा न्यासं बिन्द्वन्तं विन्यसेत् क्रमात् ॥
अस्य ब्रह्मा ऋषिश्चैव गायत्री छन्द इष्यते ।
श्रीमातृका सरस्वती देवतेति प्रकीर्तिता ॥
अकारं बिन्दुसहितं बीजमेवेति कीर्त्तितम् ।
द्विबिन्दुसहितोऽकारः शक्तिरित्याभिधीयते ॥
मस्तके मुखवृत्ते च चक्षुषोः श्रवणद्वये ।
नासागण्डोष्ठदन्तेषु पुनर्मूर्ध्नि मुखे तथा ॥
दोःपत्सन्धिषु चाग्रेषु पार्श्वयोः पृष्ठनाभिषु ।
जठरे हृदि दोर्मूले गले परे तु कक्षयोः ॥
हृदादिपाण्योः पादयोर्जठराननयोर्न्यसेत् ।
अकारादिक्षकारान्तो मातृकामन्त्र ईरितः ॥
इमं मन्त्रं जपेद्यस्तु सर्वाभीष्टफलप्रदम् ।

ऋषिं मूर्ध्नि मुखे छन्दो देवतां हृदि विन्यसेत् ॥
आनुष्टुभस्य सूक्तस्य त्रिष्टुबन्तस्य देवता ।
पुरुषो यो जगद्बीजमृषिर्नारायणः स्मृतः ॥
अङ्गुष्ठाग्रे तु गोविन्दं तर्जन्यां च महीधरम् ।
मध्यमायां हृषीकेशमनामिक्यां त्रिविक्रमम् ॥
कनिष्ठायां न्यसेद्विष्णुं करमध्ये तु माधवम् ।
एवं न्यासं पुराकृत्वा देहाङ्गन्यासमाचरेत् ॥
मस्तके केशवं न्यस्य भाले नारायणं तथा ।
माधवं कर्णयोर्न्यस्य गोविन्दं विष्णु नासयोः ॥
विष्णु इत्यत्रामूलोप आर्षः ।
मुखे तु मधुसूदं च कण्ठदेशे त्रिविक्रमम् ॥
वामनं विन्यसेद्वाह्वोः श्रीधरं हृदि विन्यसेत् ।
नाभ्यां विद्यात् हृषीकेशं कट्यां वै पद्मनाभकम् ॥
दामोदरं पादयोश्च न्यासे द्वादशमाचरेत् ।
पुंसूक्तषोडशर्ग्भिश्च सर्वाङ्गन्यासमाचरेत् ॥
सहस्रशीर्षा वामकरे पुरुषएवेति दक्षिणे ।
एतावान् वामपादे तु त्रिपादूर्ध्वेति दक्षिणे ॥
तस्माद्विराड्वामजानौ यत्पुरुषेणेति दक्षिणे ।
तं यज्ञं वामकट्यां तु तस्माद्यज्ञात्तु दक्षिणे ॥
तस्माद्यज्ञान्नाभिमध्ये तस्मादश्वा हृदि न्यसेत् ।
यत्पुरुषं कण्ठदेशे ब्राह्मणोऽस्य भुजे न्यसेत् ॥
चन्द्रमा दक्षिणे न्यस्य नाभ्या आसीन्मुखे न्यसेत् ।
सप्तास्यासन् भ्रुवोर्मध्ये यज्ञेनेति च मूर्धनि ॥
ततः षडङ्गन्यासं च ऋग्भिः कुर्याद्यथाक्रमम् ।
अतोदेवेति हृदये इदंविष्णुः शिरस्यथ ॥

त्रीणिपदेति शिखायां विष्णोः कर्माणि वर्मकम् ।
तद्विष्णोः परमं नेत्रे तद्विप्रासस्तु अस्त्रकम् ।
इत्थं न्यासं पुरा कृत्वा पश्चाद्दिग्बन्धनं चरेत् ॥
अथात्मरक्षान्यासश्च प्रोच्यते च यथाक्रमम् ।
पुरस्तात्केशवः पातु चक्री जाम्बूनदप्रभः ॥
पश्चान्नारायणः पातु शङ्खी जीमूतसन्निभः ।
उर्ध्वं पातु गदारामो माधवेन्दीवरप्रभः ॥
दक्षिणे पातु गोविन्दो धन्वी जीवसमप्रभः :
जीवं बन्धुजीवम् ।
वामे पातु हली विष्णुः पद्मकिञ्जल्कसन्निभः ॥
अरविन्दाभ आग्नेय्यां मुसली मधुसूदनः ।
त्रिविक्रमोऽपि नैर्ऋत्यां ज्वलत्पावकसन्निभः ॥
पद्मजाप्रभुरीशान्यां श्रीधरः पट्टिशायुधः ।
विद्युत्प्रभो हृषीकेश अधो मुद्गरसायुधः ॥
हृत्पद्मे पद्मनाभस्तु सहस्राकसमप्रभः ।
सर्वायुधः सर्वशक्तिरिन्द्रशक्तिसमप्रभः ॥
दामोदरस्तु सर्वाङ्ग आत्मानं पातु नित्यशः ।
इदं सर्वबाधाच्छिद्रं नामद्वादशपञ्जरम् ॥
प्रविष्टो ऽहं न मे किञ्चिद्भयमस्ति कदाचन ।
एवं दिग्बन्धनं कृत्वा गायत्र्या विन्यसेत्ततः ॥
अग्रोदकस्य कलशमस्त्रेण क्षालयेद्बहिः ।
अन्तः कवचमन्त्रेण हृन्मत्रेण प्रपूरयेत् ॥
गन्धादिभिः समभ्यर्च्य ब्रह्मविष्णुशिवैस्त्रिभिः ।
निरीक्षणादिकं कुर्यात् चतुर्मुद्रेण रक्षयेत् ॥
अत्रादिशब्देन अवगुण्ठनदिग्बन्धने गृह्येते । चतुर्मुद्रेण

मालिन्यमृतीकरणगरुडसुरभिमुद्राभिः ।
धेनुमुद्रामृतीकृत्य तार्क्ष्यमुद्रेणं निर्विषम् ।
इमं मे गङ्गे मन्त्रेण तीर्थान्यावाहयेत्ततः ॥
गायत्र्या दशवारेण अभिमन्त्र्य जलं सुधीः ।
कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः ॥
मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ।
कुक्षौ तु सागराः सप्त सप्तद्वीपा वसुन्धरा ॥
ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वकः ।
अङ्गैश्च सहिताः सर्वे कलशं तु समाश्रिताः ॥
पुष्टिः शान्तिश्च गायत्री सावित्री च सरस्वती ।
आयान्तु यजमानस्य दुरितक्षयकारकाः ॥
एतन्मन्त्रस्थितान् देवान् संपूज्य प्रार्थयेत् क्रमात् ।
शङ्खस्य बहिरस्त्रेण संक्षाल्याम्तस्तु वर्मणा ॥
हृन्मन्त्रेण समापूर्य गन्धाद्यैरर्चयेत्ततः ।
शङ्खमुद्रां प्रकुर्वाणो मन्त्रैश्च प्रार्थयेत्ततः ॥
त्वं पुरा सागरोत्पन्नो विष्णुना विधृतः करे ।
निर्मितः सर्वदेवैस्तु पाञ्चजन्य नमोऽस्तु ते ॥
गर्भा देवारिनारीणां विशीर्यन्ते सहस्रशः ।
तव नादेन पाताले पाञ्चजन्य नमोऽस्तु ते ॥
पृथिव्यां यानि तीर्थानि वासुदेवस्य चाज्ञया ।
शङ्खे तिष्ठन्ति विप्रेन्द्रास्तस्माच्छङ्खं समर्चयेत् ॥
अभिमन्त्र्याष्टगायत्र्या देवशङ्खं त्रिपद्यसेत् ।

त्रिपाद्यां असेत् न्यसेत् । कुत्रचित् देवं शंखे त्रिपात् न्यसेत् इतिपाठः ।

तत्र त्रिपादूर्ध्व इतिमन्त्रेणेत्यर्थः ।

शङ्खोदकेन चात्मानं मण्डपद्रव्यभूमिकाम्।
सर्वं संप्रोक्ष्य चास्त्रेण आत्मपूजां समाचरेत्॥
आत्मान्तरात्मपरमज्ञानात्मानं प्रपूजयेत्।
गन्धादि धारयेद्धस्ते रचयेदष्टपत्रकम्॥
कर्णिकां संविलिख्याथ मूर्ध्नि हस्तं विनिक्षिपेत्।
अच्युतोऽहमनन्तोऽहं ब्रह्मात्मध्यानपूर्वकम्॥
भावयित्वा विसृज्याथ पुष्पमाघ्राय दक्षिणे।
भूशुद्ध्यर्थं यागभूमिं गन्धाद्यैरर्चयेज्जपेत्॥
स्योनापृथिविमन्त्रेण अर्घ्यपाद्यार्थमेव तत्।
आचाममधुपर्कार्थं चतुष्पात्रं प्रपूजयेत्॥
जलं च प्रक्षिपेद्द्रव्यगन्धपुष्पैः समर्चयेत्।
तत्रार्घ्यपात्रे दातव्या गन्धपुष्पयवाक्षताः॥
कुशाग्रतिलदूर्वाश्च सर्षपाश्चार्घ्यसिद्धये।
पाद्यपात्रे प्रदातव्या दूर्वा श्यामाकमेव च॥
पद्मं च विष्णुक्रान्तां च पाद्यसिद्ध्यै प्रपूजयेत्।
एलालवङ्गकर्पूरकङ्कोलं जातिकाफलम्॥
मुराख्यां चैव षड्द्रव्याण्याधायाऽऽचमपात्रके।
दध्ना च मधुसर्पिभ्यां मधुपर्को भवेदिह॥
प्रथमं प्रणवेनाथ गायत्र्या चाभिमन्त्रयेत्।
पुनर्व्याहृतिगायत्र्या एवं पात्रचतुष्टयम्॥
विभूषणं गन्धवस्त्रं पुष्पमालां च पत्रकम्।
पूजोपकरणं सर्वं गायत्र्यैव स्पृशन् क्रमात्॥
पञ्चामृताभिषेकार्थं नवकोष्ठेषु सत्कुशान्।
मध्यप्राग्यमसौम्याग्न्ये क्षीरादीन् पूर्य निक्षिपेत्॥
रजांस्यामलकं पिष्टमुष्णगन्धोदकं तथा।

विदिक्षु स्थितपात्राणि पूजयेद्गन्धपुष्पकैः ॥
विद्याऽविद्या प्रकृतिश्च माया तेजः प्रबोधिनी ।
रजः सत्त्वं तमश्चैता नव कोष्ठाधिदेवताः ॥
सङ्कर्षणादिनामानि कोष्ठपात्रेषु च क्रमात् ।
नेत्रेक्षणं चक्ररक्षां धेनुमुद्रां तथैव च ॥
तार्क्ष्यमुद्रां तथा कुर्याद्गायत्र्या चाभिमन्त्रणम् ।
शङ्खोदकेन पीठं तु अस्त्रेण प्रोक्षयेत्ततः ॥
आधारशक्तिः प्रकृतिः कूर्मोऽनन्तो वराहकः ।
पृथ्वी क्षीरार्णवः श्वेतद्वीपश्चेति तथैव च ॥
सुवर्णमण्डपश्चैव हेमप्राकार इष्यते ।
सुवर्णवेदिकामध्ये मन्त्रैः सिंहासनं यजेत् ॥
पूजामन्त्रप्रसिद्ध्यर्थं गुरून् पीठस्य दक्षिणे ।
दुर्गां विघ्नं क्षेत्रपालं वामे वाऽग्रे गरुत्मतम् ॥
विष्वक्सेनं च ईशान्यां सम्पूज्य प्रार्थयेत् क्रमात् ।
धर्मं ज्ञानं च वैराग्यमैश्वर्यं दिक्षु चार्चयेत् ॥
अकारपूर्वकानेतान् विदिक्षु त्वथ पूजयेत् ।
मध्ये कन्दं मूलनालं पद्मं पत्रं सकेसरम् ॥
कर्णिकामध्यदेशे तु सूर्यसोमाग्निमण्डलम् ।
शक्तिमण्डलकं ब्रह्मविष्ण्वीशपरमांस्तथा ॥
एतान् वै मण्डलाधीशानुपर्युपरि पूजयेत् ।
ऋग्वेदादिचतुर्वेदानात्मात्रितयमेवच ॥
कृतं त्रेताद्वापरं च कलिं सत्त्वं रजस्तमः ।
अणिमा गरिमा चैव लघिमा महिमा तथा ॥
प्राप्तिः प्राकाम्यमीशित्वं वशित्वं भूतिरष्टकम् ।
चतुर्थ्यन्तनमोन्तं च पद्ममध्ये प्रपूजयेत् ॥

विमलोत्कर्षिणी ज्ञाना क्रिया योगा तथैव च ॥
प्रज्ञा सत्या तथैवेशानुग्रहा नव शक्तयः ।
एताः सम्पूज्य पीठस्य पूर्वादौ तु यथाक्रमम् ॥
प्रणवेन तु संयुक्तो भगवद्विष्णुसंयुतः ।
सर्वभूतात्मसंयोगो वासुदेवस्वरूपवान् ॥
योगपीठं पद्मजाख्यमात्मानमिति मन्वते ।
नाभिमध्यस्थितं पद्मकर्णिकाकेसरस्थितम् ॥
अष्टैश्वर्यसमायुक्तं श्वेतमत्यन्तनिर्मलम् ।
श्वेताब्जस्थं पद्मकरं गदिनं शङ्खचक्रिणम् ॥
शुद्धस्फटिकसङ्काशं सर्वाभरणभूषितम् ।
वनमालाधरं देवं ध्यायेन्नारायणं प्रभुम् ॥
मानसैरुपचारैश्च पूजां सम्यक् समाचरेत् ।
बहिर्यागप्रसिध्यर्थमुच्चरन् प्रणवं तथा ॥
देवं सुषुम्णा मार्गेण आनीय ब्रह्मरन्ध्रकम् ।
वामनासापुटे ध्यात्वा निर्गतं स्वाञ्जलिस्थितम् ।
सम्पूज्य प्रतिमादौ तु पुष्पमारोप्य मन्त्रतः ॥
सहस्रशीर्षामंत्रेण कुर्यादावाहनं विभोः ।
हृत्स्थं देवं समावाह्य बहिर्बिम्बे नियोजयेत् ॥
आवाहनादिषण्मुद्रा अष्टौ मुद्राश्च दर्शयेत् ।
अवाहनं स्थापनं च संमुखीकरणं तथा ॥
सन्निरोधं प्रसादं च अवगुण्ठनमेव च ।
शङ्खं चक्रं गदां पद्मं मुसलं खड्गमेवच ।
धनुश्चैव तथा बाणमष्टौ मुद्राः प्रदर्शयेत् ॥
भोस्वामिन् जगतां नाथ यावत्पूजावसानकम् ।
तावत्सम्प्रीतिभावेन बिम्बेऽस्मिन् सन्निधौ भव ॥

एतन्मन्त्रेण सम्प्रार्थ्य पादे पुष्पाञ्जलिं क्षिपेत्
यथा देहे तथा देवे न्यासं कुर्याद्विचक्षणः ॥
आद्ययाऽऽवाहनं कुर्यात् सहस्रेतिऋचा तथा ।
आसनं पुरुष एवेदमेतावानस्येति पाद्यकम् ॥
त्रिपादूर्ध्वं उदैदर्घं जलस्पर्शनपूर्वकम् ।
ततोविराडाचमनं स्नानं यत्पुरुषेण तु ॥
पञ्चामृतं गन्धतोयं विशेषस्नपनानि च ।
तं यज्ञं वस्त्रमित्याहुस्तस्माद्यज्ञोपवीतकम् ॥
तस्माद्यज्ञात्सुगन्धं वै तस्मादश्वा सुपुष्पकम् ।
भगवन्तमनुज्ञाप्य तत आवरणं यजेत् ॥
अङ्गैराद्याहुतिं कुर्यात् मूर्त्तिभिस्तदनन्तरम् ।
अग्नीशासुरवायव्यादिषु कोणेषु षट् क्रमात् ॥
वासुदेवश्च सङ्कर्षः प्रद्युम्नश्चानिरुद्धकः ।
दिग्दलेषु प्रपूज्यास्ते सर्वे देवाभिमुख्यकाः ॥
चक्रं शङ्खं गदां पद्मं विदिक्पत्रेषु चार्चयेत् ।
कौस्तुभं खड्गमुसलौ वनमालां तथैव च ॥
दिक्पत्रेषु प्रपूज्यैतांस्तृतीयावरणं त्विदम् ।
ध्वजस्तु गरुडः शङ्खनिधिः पद्मनिधिस्तथा ॥
गणपाचार्यदुर्गाश्च विष्वक्सेनस्तथैव च ।
पूर्वाद्यष्टदले चैव चतुर्थावरणं यजेत् ॥
इन्द्रोऽग्निश्च यमश्चैव निर्ऋतिर्वरुणस्तथा ।
वायुः कुबेर ईशानो ब्रह्मा विष्णुश्च पञ्चमः ॥
पूर्वाद्याशासु दशसु वज्रं शक्तिस्तथैव च ।
दण्डः खड्गायुधं चैव पाशध्वजगदास्तथा ॥
शूलं पद्मं च चक्रं च दिक्पालास्त्राणि वै दश ।

प्रह्लादो नारदश्चैव पुण्डरीकः पराशरः ॥
व्यासः शुकश्चाम्बरीषो वसिष्ठो दाल्भ्यशौनकौ ।
बलिर्विभीषणो भीष्मो रुक्माङ्गदस्तथाङ्गदः ॥
मार्कण्डेयो भृगुश्चैव अर्जुनप्रमुखानिमान ।
देवस्य दक्षिणे भागे परान् भागवतान् यजेत् ॥
सनकः सनन्दनश्चैव वसुदेवः शुकस्तथा ।
देवस्य वामपार्श्वे तु महायोगीश्वरान् यजेत् ॥
अस्त्रेण धूपदीपादीन् प्रोक्ष्य चक्रेण रक्षयेत् ।
अमृतीकृत्य बीजेन निर्विषीकृत्य बीजतः ॥
धेनुमुद्रां प्रदर्श्याथ गन्धाद्यैरर्चयेत्ततः ।
धूपं यत्पुरुषं दीपं ब्राह्मणोस्य प्रदापयेत् ॥
नैवेद्यं चन्द्रमामन्त्रो गायत्र्याऽऽचमनं तथा ।
गायत्र्या चैव ताम्बूलं कर्पूरारात्रिकादिकम् ॥
मुखवासं मन्त्रपुष्पं दर्शयेद्दर्पणादिकान् ।
समर्प्य तुलसीं भक्त्या नाभ्या आसीत्प्रदक्षिणम् ॥
सप्तास्यासन्नमस्कारं स्तोत्रैः स्तुत्वा प्रसादयेत् ।
तिलदानादि नित्यं च स्वशक्त्या च समाचरेत् ॥
अथो गृहीतदेवाज्ञः शङ्खहस्ते करं क्षिपन् ।
होमस्थानं प्रयायाच्च आसने तूपविश्य च ॥
ऋष्यादिन्यासकान् कृत्वा षडङ्गाङ्गुलिरङ्गकान् ।
पुरतोऽग्निं प्रतिष्ठाप्य अग्नावावाहयेत्ततः ॥
सहस्रशीर्षामन्त्रेण देवं बिम्बास्थितं तथा ।
आधारादींश्च पूर्वं तु उपर्यावरणास्थितः ।
आवाहनादिकान् कृत्वा वैष्णवाग्निं समर्चयेत् ॥
जुहुयात् पुरुषसूक्तेन षोडशाज्यतिलात्मकैः ।

अन्नमक्षप्रमाणेन षोडशाहुतिकान् यजेत् ॥
पुरुषसूक्तं जपेत्तत्र प्रार्थयेच्च मनोरथान् ।
समाप्य होमं वह्निस्थं बिम्बे संयोज्य मन्त्रतः ॥
पुनः षोडशभिर्मन्त्रैर्दद्यात्पुष्पाणि पौरुषैः ।
पूजाजपाग्निकार्याद्यैः सुकृतं समुपार्जितम् ॥
भगवन् देवदेवेश सङ्गृहाण नमोऽस्तु ते ।
एतं मन्त्रं समुच्चार्य वरहस्ते जलं क्षिपेत् ॥
मम ज्ञानादिसिध्यर्थं वा विष्णुस्थिरभक्तये ।
कामार्थसिद्धये देव भुक्ताशिष्टं प्रयच्छ मे ॥
एतद्दत्तस्य मन्त्रेण तीर्थाम्बु पिबते नरः ।
न्यासं विधाय देवेशमुद्वास्य हृदि विन्यसेत् ॥
यज्ञेन यज्ञं सम्पूर्णं ज्योतिश्च परमात्मनि ।
सर्वं विष्णुमयं ध्यात्वा चिन्तयेत्पुरुषोत्तमम् ॥
एवं सर्वं जपेद्भूयः पुरुषसूक्तार्चनक्रमम् ।
नित्यमाराधनं कुर्यात्सहैवमधिगच्छति ॥
धन्यो नरः स चायुष्मान् कीर्त्तिमान् पशुमान भवेत् ।
सुखी भूत्वा चिरं कालमन्ते विष्णुपुरं व्रजेत् ॥ इति ।

अथ ऋग्विधानोक्तः

नारायण महाबाहो शृणुष्वैकमनाः प्रभो ।
वक्ष्ये पुरुषसूक्तस्य विधानं त्वर्चनं पुनः ॥
अग्निकार्यं जपाविधिं स्तोत्रं चैव तदात्मकम् ।
आनुष्टुभस्य सूक्तस्य त्रिष्टुबं तस्य देवता ॥
पुरुषो यो जगद्बीजमृषिर्नारायणः स्मृतः ।
आद्यां न्यसेद्वामहस्ते द्वितीयां दक्षिणे तथा ॥
तृतीयां वामपादे तु चतुर्थीं दक्षिणे तथा ।

पञ्चमीं वामजानौ तु षष्ठीं वै दक्षिणे तथा ॥
सप्तमीं वामकट्यां तु अष्टमीं दक्षिणे तथा ।
नवमीं नाभिमध्ये तु दशमीं हृदये तथा ॥
एकादशीं कण्ठदेशे द्वादशीं वामबाहुके ।
त्रयोदशीं दक्षिणे च आस्यमध्ये चतुर्दशीम् ॥
अक्ष्णोः पञ्चदशीं चैव षोडशीं मूर्ध्नि विन्यसेत् ।
यथात्मनि तथा देवे न्यासं कृत्वा विधानतः ॥
न्यासेन तु भवेत्सोऽपि स्वयमेव जनार्दनः ।
एवं न्यासविधिं कृत्वा पश्चाद्यागं समाचरेत् ॥
गन्धमाल्यैरभिहितैरात्मानं सम्यगर्चयेत् ।
ततः पीठान्तमाराध्य गन्धपुष्पाक्षतैः शुभैः ॥
आद्ययाऽऽवाहयेद्देवमृचा तु पुरुषोत्तमम् ।
द्वितीययाऽऽसनं दद्यात् पाद्यं चैव तृतीयया ॥
चतुर्थ्याऽर्घ्यं प्रदातव्यं पञ्चम्याऽऽचमनीयकम् ।
षष्ठ्या स्नानं प्रकुर्वीत सप्तम्या वस्त्रमेव च ॥
यज्ञोपवीतमष्टम्या नवम्या गन्धमेव च ।
दशम्या पुष्पदानं स्यादेकादश्या तु धूपकम् ॥
द्वादश्या च तथा दीपं त्रयोदश्योपहारकम् ।
चतुर्दश्याऽञ्जलिं कुर्यात्पञ्चदश्या प्रदक्षिणाम् ॥
षोडश्योद्वासनं कुर्यादेवमेव समर्चयेत् ।
स्नाने वस्त्रोपवीते च भुक्तौ चाचमनीयकम् ॥
हुत्वा षोडशभिर्मन्त्रैः षोडशान्नस्य चाहुतीः ।
शेषं निवेदयेत्तस्मै दद्यादाचमनं ततः ॥
ततः षोडशभिर्मन्त्रैर्दद्यात्पुष्पाणि षोडश ।
एवमेव समभ्यर्च्य ततः पापैः प्रमुच्यते ॥

पौरुषेण च सूक्तेन तद्विष्णोः परमेण च ।
नैताभ्यां सदृशो मन्त्रो वेदेषूक्तश्चतुर्ष्वपि ॥
एवं षोडशभिः पूज्य ततः सूर्यार्चनं पुनः ।
यथा देवे तथा देहे क्षिप्त्वा पुष्पाणि वै द्विजः ॥
जितं त इतिमन्त्रेण क्षिप्त्वा पुष्पाणि मूर्धनि ।
क्षिप्तान्येतेषु पुष्पाणि स्वयं गृह्णाति केशवः ॥
जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
नमस्तेऽस्तु हृषीकेश महापुरुषपूर्वज ॥
यन्नोपपद्यते किञ्चित् ध्यायेत्तन्मनसैव तु ।
सम्पाद्यते तु तत्सर्वं देवदेवस्य चक्रिणः ॥
ततः प्रदक्षिणं कृत्वा नत्वा चैव समाहितः ।
बध्वा मुकुटमुद्रां तु ललाटोपरि संस्थिताम् ॥
जप्त्वा चैव यथाशक्त्या सूक्तं देवे निवेदयेत् ।
तदेतत्प्रयतो भूत्वा जितं त इति कीर्त्तयेत् ॥
विसर्जनमनेनैव कर्मान्तं कारयेद्बुधः ।
जानुभ्यां धरणीं गत्वा मूर्ध्ना हरिमथो वहेत् ॥
भगवन् देवदेवेश पुरुषोऽसि जनार्दन ।
क्षमस्व पुण्डरीकाक्ष भक्तस्य तु विशेषतः ॥
ज्ञानादज्ञानतो वापि यन्न्यूनादि कृतं मया ।
तत्सर्वं पूर्णमेवास्तु त्वत्प्रसादाज्जनार्दन ॥
शङ्खचक्रगदापाणिं ध्यात्वा विष्णुं समर्चयेत् ।
षण्मासात्सिद्धिमाप्नोति एवमेनं समर्चयन ॥
संवत्सरेण तेनैव सायुज्यमधिगच्छति ।
दद्यात्पुरुषसूक्तेन यः पुष्पाण्यप एव वा ॥
अर्चितं तेन वै सर्वं त्रैलोक्यं सचराचरम् । इति

## अथ बौधायनोक्तः।

अथातो महापुरुषस्याहरहः परिचर्याविधिं व्याख्यास्यामः। स्नात्वा शुचिः शुचौ देशे गोमयेनोपलिप्य प्रतिकृतिं कृत्वाऽक्षतपुष्पैर्यथालाभमर्चयेत् सह पुष्पोदकेन महापुरुषमावाहयेत् ॐभूः पुरुषमावाहयामि ॐभुवः पुरुषमावाहयामि ॐभूर्भुवः सुवः पुरुषमावाहयामीत्यावाह्य आयातु भगवान् महापुरुष इति अथ स्वागतेनाभिनन्दति स्वागतमनुवागतं भगवते महापुरुषाय एतदासनमुपक्लृप्तमत्रास्तां भगवान् महापुरुष इति। अत्र कूर्चं ददाति भगवतेऽयं कूर्चो दर्भमयस्त्रिवृद्धरितसुवर्णस्तं जुषस्वेति। अत्र स्थानानि कल्पयति अग्रतः शङ्खाय कल्पयामि चक्राय कल्पयामि, दक्षिणतो गदायै कल्पयामि वनमालायै कल्पयामि, पश्चिमतः श्रीवत्साय कल्पयामि गरुत्मते कल्पयामि, उत्तरतः श्रियै कल्पयामि सरस्वत्यै कल्पयामि, दक्षिणतः पुष्ट्यै कल्पयामि तुष्ट्यै कल्पयामीति। अथ सावित्र्या पात्रमभिमन्त्र्य प्रक्षाल्य तिरः पवित्रमित्यप आनीय सह पवित्रेणादित्यं दर्शयेदोमिति ततस्तास्त्रीणि पदा विचक्रमे इति पाद्यं दद्यात्प्रणवेनार्घ्यमथ व्याहृतिभिर्निर्माल्यं व्यपोह्योत्तरतो विष्वक्सेनाय नम इति। अथैनं स्नापयत्यापोहिष्ठामयो भुव इति तिसृभिः, हिरण्यवर्णाः शुचयः पावका इति, ब्रह्मजज्ञानं, वामदेव्यर्चा यजुः पवित्रेण इत्येताभिः षड्भिः स्नापयित्वाऽद्भिस्तर्पयति केशवं नारायणं माधवं गोविन्दं विष्णुं मधुसूदनं त्रिविक्रमं वामनं श्रीधरं हृषीकेशं पद्मनाभं दामोदरं तर्पयामीति तर्पयित्वा अथैतानि वस्त्रयज्ञोपवीतान्याचमनीयान्युदकेन, व्याहृतिभिः प्रदक्षिणमुदकं परिषिच्य, इदंविष्णुर्विचक्रमे इति गन्धं दद्यात्। तद्विष्णोः परमं पदमिति पुष्पम्, इरावतीत्यक्षतम्, सावित्र्या धूपम्, उद्दीप्यस्वेति दीपम्, देव-

स्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् भगवते महापुरुषाय जुष्टं चरुं निवेदयामीति नैवेद्यम् । अथ केशवादिनामभिर्द्वादशपुष्पाणि दद्यात् । शङ्खाय नमश्चक्राय नमो गदायै नमो वनमालायै नमः श्रीवत्साय नमो गरुत्मते नमः श्रियै नमः सरस्वत्यै नमः पुष्ट्यै नमस्तुष्ट्यै नम इति संपूज्य शिष्टैर्गन्धमाल्यैर्ब्राह्मणानलङ्कृत्य अथ शिष्टैर्गन्धमाल्यैरात्मानमलङ्कृत्याथैनमृग्यजुःसामाथर्वभिः स्तुतिभिः स्तुत्वा ध्रुवसूक्तं जप्त्वा पुरुषसूक्तं चान्यांश्च वैष्णवान् मन्त्रानित्येके । ॐ भूर्भुवः स्वर्महरोंभगवते महापुरुषाय चरुमुद्वासयामीत्युद्वास्य प्रयातु भगवान् महापुरुषोऽनेन हविषा तृप्तो हरिः पुनरागमनाय पुनः सन्दर्शनाय चेति । प्रतिमास्थानेष्वप्स्वग्नावावाहनविसर्जनवर्जं सर्वं समानं महत्स्वस्त्ययनमित्याचक्षते महत्स्वस्त्ययनमित्याचक्षत इत्याह भगवान् बौधायन इति ।

अथ विष्णुधर्मोत्तरोक्तः ।

स्वाचान्तः प्रयतः स्नातः प्रविशेद्देवतागृहम् ।
नमस्कारं तु कुर्वीत तत्र भक्त्या समाहितः ॥
आपोहिष्ठेति तिसृभिस्ततोऽर्घ्यं विनिवेदयेत् ।
हिरण्यवर्णेति तथा पाद्यं चतसृभिर्द्विज ॥
पवमानश्च मन्त्रेण देयमाचमनं भवेत् ।
इदमापः प्रवहत स्नानमन्त्रः प्रकीर्त्तितः ॥
रथे अक्षेषु च तथा चतस्रस्त्वनुलेपने ।
रथे अक्षेष्वयं मन्त्रोऽनुलेपने इत्यर्थः ।
युवासुवासा इति च मन्त्रो वाससि कीर्तितः ।
पुष्पं पुष्पावतीत्येव धूपं धूरसिचाप्यथ ॥
तेजोसि शुक्रमित्येव दीपं दद्याद्विचक्षणः ।

दधिक्राव्णेति च तथा मधुपर्कं निवेदयेत् ॥
हिरण्यगर्भ इत्यष्टावृचः प्रोक्ता निवेदने ।
अन्नस्य मनुजश्रेष्ठ पानस्य च सुगन्धिनः ॥
चामरं व्यजनादर्शौ छत्रं यानासने तथा ।
यत्किञ्चिद्देयं देवस्य सावित्र्येण निवेदयेत् ॥
पौरुषं च जपेत्सूक्तं तेनैव जुहुयात्तथा ।
इति विष्णुधर्मोत्तरोक्तो भगवत्पूजनविधिः ।
अथ भागवतोक्तः पूजाविधिः ।
एकादशस्कन्धे,

उद्धव उवाच ।

क्रियायोगं समाचक्ष्व भवदाराधनं प्रभो ।
यस्माद्ये त्वां समर्चन्ति सात्वताः पुरुषर्षभ ॥
सात्वता विष्णोर्भक्ताः ।
श्रीभगवानुवाच ।
न ह्यन्तोऽनन्तपारस्य कर्मकाण्डस्य चोद्धव ।
संक्षिप्तं वर्णयिष्यामि यथावदनुपूर्वशः ॥
वैदिकस्तान्त्रिको मिश्र इति वै त्रिविधो मखः ।
त्रयाणामीप्सितेनैव विधिना मां समर्चयेत् ॥
यदा स्वनिगमेनोक्तं द्विजत्वं प्राप्य पूरुषः ।
यथा यजेत मां भक्त्या श्रद्धया तन्निबोध मे ॥
अर्चायां स्थण्डिलेऽग्नौ वा सूर्ये च हृदि वा द्विजे ।
द्रव्येण भक्तियुक्तश्चेत्स्वगुरुं माममायया ॥
पूर्वं स्नानं प्रकुर्वीत धौतदन्तोऽङ्गशुद्धये ।
उभयैरपि च स्नानं मन्त्रैर्मृद्ग्रहणादिना ॥
उभयैर्वैदिकतान्त्रिकमन्त्रैः ।

सन्ध्योपास्त्यादि कर्माणि वेदेनाचोदितानि वै ।
आचोदितानि साकल्येन विहितानि ।
पूजां तैः कल्पयेत् सम्यक्सङ्कल्पः कर्मपावनीम् ॥
सम्यक् परमेश्वरविषये सङ्कल्पो यस्य तथाभूतः सन् । कर्मपावनीं कर्मनिवर्हिणीम् ।
शैली दारुमयी लौही लेप्या लेख्या च सैकती ।
मनोमयी मणिमयी प्रतिमाऽष्टविधा स्मृता ॥
लेप्या मृच्चन्दनादिमयी ।
चलाचलेति द्विविधा प्रतिष्ठा जीवमन्दिरम् ।
प्रतिष्ठा प्रतिमा । जीवस्य भगवतो मन्दिरम् ।
उद्वासावाहने न स्तः स्थिरायामुद्धवार्चने ।
अस्थिरायां विकल्पः स्यात् स्थण्डिले तु भवेद्द्वयम् ॥
स्नपनं त्वविलेप्यायामन्यत्र परिमार्जनम् ।
अविलेप्यायाम् मृन्मयलेख्यव्यतिरिक्तायाम् ।
अन्यत्र विलेप्यां लेख्यायां च ।
द्रव्यैः प्रसिद्धैर्मद्यागः प्रतिमादिष्वमायिनः ।
भक्तस्य तु यथालब्धैर्हृदि भावेन चैव हि ॥
स्नानालङ्करणं प्रेष्ठमर्चायामेव तूद्धव ।
प्रेष्ठं प्रियतमम् ।
स्थण्डिले तत्त्वविन्यासो वह्नावाज्यप्लुतं हविः ।
सूर्ये चाभ्यर्हणं श्रेष्ठं सलिले सलिलादिभिः ॥
अभ्यर्हणमुपस्थानार्घ्यादि
श्रद्धयोपहृतं प्रेष्ठं भक्तेन मम वार्यपि ।
गन्धो धूपः सुमनसो दीपोऽन्नाद्यं च किंपुनः ॥
शुचिः संभृतसम्भारः प्राग्दर्भैः कल्पितासनः ।

प्रागद्भैः प्रागग्रैर्दर्भैः ।

आसीनः प्रागुदग्वार्चेदर्चायां त्वथ संमुखः ॥

कृतन्यासः कृतन्यासां मदर्चां पाणिनाऽऽमृजेत् ।

आमृजेत् निर्माल्यापकर्षणादिना शोधयेत् ।

कलशं प्रोक्षणीयं च यथावदुपसाधयेत् ।

तदद्भिर्देवयजनं द्रव्याण्यात्मानमेव च ॥

प्रोक्ष्य पात्राणि त्रीण्यद्भिस्तैस्तैर्द्रव्यैश्च साधयेत् ।

पाद्यार्घ्याचमनीयार्थं त्रीणि पात्राणि देशिकः ॥

देशिकः पूजकः ।

हृदा शीर्ष्णा च शिखया गायत्र्या चाभिमन्त्रयेत् ॥

पाद्यार्घाचमनीयपात्राणि क्रमेण हृदादिमन्त्रैर्नमः स्वाहाव षट्रूपैः गायत्र्या च प्रत्येकमभिमन्त्रयेत् इत्यर्थः ।

पिण्डे वाय्वग्निसंशुद्धे हृत्पद्मस्थां परां मम ।

अण्वीं जीवकलां ध्यायेन्नादान्ते सिद्धभाविताम् ॥

तयात्मभूतया पिण्डे व्याप्ते संपूज्य तन्मयः ।

आवाह्यार्चादिषु स्थाप्य न्यस्ताङ्गं मां प्रपूजयेत् ॥

पिण्डे देहे । वाय्वग्निसंशुद्धे कोष्ठगतेन वायुना शोषिते आधारगतेनाग्निना दग्धे पुनर्ललाटस्थचन्द्रमण्डलामृताप्लावनेनामृतमये जाते । परां श्रेष्ठाम् । जीवकलां श्रीनारायणमूर्त्तिं ध्यायेत् । कीदृशीं नादान्ते सिद्धभाविताम् । प्रणवस्य अकारोकारमकारबिन्दुनादाः पञ्चांशाः तत्र नादान्ते सिद्धैर्ध्याताम् ।

तथाच श्रुतिः,

यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः ।

तस्य प्रकृतिलीनस्य यः परः स महेश्वरः ॥

तयाऽऽत्मभूतया स्वेनैकीभावेन चिन्तितया अमृतमये पिण्डे

दीपेन प्रभया गृहे इव व्याप्ते सति तस्मिन्नेवादौ मानसैरुपचारैः संपूज्य तन्मयः सन् अर्चादिष्वावाह्य स्थापनमुद्रया स्थापयित्वा उभाभ्यां वेदतन्त्राभ्यां पूजयेत्।न्यस्ताङ्गम् आवरणादेवतासहितम्।

पाद्योपस्पर्शार्हणादीनुपचारान् प्रकल्पयेत् ।
उपस्पर्श आचमनम् । अर्हणमर्घ्यम् ।
धर्मादिभिश्च नवभिः कल्पयित्वाऽऽसनं मम ।
पद्ममष्टदलं तत्र कर्णिकाकेसरोज्वलम् ॥
उभाभ्यां वेदतन्त्राभ्यां मह्यं तूभयसिद्धये ।

अयमर्थः । धर्मज्ञानवैराग्यैश्वर्याण्यासनपर्यङ्कस्याऽऽग्नेयादिचतुष्कोणेषु पादाः। अधर्मादीनि पूर्वादिदिक्षु गात्राणि। आत्माऽन्तरात्मपरमात्मज्ञानात्मान इति मध्ये।मध्ये च पद्मकर्णिकायां सत्त्वादयस्त्रयो गुणाः सूर्यसोमाग्निमण्डलानि पूर्वादिदिक्षु पट्टिकाः। तत्र पूर्वादिक्रमेण मध्ये च विमलोत्कर्षिणी ज्ञाना क्रिया योगा प्रह्वी सत्येशानानुग्रहेति नव शक्तयः । एवं यथोपदेशं धर्मादिभिर्नवभिः सशक्तिभिरासनं कल्पयेत् । 'कर्णिकाकेसरोज्वलमिति' कर्णिकया केसरैस्तत्रस्थसूर्यादिमण्डलैश्चोज्वलमित्यर्थः ।

सुदर्शनं पाञ्चजन्यं गदासीषुधनुर्हलान् ।
मुसलं कौस्तुभं मालां श्रीवत्सं चानुपूजयेत् ॥
नन्दं सुनन्दं गरुडं प्रचण्डं चण्डमेव च ।
महाबलं बलं चैव कुमुदं कुमुदेक्षणम् ॥
दुर्गां विनायकं व्यासं विष्वक्सेनं गुरून् सुरान् ।
स्वस्वस्थानेष्वभिमुखान् पूजयेत्प्रोक्षणादिभिः ॥

सुदर्शनादिमुसलान्तान्यायुधान्यष्टदिक्षु, कौस्तुभवनमालाश्रीवत्सानुपरि, नन्दादिपार्षदानष्टदिक्षु, गरुडं पुरतः, दुर्गादीन् कोणेषु, गुरून् वामतः, सुरानिन्द्रादिलोकपालान् पूर्वादिदिक्षु

एवमेतान् देवस्याभिमुखान् प्रोक्षणादिभिरर्घ्यादिभिः पूजयेदित्यर्थः ।

चन्दनोशीरकर्पूरकुङ्कुमागुरुवासितैः ।
सलिलैः स्नापयेन्मन्त्रैर्नित्यदा विभवे सति ॥
स्वर्णघर्मानुवाकेन महापुरुषविद्यया ।
पौरुषेणापि सूक्तेन सामभी राजनादिभिः ॥

स्वर्णघर्मानुवाकः सुवर्णं घर्मं परिवेदवेनमित्यनुवाकः । महापुरुषविद्या जितं ते पुण्डरीकाक्षेति । पौरुषं सूक्तं सहस्रशीर्षेत्यादि. । राजनादीनि सामानि. इन्द्रं नरोनेमधिताहवन्त इत्यस्यामृचि गीतानि । आदिशब्देन रोहिणादीनि ।

वस्त्रोपवीताभरणपत्रस्रग्गन्धलेपनैः ।
अलङ्कुर्वीत सप्रेम मद्भक्तो मां यथोचितम् ॥

पत्राणि वक्षःस्थलादिषु लिखिताः पत्रभङ्ग्यः ।

पाद्यमाचमनीयं च गन्धान् सुमनसोऽक्षतान् ।
धूपदीपोपहाराणि दद्यान्मे श्रद्धयाऽर्चकः ॥
गुडपायससर्पींषि शष्कुल्यापूपमोदकान् ।
संयावदधिसक्तूंश्च विभवे सति कल्पयेत् ॥
अभ्यङ्गोन्मर्दनादर्शदन्तधावाभिषेचनम् ।
अन्नाद्यं नृत्यगीतानि पर्वणि स्युरुतान्वहम् ॥

पर्वण्येकादश्यादौ । अन्वहं प्रत्यहं वा ।

विधिना विहिते कुण्डे मेखलागर्त्तवेदिभिः ।
अग्निमाधाय परितः समूहेत्पाणिनोदितम् ।

विधिना स्वगृह्योक्तप्रकारेण । मेखलादिभिरुपलक्षिते ।वा विहिते निर्मिते । तदुक्तम्—

त्रिस्तारोच्छ्रायतास्तिस्रो मेखलाश्चतुरङ्गुलाः ।

हस्तमानो भवेद्वृत्तः सयोनिर्वेदिका तथा ॥
उदितं प्रज्वलितमग्निं परितः समूहेत् एकत्र मेलयेत् ।
परिस्तीर्याऽथ पर्युक्षेदन्वाधाय यथाविधि ।
प्रोक्षण्यासाद्य द्रव्याणि प्रोक्ष्याग्नावावहेत माम् ॥
तप्तजाम्बूनदप्रख्यं शङ्खचक्रगदाम्बुजैः ।
लसच्चतुर्भुजं शान्तं पद्मकिञ्जल्कवाससम् ॥
स्फुरत्किरीटकटककटिसूत्रवराङ्गदम् ।
श्रीवत्सवक्षसं भ्राजत्कौस्तुभं वनमालिनम् ॥
ध्यायन्नभ्यर्च्य दारूणि हविषाभिघृतानि च ।
अभिघृतानि संसिक्तानि । दारूणि द्रव्यसमिधः ।
प्रास्याज्यभागावाघारौ दत्त्वा चोपप्लुतं हविः ॥
प्रास्य प्रक्षिप्य ।
जुहुयान्मूलमन्त्रेण षोडशर्चावदानतः ।
धर्मादिभ्यो यथान्यायं मन्त्रैः स्विष्टकृतं बुधः ॥

मूलमन्त्रेण नारायणाष्टाक्षरमन्त्रेण । तथा षोडश ऋचो यस्मिन् तेन पुरुषसूक्तेन । अवदानतः प्रत्यृचमाहुतिग्रहणेन । पुरुषसूक्तेनाराधनपक्षे स एव मूलमन्त्रस्तेनैव प्रत्यृचमवदानतो होम इति । मन्त्रैः स्वाहान्तैर्नाममन्त्रैः । यथान्यायं पूजाक्रमेणैव स्विष्टकृत् 'अग्नये स्विष्टकृते स्वाहे'ति ।

अभ्यर्च्याथ नमस्कृत्य पार्षदेभ्यो बलिं हरेत् ।

अभ्यर्च्येति वह्निस्थं भगवन्तमभ्यर्च्य नमस्कृत्य पार्षदेभ्यो नन्दादिभ्योऽष्टदिक्षु बलिं हरेत् ।

मूलमन्त्रं जपेद्ब्रह्म स्मरन्नारायणात्मकम् ॥

ततः पूजास्थानमागत्य देवस्याग्रे समुपविश्य यथाशक्ति मूलमन्त्रं जपेत् ।

दत्त्वाचमनमुच्छेषं विष्वक्सेनाय कल्पयेत्।

नैवेद्ये होमे च भगवतो भोजनसमाप्तिं ध्यात्वा ऽऽचमनं दत्त्वोच्छेषणं विष्वक्सेनाय कल्पयित्वा तदनुज्ञया पश्चात्स्वयं भुञ्जीत।

मुखवासं सुरभिमत्ताम्बूलाद्यमथार्हयेत्।

सुगन्धवत्ताम्बूलाद्यं मुखवासं दत्त्वा पुनरपि अर्हयेत् पुष्पाञ्जलिना पूजयेत्।

उपगायन् गृणन् नृत्यन् कर्माण्यभिनयन् मम।
मत्कथां श्रावयन् शृण्वन् मुहूर्त्तं क्षणिको भवेत्॥

अभिनयन् स्वस्मिन्नाविष्कुर्वन्। क्षणिकः वैयग्र्यं परित्यज्य लब्धावसरो भवेत्।

स्तवैरुच्चावचैः स्तोत्रैः पौराणैः प्राकृतैरपि।
स्तुत्वा प्रसीद भगवन्निति वन्देत दण्डवत्॥
शिरो मत्पादयोः कृत्वा बाहुभ्यां च परस्परम्।
प्रपन्नं पाहि मामीश भीतं मृत्युग्रहार्णवात्॥

बाहुभ्यां दक्षिणोत्तराभ्यां परस्परं मम दक्षिणोत्तरौ पादौ गृहीत्वा। यद्वा पृष्ठतः परस्परं निबद्धाभ्यां कृतापराध इव, प्रपन्नमित्यादिविज्ञप्त्या च प्रणमेत्।

इति शेषां मया दत्तां शिरस्याधाय सादरम्।
उद्वासयेच्चेदुद्वास्यं ज्योतिर्ज्योतिषि तत्पुनः॥

इति अनया प्रार्थनया शेषां निर्माल्यं मया दत्तां शिरस्याधाय सादरम् दत्त्वा यद्युद्वासयेत्तर्हि प्रतिमायां यन्न्यस्तं ज्योतिस्तत्पुनरपि हृत्पद्मस्थे ज्योतिष्येव उद्वासनीयम्।

अर्चादिषु यदा यत्र श्रद्धा मां तत्र चार्चयेत्।
सर्वभूतेष्वात्मनि च सर्वत्राहमवस्थितः॥

एवं क्रियायोगपथैः पुमान् वैदिकतान्त्रिकैः ।
अर्चन्नुभयतः सिद्धिं मर्त्यो विन्दत्यभीप्सिताम् ॥ इति ।
अमन्त्रेण न वै पूज्यः स्वमन्त्रेण स्वमुद्रया ।
स्वध्यानेन सदा पूज्यो नान्यथा पूजयेद्धरिम् ॥
स्वमूर्त्तिः स्वेन मन्त्रेण पूज्यैवावाहनं विना ।
सर्वाः शिलाः समभ्यर्च्याः पुरुषसूक्तेन नित्यशः ॥
आवाहनऋचा दद्यात्पूर्वं पुष्पाञ्जलिं हरेः ।
तस्यैवोन्मुखताप्राप्त्यै यागे चोद्वासने ऋचा ॥
अन्ते पुष्पाञ्जलिं दद्यात् यागसंपूर्त्तिसिद्धये । इति ।

यागे पूजायाम् । उद्वासने ऋचा उद्वासनविहितया ऋचा पूजान्ते पुष्पाञ्जलिं दद्यादित्यर्थः ।

अथाष्टाक्षरपूजाविधिर्नरसिंहपुराणे,

अष्टाक्षरेण देवेशं नरसिंहमनामयम् ।
गन्धपुष्पादिभिर्नित्यमर्चयेदच्युतं नरः ॥
ज्ञेयश्चाष्टाक्षरो मन्त्रः सर्वपापहरः परः ।
सर्वदुःखहरः श्रीमान् सर्वकार्यकरः शुभः ॥
अष्टाक्षरस्य मन्त्रस्य ऋषिर्नारायणः स्मृतः ।
छन्दश्च देवी गायत्री परमात्मा च देवता ॥
गन्धपुष्पादिसकलमनेनैव निवेदयेत् ।
अनेनैवार्चितो विष्णुः प्रीतो भवति तत्क्षणात् ॥
किं तस्य बहुभिर्मन्त्रैः किं तस्य बहुभिर्मखैः ।
ॐनमोनारायणायेति मन्त्रः सर्वार्थसाधकः ॥

स्मृत्यर्थसारे,

स्त्रीशूद्राणां च भवति नाम्ना वै देवतार्चनम् ।
सर्वे चागममार्गेण कुर्युर्वेदानुसारिणः ॥

गुरूक्तेन प्रकारेण वेदबाह्येन नार्चयेत् ।
पूजान्ते पुष्पसमर्पणे विशेष उक्तः—
कूर्मपुराणे,
ध्यात्वा प्रणवपूर्वं तु देवतां च समाहितः ।
नमस्कारेण पुष्पाणि विन्यसेच्च पृथक् पृथक् ॥
पूजान्ते कर्तव्यतोक्ता तत्रैव,
निवेदयीत चात्मानं विष्णवेऽमिततेजसे ।
तदात्मा तन्मनाः शान्तस्तद्विष्णोरिति मन्त्रतः ॥ इति ।
विष्वक्सेनाय नैवेद्यांशः कियान् देय इत्याह—
सङ्ग्रहकारः,
विष्वक्सेनाय दातव्यं नैवेद्यस्य शतांशकम् ।
पादोदकं प्रसादं च लिङ्गे चण्डेश्वराय च ॥ इति ।

**अथात्रैव प्रसङ्गात् मुद्रालक्षणान्युच्यन्ते ।**

सङ्ग्रहे,
अर्चने जपकाले तु ध्याने काम्ये च कर्मणि ।
तत्तन्मुद्राः प्रयोक्तव्या देवतासन्निधापकाः ॥
हस्ताभ्यामञ्जलिं कृत्वाऽनामिकामूलपर्वणोः ।
अङ्गुष्ठौ निक्षिपेत्सेयं मुद्रा त्वावाहनी स्मृता ॥
अधोमुखी त्वियं चेत्स्यात् स्थापनी मुद्रिका स्मृता ।
उत्थिताङ्गुष्ठमुख्योस्तु संयोगात्सन्निधापनी ॥
अन्तःप्रवेशिताङ्गुष्ठा सैव संरोधिनी मता ।
उत्तानौ तु करौ कृत्वा प्रसार्य हृदयास्थितौ ॥
प्रसादमुद्रा विज्ञेया सर्वदेवप्रसादिनी ।
हस्तौ तु संमुखौ कृत्वा मुष्टीकृत्वा विकुञ्चयेत् ॥
तयोरुपरि चाङ्गुष्ठौ निक्षिपेद्द्वितं तथा ।

अवगुण्ठनमुद्रेयं सर्वकामफलप्रदा ॥
मुष्टिद्वयस्थिताङ्गुष्ठौ संमुखौ च परस्परम् ।
संश्लिष्टावुच्छ्रितौ कुर्यात्सेयं संमुखमुद्रिका ॥
प्रसृताङ्गुलिकौ हस्तौ मिथः श्लिष्टौ च संमुखौ ।
कुर्यात्स्वहृदये चेयं मुद्रा प्रार्थनसंज्ञिका ॥
समस्तानां देवतानामेताः शस्तास्तु पूजने ।
वामाङ्गुष्ठं तु सङ्गृह्य दक्षिणेन तु मुष्टिना ॥
कृत्वोत्तानं तथा मुष्टिमङ्गुष्ठं तु प्रसारयेत् ।
वामाङ्गुल्यस्तथा श्लिष्टाः संयुक्ताः सुप्रसारिताः ॥
दक्षिणाङ्गुष्ठसंस्पृष्टा मुद्रा शङ्खस्य चोदिता ।
हस्तौ तु संमुखौ कृत्वा संलग्नौ तु प्रसारितौ ॥
कनिष्ठाङ्गुष्ठकौ लग्नौ मुद्रा चक्रस्य सिद्धिदा ।
अन्योन्याभिमुखौ हस्तौ कृत्वा तु ग्रन्थिताङ्गुली ॥
अङ्गुल्यौ मध्यमे भूयः संलग्नौ सुप्रसारितौ ।
गदामुद्रेयमाख्याता परा मुक्तिकरी तथा ॥
ऊरौ तु संहतौ कृत्वा संहृतावुन्नताङ्गुली ।
तलान्तमिलिताङ्गुष्ठौ कुर्यादेषाऽब्जमुद्रिका ॥
मुष्टिं कृत्वा तु हस्ताभ्यां वामस्योपरि दक्षिणम् ।
कुर्यान्मुसलमुद्रेयं सर्वविघ्नप्रमर्दिनी ॥
कनिष्ठानामिके बध्वा स्वाङ्गुष्ठेनैव वामतः ।
शिष्टाङ्गुली तु प्रसृते संश्लिष्टे खड्गमुद्रिका ॥
वामस्य मध्यमाग्रे तु तर्जन्यग्रं नियोजयेत् ।
अनामिकां कनिष्ठां च तस्याङ्गुष्ठेन पीडयेत् ॥
दर्शयेद्दक्षिणस्कन्धे धनुर्मुद्रेयमीरिता ।
दक्षमुष्टिस्थतर्जन्या दीर्घया बाणमुद्रिका ॥

अङ्गुष्ठतर्जन्यग्राभ्यां सव्ये नाराचमुद्रिका ।
मिथः कनिष्ठिके बध्यात्तर्जनीभ्यामनामिके ॥
अनामिकोर्ध्वगश्लिष्टदीर्घमध्यमयोरधः ।
अङ्गुष्ठाग्रद्वयं न्यस्येद्योनिमुद्रेयमीरिता ॥
हस्तौ तु संमुखौ कृत्वा ग्रथयित्वा कानिष्ठिके ।
मिथस्तर्जनिके श्लिष्टे श्लिष्टावङ्गुष्ठकौ तथा ॥
मध्यमानामिके द्वे तु द्वौ पक्षाविव कुञ्चयेत् ।
एषा गरुडमुद्रा स्यादशेषविषनाशिनी ॥
हस्तावधोमुखौ कृत्वा संयुक्ताश्चाङ्गुलीर्दश ।
परस्परं तु सर्वास्ता मालिनी मुद्रसंज्ञिका ॥
हस्तद्वये त्वथो वक्रे संमुखे च परस्परम् ।
वामाङ्गुलीर्दक्षिणस्य चाङ्गुलीनां हि सन्धिषु ॥
प्रदर्श्य मध्यमाभ्यां तु तर्जन्यौ द्वे प्रयोजयेत् ।
कानिष्ठे द्वेऽनामिकाभ्यां युञ्ज्यात्सा धेनुमुद्रिका ॥
आवाहने तु या मुद्रा सैवोक्ता तु विसर्जने ।
अङ्गुष्ठतर्जनीवर्जं मुष्टिं कृत्वा तु दक्षिणम् ॥
अङ्गुष्ठाग्रे तु तर्जन्याः पार्श्वाग्रं संप्रपीडयेत् ।
तर्जन्याः पीड्यमानाया बलादुन्मोचने सति ॥
अङ्गुष्ठं प्रहरत्येव दक्षिणं तु छुटित्यतः ।
एषा स्याच्छोटिका मुद्रा रजोघ्नी परिकीर्त्तिता ॥
दक्षाङ्गुष्ठे पराङ्गुष्ठं क्षिप्त्वा हस्तद्वयेन तु ।
सावकाशामेकमुष्टिं कुर्यात्सा कुम्भमुद्रिका ॥
उच्छ्रितं दक्षिणाङ्गुष्ठं वामाङ्गुष्ठेन बन्धयेत् ।
तर्जनीमध्यमासन्धिर्निर्गताङ्गुष्ठाष्टिका ॥
अधोमुखी दीर्घरूपा मध्यमा विघ्नमुद्रिका ।

विघ्नमुद्रा विघ्नेश्वरमुद्रा ।
मुसलाकृतिमुद्रा तु सौरमुद्रेति कीर्त्तिता ।
वाममुष्टिः स्वाभिमुखा बद्धा पुस्तकमुद्रिका ॥
पद्माकारौ करौ कुर्यादूर्ध्वाग्रौ कर्णसंमितौ ।
ध्यायेद्देवीवदात्मानं लक्ष्मीमुद्रेयमुच्यते ॥
एता देव्याः प्रयत्नेन मुद्राराशीः प्रदर्शयेत् ।
मणिबन्धे स्थितौ कृत्वा प्रसृताङ्गुलिकौ करौ ॥
कनिष्ठाङ्गुष्ठयुगले मिलित्वाऽन्तः प्रसारयेत् ।
सप्तजिह्वाख्यमुद्रेयं वैश्वानरवशङ्करी ॥
मुष्टिं कृत्वा कराभ्यां च वामस्योपरि दक्षिणम् ।
कृत्वा शिरसि संयुज्याद्दुर्गामुद्रेयमीरिता ॥
स्पर्शयेद्वामहस्ताग्रं वामहस्तस्य मूलतः ।
दक्षिणेन नमस्कारमुद्रा ह्येषा प्रकीर्त्तिता ॥
संहताङ्गुलिकौ हस्तौ ईषदूर्ध्वाङ्गुलौ ततः ।
तलमूलात्कनिष्ठान्तं पार्श्वे संहृत्य यत्नतः ॥
अञ्जल्याख्या भवेदेषा सर्वसाधारणी त्वियम् ।
अधोमुखे वामहस्ते ऊर्ध्वस्थं दक्षहस्तकम् ॥
क्षिप्त्वाऽङ्गुलीरङ्गुलीभिः संयोज्य परिवर्त्तयेत् ।
प्रोक्ता संहारमुद्रेयं सर्वसाधारणी त्वियम् ॥ इति ।

इति मुद्रालक्षणानि ।

## अथ विष्णुपूजनप्रयोगाः ।

**तत्र गृह्यपरिशिष्टोक्तः प्रयोगः प्रथमं कथ्यते ।**

पूजासम्भारान् सम्पाद्य स्नात्वा कृतनित्यक्रियः पूजागृहद्वारमागत्य द्वारदेशे

अपसर्पन्तु ये भूता ये भूता भुवि संस्थिताः ।

ये भूता विघ्नकर्त्तारस्ते नश्यन्तु शिवाज्ञया ॥

इतिहस्ततालत्रयेण विघ्नानुत्सार्य ततोऽन्तः प्रविश्येमं मन्त्रं जपेत् । येभ्यो माता मधुमत्पिन्वते पयः । एवा पित्रे विश्वदेवाय वृष्णे इति । पूर्वोक्ते शुचिनि आसने उपविशेत् । तत्र मन्त्रः

पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ।
त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥

प्राणानायम्य देशकालौ सङ्कीर्त्य ॐविष्णुर्विष्णुर्विष्णुः अद्य विष्णुप्रीतिकामः श्रीविष्णुपूजनं करिष्ये इति सङ्कल्प्य शङ्खपाद्यार्घाचमनीयपात्राणि प्रणवं जपन्नद्भिः पूरयित्वा तेषु गन्धाक्षतपुष्पाणि निक्षिप्य गायत्र्याऽभिमन्त्र्य तीर्थान्यावाह्य शङ्खोदकेन आपोहिष्ठा मयोभुवस्तान ऊर्ज्जे दधातन । महेरणाय चक्षसे ॥ यो वः शिवतमो रसस्तस्य भाजयते हनः । उशतीरिवमातरः ॥ तस्मा अरङ्गमामवो यस्य क्षयाय जिन्वथ । आपो जनयथा चनः ॥ इतिमन्त्रैरात्मानं आयतनं यजनाङ्गानि च प्रत्येकं मन्त्रान्ते प्रोक्षयेत् । प्रतिप्रधानं गुणावृत्तिरितिन्यायात् करणमन्त्रेषु मन्त्रान्ते कर्मादिरितिवचनाच्च । प्रोक्षणावृत्त्या तदङ्गमन्त्राणामप्यावृत्तिः । क्रियाङ्गोदकुम्भं च गन्धपुष्पाक्षतैः पूजयेत् । ततः ओंविष्णवे नम इति आवाहनासनपाद्यार्घाचमनीयस्नानाचमनवस्त्रयुगलाचमनोपवीताचमनगन्धपुष्पधूपदीपोपहाराचमनमुखवासस्तोत्रप्रणामप्रदक्षिणाविसर्जनानि कुर्यात् ।

अथ वैतानेवोपचारान् ओं इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्यपांसुरे ॥ इति मन्त्रेण दद्यात् । असम्पन्नानुपचारान् जलपुष्पादिना दद्यात् । मनसा वा दद्यात् । अथवा सहस्रशीर्षेतिषोडशर्ग्भिः प्रत्यृचं षोडशोपचारान् कुर्यात् । अत्राचमनं पृथगुपचारो न भव-

ति स्नानवस्त्रोपवीतोपहारोत्तराणामाचमनानां तत्तदङ्गत्वं, प्रणामप्रदक्षिणे च स्तोत्रविसर्जनाङ्गे नोपचारान्तर्भूते अत उपचारेषु न षोडशत्वव्याघातः। अन्ये तूपचारान् गायत्र्या. जातवेदस इत्यृचा वा प्राजात्यया वा व्याहृतिभिर्वा प्रणवेन वा कुर्वन्ति। तत्रैते मन्त्राः। ॐजातवेदसे सुनवामसोममरातीयतो निदहाति वेदः। स नः पर्षदतिदुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः॥ प्रजापतिऋक् ॐप्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परिता बभूव। यत्कामास्ते जुहुमस्तन्नो अस्तु वयꣳ स्याम पतयो रयीणाम् ॥ इति। ॐभूर्भुवः स्वरिति व्याहृतयः। अत्र यथापि व्याहृतयः सप्त तथापि प्रायश्चित्तहोमलक्षहोमादिषु तिसृणामेव व्याहृतीनां दर्शनात्तिस्र एव। गणपतिस्कन्दसूर्यसरस्वतीशक्तित्र्यम्बकलक्ष्मीपूजनान्येवमेव भवन्ति परन्तु तत्तल्लिङ्गमन्त्रैः कार्याणि। ते च मन्त्राः गणेशस्य— गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम्। ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत अनः शृण्वन्नूतिभिः सीद सादनम्॥ स्कन्दस्य— कुमारश्चित्पितरं न्दमानं प्रतिनानामरुद्रोपयन्तम्। भूरेर्दातारं सत्पतिं गृणीषेस्तुतस्त्वं भेषजारास्यस्मे॥ सूर्यस्य—ॐआकृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतं मर्त्यं च। हिरण्ययेन सविता रथेनादेवो याति भुवनानि पश्यन्॥ इति। सरस्वत्याः— ॐपावकानः सरस्वती वाजेभिर्वाजिनीवती। यज्ञं वस्तुधिया वसुः॥ शक्तेस्तु जातवेदसे इति पूर्वलिखितः। रुद्रस्य— ॐत्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्। उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतात् ॥ श्रियः— ॐगन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्॥ अथवा तेषामपि देवानां गायत्रीजातवेदसेप्रजापतेव्याहृतिभिः प्रणवेन वा पूजां कुर्यात् ॥

इति गृह्यपरिशिष्टोक्तः पूजाप्रयोगः।

अथ शौनकोक्तविष्णुपूजनप्रयोगः।

ब्राह्मे मुहूर्ते उत्थाय कृतावश्यकक्रियः शुचिर्भूत्वा नियतमानसो गुरून् प्रणम्य नद्यादौ स्वगृह्योक्तविधिना स्नात्वा चन्दनादिना तिलकं कृत्वा आत्मानं भूषणादिभिरलङ्कृत्य मौक्तिकरुद्राक्षादिमालां धृत्वा पवित्रपाणिः सन्ध्यावन्दनाद्यग्निहोत्रादिकाः स्वक्रियाः कृत्वा पादहस्तप्रक्षालनं कृत्वाऽऽचम्य पूजागृहं प्रविश्य वितानतोरणादिवति मण्डपे स्वस्तिकाद्यासने उपविश्य

अपसर्पन्तु ये भूता ये भूता भुवि संस्थिताः।
ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥

इति विघ्नानुत्सार्य

बाणमुद्रां योनिमुद्रां चक्रमुद्रां च दर्शयेत्।

सुस्थिरो भव ईशानो भव मां रक्ष रक्ष च। इति।

अस्त्राय फट् इत्युक्त्वा दिव्यान्तरिक्षभूमिष्ठान् विघ्नानस्त्रेण वारयेत्। स्वर्णमयं चतुर्द्वारं विमलं सुशोभितं ध्यानरचितं मण्डपं स्मरेत्। तत्र नानारत्नखचितं मुक्ताफलालङ्कृतं सिंहासनं सौवर्णमतिसुन्दरं स्मरेत्। ततो द्वारपालपूजनम्। तत्रादौ आसन उपविष्ट एव ॐगणेशाय नमः इति गन्धादिभिः गणेशं पूजयेत्। तथा सूर्यादीनपि वक्ष्यमाणान् पूजयेत्। ॐसूर्याय नमः। ॐतिलकस्वामिने नमः। ॐक्षेत्रपालाय नमः। ॐधात्रे नमः। ॐविधात्रे नमः इति। ततः पूर्वद्वारे ॐभद्राय नमः। ॐसुभद्राय नमः। ॐगङ्गायै नमः। ॐयमुनायै नमः। दक्षिणद्वारशाखयोः ॐबलाय नमः। ॐप्रबलाय नमः। ॐचिच्छक्त्यै नमः। ॐमायाशक्त्यै नमः। अथ पश्चिमद्वारशाखयोः ॐचण्डाय नमः। ॐप्रचण्डाय नमः। ॐगौर्यै नमः। ॐश्रियै नमः। अथोत्तरद्वारशाखयोः ॐजयाय

नमः। ॐविजयाय नमः। ॐशङ्खाय नमः। ॐपद्मनिधये नमः। एवं द्वारपालपूजनं कृत्वा वामाङ्गं संकोचयन् दक्षिणेन प्रविशेत्। ततो अस्त्राय फट् इत्यनेन मन्त्रेण विघ्नोत्सारणं कुर्यात्। ततो दक्षिणपादपार्ष्णिघातत्रयं कृत्वा आसन उपविश्य प्राणानायम्य देशकालौ सङ्कीर्त्य ॐअद्य धर्मकामो वाऽर्थकामः कामकामो मोक्षकामो वा श्रीविष्णुपूजनं करिष्ये इति सङ्कल्प्य भूतशुद्धिं कुर्यात्। यथा यमिति बीजानुसन्धानेन देहं शुष्कं भावयेत्। रमिति वह्निबीजानुसन्धानेन दग्धं भावयेत् ततो वमित्यमृतबीजेन आप्लुतो देह इति भावयेत्। इति भूतशुद्धिः। **अथ मातृकान्यासः।** अस्य मातृकान्यासस्य ब्रह्मा ऋषिर्गायत्रीछन्दः मातृका सरस्वती देवता अंबीजं अः शक्तिः मातृकान्यासे विनियोगः। तत्र ऋष्यादिन्यासः। ब्रह्मा ऋषिः शिरसि। गायत्रीच्छन्दो मुखे। मातृका सरस्वती देवता हृदि। ॐअ मस्तके। आ मुखवृत्ते। इ दक्षिणनेत्रे। ई वामनेत्रे। उ दक्षिणकर्णे। ऊ वामकर्णे। ऋ दक्षिणनासायाम्। ॠ वामनासायाम्। ऌ दक्षिणगण्डे। ॡ वामगण्डे। ए ऊर्ध्वोष्ठे। ऐ अधरोष्ठे। ओ ऊर्ध्वदन्तेषु औ अधोदन्तेषु। अं मूर्ध्नि। अः मुखे। क दक्षिणभुजमूले। ख कूर्परे। ग मणिबन्धे। घ अङ्गुलीमूले। ङ दक्षिणहस्ताङ्गुल्यग्रे। च वामहस्तमूले। छ वामकूर्परे। ज वाममणिबन्धे। झ वामाङ्गुलीमूले। ञ वामकराङ्गुल्यग्रे। ट दक्षिणपादमूले। ठ जानुनि। ड गुल्फे। ढ पादाङ्गुलीमूले। ण पादाङ्गुल्यग्रे। त वामपादमूले। थ वामपादजानुनि। द गुल्फे। ध वामपादाङ्गुलीमूले। न पादाङ्गुल्यग्रे। प दक्षिणपार्श्वे। फ वामपार्श्वे। ब त्रिके। भ नाभौ। म जठरे। य हृदये। र दक्षिणकक्षायाम्। ल वामकक्षायाम्। श हृदादिदक्षिणकरान्तम्। ष हृदादिवामकरान्तम्। स हृदादिदक्षिणपादान्तम्।

ह हृदादिवामपादान्तम् । क्ष जठरादाननान्तं न्यसेत् । इति मातृकान्यासः । अस्य पुरुषसूक्तस्य नारायण ऋषिः पञ्च-दशानामनुष्टुप् अन्त्यानां त्रिष्टुपूछन्दः जगद्बीजं पुरुषो देवता न्यासे पूजने च विनियोगः । ॐअङ्गुष्ठाग्रे गोविन्दाय नमः । तर्जन्यां महीधराय नमः । मध्यमायां हृषीकेशाय नमः । अनामिकायां त्रिविक्रमाय नमः । कनिष्ठायां विष्णवे नमः । करमध्ये माधवाय नमः । अथ देहाङ्गन्यासः । मस्तके केशवाय नमः । भाले नारायणाय नमः । कर्णयोर्माधवाय नमः । अक्ष्णोर्गोविन्दाय नमः । नासयोर्विष्णवे नमः । मुखे मधुसूदनाय नमः । कण्ठे त्रिविक्रमाय नमः । बाह्वोर्वामनाय नमः । हृदि श्रीधराय नमः । नाभ्यां हृषीकेशाय नमः । कट्यां पद्मनाभाय नमः । पादयोर्दामोदराय नमः । ॐसहस्रशीर्षा वामकरे न्यसेत् । पुरुषएवेति दक्षिणकरे । एतावानिति वामपादे । त्रिपादूर्ध्वमिति दक्षिणपादे । ततोविराडिति वामजानौ । यत्पुरुषेणेति दक्षजानौ । तं यज्ञमिति वामकट्याम् । तस्माद्यज्ञादिति दक्षिणकट्याम् । तस्माद्यज्ञादिति नाभ्याम् । तस्मादश्वा इति हृदि । यत्पुरुषमिति कण्ठे । ब्राह्मणोस्येति वामभुजे । चन्द्रमा इति दक्षिणभुजे । नाभ्या आसीदिति मुखे । सप्तास्यासन्निति भ्रुवोः । यज्ञेन यज्ञमिति मूर्धनि । ततः षडङ्गं कुर्यात् । ॐअतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे । पृथिव्याः सप्तधामभिः हृदयाय नमः । ॐइदंविष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्यपाꣳ सुरे शिरसे स्वाहा । ॐत्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः । अतो धर्माणि धारयन् शिखायै वषट् । ॐविष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः सखा कवचाय हुम् । ॐतद्विष्णोः परमं पदꣳ सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् नेत्रत्रयाय वौषट् ।

ॐतद्विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्यत्परमं पदम् अस्त्राय फट् । **अथात्मरक्षान्यासः**

पुरस्तात्केशवः पातु चक्री जाम्बूनदप्रभः ।
पश्चान्नारायणः पातु शङ्खी जीमूतसन्निभः ॥
ऊर्ध्वं पातु गदी रामो माधवेन्दीवरप्रभः ।
दक्षिणे पातु गोविन्दो धन्वी नीरसमप्रभः ॥
वामे पातु हली विष्णुः पद्मकिञ्जल्कसन्निभः ।
अरविन्दाभ आग्नेय्यां मुसली मधुसूदनः ॥
त्रिविक्रमोऽपि नैर्ऋत्यां ज्वलत्पावकसन्निभः ।
पद्मजाप्रभुरीशान्यां श्रीधरः पट्टिशायुधः ॥
विद्युत्प्रभो हृषीकेशो ह्यधो मुद्गरसायुधः ।
हृत्पद्मे पद्मनाभस्तु सहस्रार्कसमप्रभः ॥
सर्वायुधः सर्वशक्तिरिन्द्रशक्तिसमप्रभः ।
दामोदरस्तु सर्वाङ्गे आत्मानं पातु नित्यशः ॥
एवं दिग्बन्धनं कृत्वा गायत्र्या विन्यसेत्ततः ।

ॐभूः हृदयाय नमः । ॐभुवः शिरसे स्वाहा । ॐस्वः शिखायै वषट् । ॐतत्सवितुर्वरेण्यं कवचाय हुम् । ॐभर्गोदेवस्य धीमहि नेत्रत्रयाय वौषट् । धियो यो नः प्रचोदयात् अस्त्राय फट् । ततः फडिति कलशं बहिः प्रक्षाल्य हुमिति अन्तः प्रक्षाल्य ॐनम इतिमन्त्रेण शुद्धजलेन प्रपूरयेत् । गन्धादिभिः सम्पूज्य ॐ ब्रह्मणे नम इति निरीक्षणं कुर्यात्। ॐविष्णवे नमः इत्यवगुण्ठनं कुर्यात्। ॐनमः शिवायेति दिग्बन्धनं कुर्यात् । ततो मालिन्यमृतीकरणगरुडसुरभिमुद्राभिः रक्षणं कुर्यात् । तत इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमं सचतापरुष्ण्या । आसिक्न्या मरुद्वृधे वितस्तयार्जीकीये शृणु या सुषोमया ॥ इति तीर्थान्यावाह्य गायत्र्या

दशवारमभिमन्त्र्य

कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः ।
मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाः स्थिताः ॥
कुक्षौ तु सागराः सप्त सप्तद्वीपा वसुन्धरा ।
ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वकः ॥
अङ्गैश्च सहिताः सर्वे कलशं तु समाश्रिताः ।
पुष्टिः शान्तिश्च गायत्री सावित्री च सरस्वती ॥
आयान्तु देवपूजार्थं दुरितक्षयकारकाः ।
एतन्मन्त्रोक्तदेवांश्च पूजयेच्च यथाविधि ॥

ॐविष्णवे नमः । ॐरुद्राय नमः । ॐब्रह्मणे नमः । ॐमातृगणेभ्यो नमः । ॐसागरेभ्यो नमः । ॐसप्तद्वीपवत्यै वसुन्धरायै नमः। ॐऋग्वेदाय नमः । ॐयजुर्वेदाय नमः । ॐसामवेदाय नमः ।ॐअथर्ववेदाय नमः ।ॐअङ्गेभ्यो नमः ।ॐपुष्ट्यै नमः। ॐशान्त्यै नमः।ॐगायत्र्यै नमः।ॐसावित्र्यै नमः।सरस्वत्यै नमः। इति कलशस्थापनम् । अथ शङ्खस्थापनम् । ॐफट् इति शङ्खं बहिः प्रक्षाल्य ॐहुमित्यन्तश्च प्रक्षाल्य नमः इति कलशोदकेन प्रपूर्य गन्धादिभिः पूजयेत् । ततः शङ्खमुद्रां प्रदर्श्य प्रार्थयेत् । तत्र मन्त्रः

त्वं पुरा सागरोत्पन्नो विष्णुना विधृतः करे ।
निर्मितः सर्वदेवैश्च पाञ्चजन्य नमोऽस्तु ते ॥
गर्भा देवारिनारीणां विशीर्यन्ते सहस्रशः ।
तव नादेन पाताले पाञ्चजन्य नमोऽस्तु ते ॥

ततो गायत्र्याष्टवारमभिमन्त्र्य त्रिपादूर्ध्वमिति देवं शङ्खे न्यसेत् सान्निध्यं शङ्खे कुर्यात् । ततः शङ्खोदकेन आत्मानं पूजाद्रव्याणि भूमिं च फडिति सम्प्रोक्षयेत् । ततः ॐआत्मने नमः । ॐ-

अन्तरात्मने नमः। ॐपरमात्मने नमः। ॐज्ञानात्मने नम इति आत्मचतुष्टयं पूजयेत्। ततो गन्धादिना सकर्णिकमष्टपत्रं विलिख्य मूर्ध्नि हस्तं दत्त्वा अच्युतोऽहमनन्तोऽहं ब्रह्माहमस्मीति भावयेत्। ततश्चन्दनलिप्तकरस्थपुष्पाण्याघ्राय दक्षिणभागे क्षिपेत्। ततः स्योनापृथिवि नो भवानृक्षरानिवेशनी। यच्छानः शर्म सप्रथाः इति मन्त्रेण गन्धादिभिर्भूमिं पूजयेत्। ततः अर्घपाद्याचमनीयमधुपर्कार्थं पात्रचतुष्टयमुत्तरोत्तरं स्थापयित्वा जलं दत्त्वा गन्धपुष्पैः पूजयेत्। ततोऽर्घपात्रे गन्धपुष्पयवाक्षतकुशाग्रतिलदूर्वासर्षपान् क्षिपेत्। पाद्यपात्रे दूर्वाश्यामाकपद्मविष्णुक्रान्ता दद्यात्। आचमनीयपात्रे एलालवङ्गकर्पूरकङ्कोलजातीफलमुरा दद्यात्। मधुपर्कपात्रे दधिमधुसर्पींषि दद्यात्। तत ओमित्यर्घपात्रमभिमन्त्र्य पाद्यपात्रं गायत्र्याभिमन्त्र्य आचमनीयपात्रं व्याहृभिरभिमन्त्र्य मधुपर्कपात्रं गायत्र्याभिमन्त्रयेत्। ततो गन्धपुष्पवस्त्रादिपूजाद्रव्यजातं गायत्र्याभिमृशेत्। ततो नवकोष्ठां भूमिं कृत्वा मध्यप्रागुदक्षिणपश्चिमोत्तरासु पञ्चामृतपात्रपञ्चकं स्थापयित्वा सुगन्धितैलामलकचूर्णपिष्टसुगन्धोष्णोदकपात्राणि विदिक्षु स्थापयित्वा गन्धपुष्पादिना सम्पूज्य तत्रस्थविद्यादिनवदेवताः पात्रस्थापनक्रमेण पूजयेत्। यथा ॐ विद्यायै नमः। ॐ अविद्यायै नमः। ॐप्रकृत्यै नमः। ॐमायायै नमः। ॐतेजस्विन्यै नमः। ॐप्रबोधिन्यै नमः। ॐसत्त्वाय नमः। ॐरजसे नमः। ॐतमसे नमः। इति पूजयित्वा चक्रधेनुमुद्रा गरुडमुद्राः प्रदर्श्य गायत्र्याभिमृशेत्। ततः शङ्खोदकेन फडितिमन्त्रेण पीठं प्रोक्ष्य गन्धादिना पीठे उपर्युपरि आधारशक्त्यादि पूजयेत्। यथा ॐआधारशक्तये नमः। ॐप्रकृतये नमः। ॐकूर्माय नमः। ॐअनन्ताय नमः। ॐवराहाय नमः। ॐपृथ्व्यै नमः।

ॐक्षीरार्णवाय नमः। ॐश्वेतद्वीपाय नमः। ॐसुवर्णमण्डपाय नमः। ॐहेमप्राकाराय नमः। ॐसुवर्णवेदिकायै नमः। ॐ सिंहासनाय नमः। पीठस्य दक्षिणे गुरुभ्यो नमः। वामे ॐदुर्गायै नमः। ॐविघ्नेशाय नमः। ॐक्षेत्रपालाय नमः। अग्रे ॐ गरुडाय नमः। ईशाने ॐविष्वक्सेनायनमः। ततः पूर्वादिक्रमेण ॐधर्माय नमः। ॐज्ञानाय नमः। ॐवैराग्याय नमः। ॐऐश्वर्याय नमः। विदिक्षु ॐअधर्माय नमः। ॐअज्ञानाय नमः। ॐअवैराग्याय नमः। ॐअनैश्वर्याय नमः। मध्ये ॐकन्दाय नमः। ॐमूलनालाय नमः। ॐपद्माय नमः। ॐपत्रेभ्यो नमः। ॐकेसरेभ्यो नमः। ॐकर्णिकायै नमः। मध्ये ॐसूर्याय नमः। ॐसोमाय नमः। ॐअग्निमण्डलाय नमः। ॐशक्तिमण्डलाय नमः। ॐब्रह्मणे नमः। ॐविष्णवे नमः। ॐईशानाय नमः। ॐऋग्वेदाय नमः। ॐयजुर्वेदाय नमः। ॐसामवेदाय नमः ॐअथर्वणे नमः। ॐ आत्मने नमः। ॐअन्तरात्मने नमः। ॐपरमात्मने नमः। ॐकृताय नमः। ॐत्रेतायै नमः। ॐद्वापराय नमः। ॐकलये नमः। ॐसत्त्वाय नमः। ॐरजसे नमः। ॐतमसे नमः। ॐअणिम्ने नमः। ॐगरिम्णे नमः ॐलघिम्ने नमः। ॐमहिम्ने नमः। ॐप्राप्त्यै नमः ॐप्राकाम्याय नमः। ॐईशित्वाय नमः। ॐवशित्वाय नमः। प्रागादिक्रमेण ॐविमलायै नमः। ॐउत्कर्षिण्यै नमः। ॐज्ञानायै नमः। ॐक्रियायै नमः। ॐयोगायै नमः। ॐप्रज्ञायै नमः। ॐसत्यायै नमः। ॐईशायै नमः। मध्ये ॐअनुग्रहायै नमः। एताः सम्पूज्य ॐनमो भगवते विष्णवे सर्वभूतात्मसंयोगवासुदेवाय योगपीठात्मने नमः। पुष्पाण्यञ्जलौ गृहीत्वा तस्मिन् पीठे

नाभिमध्यस्थितं पद्मकर्णिकाकेसरस्थितम्।

अष्टैश्वर्यसमायुक्तं श्वेतमत्यन्तनिर्मलम् ॥
श्वेताब्जस्थं पद्मकरं गदिनं शङ्खचक्रिणम् ।
शुद्धस्फटिकसङ्काशं सर्वाभरणभूषितम् ॥
देवं सुषुम्णा मार्गेण आनीय ब्रह्मरन्ध्रकम् ।
वामनासापुटे ध्यात्वा निर्गतं स्वाञ्जलिस्थितम् ॥

भावयित्वा तानि पुष्पाणि पीठस्थितपूज्यप्रतिमादौ क्षिप्त्वा सहस्रशीर्षेतिमन्त्रेणावाहनं कुर्यात् । तत आवाहनादिचतुर्दशमुद्राः प्रदर्शयेत् । ताश्च आवाहनी स्थापनी संमुखीकरणी सन्निरोधिनी प्रसादमुद्रा अवगुण्ठनमुद्रा शङ्खचक्रगदापद्ममुसलखड्गधनुर्बाणमुद्राः । तत इमं मन्त्रं पठेत्—

भोस्वामिन् जगतां नाथ यावत्पूजावसानकम् ।
तावत् संप्रीतिभावेन बिम्बेऽस्मिन् सन्निधौ भव ॥

इति प्रार्थ्य पादयोः पुष्पाञ्जलिं क्षिपेत् । ततः पूर्ववत् पुरुषसूक्तेन देवशरीरेऽपि न्यासं कुर्यात् । पुरुष एवेदमित्यासनम् । एतावानस्येति पाद्यम् । त्रिपादूर्ध्वमित्यर्घम् । ततोविराडिति आचमनीयम् । स्नानं यत्पुरुषेणेति । पञ्चामृतगन्धोदकाविशेषस्नानानि अनेनैव मंत्रेण कुर्यात् । तत आचमनम् । तं यज्ञमिति वस्त्रयुगलम् । तत आचमनम् । तस्माद्यज्ञादिति यज्ञोपवीतम् तत आचमनं दद्यात् । तस्माद्यज्ञादिति गन्धम् । तस्मादश्वा इति पुष्पाणि दद्यात् । ततो भगवत आज्ञां प्राप्य आवरणदेवताः पूजयेत् । यथा आग्नेये कोणे हृदयाय नमः । ईशकोणे शिरसे स्वाहा । नैर्ऋत्ये शिखायै वषट् । वायव्ये कवचाय हुम् । आग्नेये नेत्रत्रयाय वौषट् । सर्वदिक्षु अस्त्रायफट् । ततः प्राग्दले ॐवासुदेवाय नमः । दक्षिणपत्रे ॐसङ्कर्षणाय नमः । पश्चिमे ॐप्रद्युम्नाय नमः । उत्तरदले ॐअनिरुद्धाय नमः । आग्नेये ॐशङ्खाय

नमः। नैर्ऋत्यदले ॐचक्राय नमः। वायव्यदले ॐगदायै नमः। ईशदले ॐपद्माय नमः। ततः पूर्वदले ॐकौस्तुभाय नमः। दक्षिणे ॐखड्गाय नमः। पश्चिमपत्रे ॐमुसलाय नमः। उत्तरदले ॐवनमालायै नमः। ततः प्रागादिक्रमेण ॐध्वजाय नमः। ॐगरुडाय नमः। ओंशङ्खनिधये नमः। ॐपद्मनिधये नमः। ॐगणपाय नमः। ॐआचार्याय नमः। ॐदुर्गायै नमः। ॐविश्वक्सेनाय नमः। पुनः प्रागादिक्रमेण ॐइन्द्राय नमः। ॐअग्नये नमः। ॐयमाय नमः। ॐनैर्ऋताय नमः। ॐवरुणाय नमः। ॐवायवे नमः। ॐकुबेराय नमः। ॐईशानाय नमः। ऊर्ध्वं ब्रह्मणे नमः। अधो विष्णवे नमः। पुनः प्रागादिक्रमेण ॐवज्राय नमः। ॐशक्तये नमः। ॐदण्डाय नमः। ॐखड्गाय नमः। ॐपाशाय नमः। ॐअङ्कुशाय नमः। ॐध्वजाय नमः। ॐगदायै नमः। ॐशूलाय नमः। ॐऊर्ध्वं पद्माय नमः। ॐअधश्चक्राय नमः। देवस्य दक्षिणे भागे ॐअर्जुनाय नमः। ॐप्रह्लादाय नमः। ओंनारदाय नमः ॐपुण्डरीकाय नमः। ॐपराशराय नमः। ओंव्यासाय नमः। ओंशुकाय नमः। ओंअम्बरीषाय नमः। ओंवासिष्ठाय नमः। ओंदाल्भ्याय नमः। ओंशौनकाय नमः। ओंवलये नमः। ओंविभीषणाय नमः। ओंभीष्माय नमः। ओंरुक्माङ्गदाय नमः। ओंअङ्गदाय नमः। ओंमार्कण्डेयाय नमः। ओंभृगवे नमः। वामभागे ओंसनकाय नमः। ओं सनन्दनाय नमः। ओंवसुदेवाय नमः। इत्यावरणपूजा। ततः ओं-फट् इति धूपादिपात्राणि प्रोक्ष्य चक्रमुद्रया संरक्ष्य अमृतीकृत्य गरुडमुद्रां धेनुमुद्राञ्च प्रदर्श्य गन्धाद्यैरभ्यर्चयेत्। यत्पुरुषमिति धूपं दद्यात्। ब्राह्मणोस्येति दीपम्, चन्द्रमामनस इति नैवेद्यम्, गायत्र्या आचमनं दद्यात्। गायत्र्या ताम्बूलं कर्पूरारात्रिकं मन्त्रपुष्पं दद्यात्। आदर्शदर्शनम्। तुलसीपत्रादिकं समर्प्य

नाभ्या आसीदिति प्रदक्षिणं कुर्यात् । सप्तास्यासन्निति नमस्कारम् । स्तोत्रैः स्तुत्वा प्रसादयेत् । ततो देवस्यानुज्ञां प्रार्थ्य होमस्थानं गत्वा आसने उपविश्य पुरुषसूक्तस्य ऋष्यादि संस्मृत्य न्यासं कृत्वा अग्निप्रतिष्ठां कृत्वा प्रतिमास्थं देवं सहस्रशीर्षेत्यग्नावावाह्याऽग्निं पूजयित्वा आज्यतिलान्नानामन्यतमद्रव्येण पुरुषसूक्तेन प्रतिमन्त्रं जुहुयात् । पुरुषसूक्तं जपित्वा सम्प्रार्थ्य वह्निस्थं भगवन्तं बिम्बे संयोज्य पुरुषसूक्तोक्तैः षोडशभिर्मन्त्रैः पुष्पाणि समर्प्य

जपपूजाग्निकार्याद्यैः सुकृतं समुपार्जितम् ।
भगवन् देवदेवेश सङ्गृहाण नमोऽस्तु ते ॥

इति मन्त्रेण भगवद्धस्ते जलं क्षिपेत् । ततः

मम ज्ञानादिसिद्ध्यर्थं वा विष्णुस्थिरभक्तये ।
कामार्थसिद्ध्ये देव भुक्ताशिष्टं प्रयच्छमे ॥

इति मन्त्रेण भुक्तोच्छिष्टं प्रसादत्वेन गृह्णीयात् । ततो भगवतः पादोदकं पिबेत् । पुनः पुरुषसूक्तेन न्यासं विधाय देवेशमुद्रास्य यज्ञेन यज्ञमिति मन्त्रेण हृदि विन्यसेत् । ततो भगवन्तं चिरं ध्यात्वा सच्चिदानन्दमयो भूत्वा चिरं तिष्ठेत् ।

इति शौनकोक्तो भगवत्पूजनविधिः सपरिकरः ।

### अथ ऋग्विधानोक्तो भगवत्पूजनविधिः ।

अस्य पुरुषसूक्तस्य नारायणऋषिः आद्यानामनुष्टुप्छन्दः अन्त्यानां त्रिष्टुप्छन्दः पुरुषो देवता नारायणपूजने विनियोगः । आद्यामृचं वामहस्ते न्यसेत् । द्वितीयां दक्षिणहस्ते । तृतीयां वामपादे । चतुर्थीं दक्षिणपादे । पञ्चमीं वामजानौ । षष्ठीं दक्षिणजानौ । सप्तमीं वामकट्याम् । अष्टमीं दक्षिणकट्याम् । नवमीं नाभिमध्ये । दशमीं हृदि । एकादशीं कण्ठे । द्वादशीं वामबाहौ । त्र-

योदशीं दक्षिणबाहौ । मुखे चतुर्दशीम् । अक्ष्णोः पञ्चदशीम् । षोडशीं मूर्ध्नि न्यसेदिति । एवमेव देवशरीरेऽपि न्यासं कुर्यात् । ततो गन्धमाल्याभ्यामात्मानमलङ्कृत्य पीठपूजनं कुर्यात् । तच्च आधारशक्तये नम इति आरभ्य ओंनमो भगवते विष्णवे नम इति मन्त्रान्तं शौनकोक्तपूजान्तर्गतमेव बोध्यम् । तस्मिन् पीठे भगवन्तं शङ्खचक्रगदापद्मपाणिं सजलजलदसुन्दरं संवीतपीताम्बरं कमलदललितलोचनं लसत्किरीटकुण्डलकेयूरकङ्कणं रत्नखचितक्षुद्रमुद्रान्वितकराङ्गुलीकं कटितटविलसद्रत्नमेखलं गोविन्दं परमानन्दमाद्यया ऋचा आवाहयेत् । द्वितीयया आसनम्, तृतीयया पाद्यम्, चतुर्थ्याऽर्घ्यम्, पञ्चम्याऽऽचमनीयकम्, षष्ठ्या स्नानम्, सप्तम्या वस्त्रम्, यज्ञोपवीतमष्टम्या, गन्धं नवम्या, दशम्या पुष्पाणि, एकादश्या धूपम्, द्वादश्या दीपम्, त्रयोदश्योपहारम्, चतुर्दश्या नमस्कारम्, पञ्चदश्या प्रदक्षिणां कृत्वा षोडश्योद्वासयेत् । अत्र स्नानवस्त्रयज्ञोपवीतभुजिषु आचमनं देयम् । ततः पूर्ववद्धोमं कुर्यात् । ततः प्रत्यृचं पुष्पाणि षोडश दद्यात् । अथवा इमां यथोक्तां पूजां तद्विष्णोः परममिति मन्त्रेण कुर्यात् । अथवा

जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
नमस्तेऽस्तु हृषीकेश महापुरुषपूर्वज ॥

इति मन्त्रेण पूजयेत् । ततो ललाटेऽञ्जलिं बध्वा पुरुषसूक्तं जप्त्वा जपपूजानिवेदनं कुर्यात् । जितं त इति पुनर्जप्त्वा जानुभ्यां धरणीं गत्वा मूर्ध्नि हरिं धृत्वा क्षमापयेत् ।

भगवन् देवदेवेश पुरुषोऽसि सनातन ।
क्षमस्व पुण्डरीकाक्ष भक्तस्य तु विशेषतः ॥
ज्ञानादज्ञानतो वापि यन्न्यूनादि कृतं मया ।
तत्सर्वं पूर्णमेवास्तु त्वत्प्रसादाज्जनार्दन ॥ इतिविसर्जयेत् ।

इति ऋग्विधानोक्तपूजनप्रयोगः ।

अथ बौधायनोक्तपूजनप्रयोगः ।

स्नातः शुचिः शुचौ देशे गोमयेनोपलिप्ते पूर्वोक्तशालग्रामादिप्रतिमायां भगवन्तं महापुरुषं पुष्पाक्षतैर्यथालाभं पूजयेत् । ओंभूः पुरुषमावाहयामि ओंभुवः पुरुषमावाहयामि ॐभूर्भुवः स्वः पुरुषमावाहयामि इत्यावाह्य, आयातु भगवान् महापुरुष इति स्वागतेनाभिनन्द्य स्वागतं भगवते महापुरुषायैतदासनमुपक्लृप्तमत्रास्तां भगवान् महापुरुष इति । अत्र कूर्चं ददाति भगवतेऽयं कूर्चो दर्भमयस्त्रिवृद्धरितसुवर्णस्तं जुषस्व । अथ शङ्खादीनां स्थानकल्पना । यथा, अग्रतः शङ्खाय कल्पयामि चक्राय कल्पयामि । दक्षिणतो गदायै कल्पयामि वनमालायै कल्पयामि । पश्चिमतः श्रीवत्साय कल्पयामि गरुत्मते कल्पयामि । उत्तरतः श्रियै कल्पयामि सरस्वत्यै कल्पयामि । दक्षिणतः पुष्ट्यै कल्पयामि तुष्ट्यै कल्पयामि इति स्थानानि कल्पयेत् । सावित्र्या पात्राण्यभिमन्त्र्य प्रक्षाल्य ॐतिरः पवित्रमतिनीताः आपो धारयमातिगुः । देवेन सवित्रोत्पूता वसोः सूर्यस्य रश्मिभिः । इति मन्त्रेण अपः प्रक्षिप्य ॐत्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः । अतो धर्माणि धारयन् ॥ इति मन्त्रेण पाद्यं दत्त्वा ॐमित्यर्घं दत्त्वा ॐभूर्भुवः सुवरिति निर्माल्यं व्यपोह्य उत्तरतो विश्वक्सेनाय नम इति क्षिपेत् । अथ स्नानम् । तत्र मन्त्राः ॐआपोहिष्ठामयो भुवस्तान ऊर्जेदधातन । महेरणाय चक्षसे ॥ ॐयोवः शिवतमो रसस्तस्य भाजयते हनः । उशतीरिव मातरः ॥ ॐतस्मा अरङ्गमामवो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ॥ ॐहिरण्यवर्णाः शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः । अग्निं या गर्भं दधिरे विरूपास्तान आपः शं स्योना भवन्तु ॥

ॐब्रह्म जज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन आवः। सबुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः। एताभि ऋग्भिर्भगवन्तं स्नापयित्वा अद्भिस्तर्पयति। तद्यथा, ॐकेशवं तर्पयामि। ॐनारायणं तर्पयामि। ॐमाधवं तर्पयामि। ॐगोविन्दं तर्पयामि। ॐविष्णुं तर्पयामि। ॐमधुसूदनं तर्पयामि। ॐत्रिविक्रमं तर्पयामि। ॐवामनं तर्पयामि। ॐश्रीधरं तर्पयामि। ॐहृषीकेशं तर्पयामि। ॐपद्मनाभं तर्पयामि। ॐदामोदरं तर्पयामि। इति। अथ वस्त्रयज्ञोपवीताचमनीयानि उदकपूर्वं दत्त्वा ॐभूर्भुवः सुव इति प्रदक्षिणमुदकं परिषिच्य इदंविष्णुर्विचक्रमे इति गन्धं दद्यात्। ॐतद्विष्णोः परमं पदमिति पुष्पं दत्त्वा ॐइरावती धेनुमती हि भूतꣳ सूयवशिनी मनवे दशस्या। व्यस्कभ्ना रोदसी विष्णवेते दाधर्थ पृथिवीमभितो मयूखैः स्वाहेति अक्षतान् समर्प्य, सावित्र्या धूपं दद्यात्। ॐउद्दीप्यस्व जातवेदोपघ्नं निर्ऋतिं मम। पशूꣳश्च मह्यमावह जीवनं च दिशोदश इति दीपं दद्यात्। ॐदेवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् भगवते महापुरुषाय जुष्टं चरुं निवेदयामीति नैवेद्यं दत्त्वा आचमनं च दत्त्वा केशवादिद्वादशनामाभिः तर्पणवत् द्वादशपुष्पाणि दद्यात्। ततः ॐशङ्खाय नमः। ॐचक्राय नमः। ॐनमो गदायै। ॐनमो वनमालायै। ॐश्रीवत्साय नमः। ॐगरुत्मते नमः। ॐनमः श्रियै। ॐसरस्वत्यै नमः। ॐपुष्ट्यै नमः। ॐतुष्ट्यै नम इति गन्धमाल्यैः संपूज्य शिष्टैर्गन्धमाल्यैर्ब्राह्मणानलङ्कृत्य तच्छेषेण चात्मानमलङ्कृत्याथैनमृग्यजुः सामाथर्वभिः स्तुत्वा ॐध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे। ध्रुवं विश्वमिदं जगत् ध्रुवो राजाविशामयम्॥ ध्रुवं ते राजा वरुणो ध्रुवं देवो बृहस्पतिः। ध्रुवं त

इन्द्रश्चाग्निश्च राष्ट्रं धारयतां ध्रुवम् ॥ ध्रुवं ध्रुवेण हविषाभि सोमं मृषामासि । अथोऽत इन्द्रः केवलीर्विशोवालिर्हि तस्करत् ॥ इति पठित्वा पुरुषसूक्तेन स्तुत्वा ॐभूर्भुवः स्व र्महरोंभगवते महापुरुषाय चरुमुद्वासयामीति निवेदितं चरुमुद्वास्य ततः ॐभूः पुरुषमुद्वासयामि ॐभुवः पुरुषमुद्वासयामि ॐस्वः पुरुषमुद्वासयामि ॐभूर्भुवः स्वः पुरुषमुद्वासयामीत्युद्वास्य प्रयातु भगवान् महापुरुषोऽनेन हविषा तृप्तो हरिः पुनरागमाय पुनः सन्दर्शनाय चेति।प्रतिमास्थानेष्वप्स्वग्नावावाहनविसर्जनवर्जं सर्वं समानम् ।

इति बौधायनोक्तपूजाप्रयोगः ।

अथ विष्णुधर्मोत्तरोक्तः पूजाप्रयोगः ।

तत्र पूजकः स्नात आचान्तःप्रयतो देवागारं प्रविश्य भगवन्तं नमस्कृत्य ॐआपोहिष्ठेति तिसृभिरर्घं निवेद्य ओंहिरण्यवर्णाः शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः । अग्निं या गर्भं दधिरे विरूपास्तान आपः शꣳस्योना भवन्तु ॥ ॐयासाꣳ राजा वरुणो याति मध्ये सत्यानृते अवपश्यञ्जनानाम्। मधुश्च्युतः शुचयो याः पावकास्तान आपः शꣳ स्योना भवन्तु ॥ ओंयासां देवा दिवि कृण्वन्ति भक्षं या अन्तरिक्षे वहुधा भवन्ति।याः पृथिवीं पयसोन्दन्ति शुक्रास्ता न आपः शꣳ स्योना भवन्तु ॥ ॐशिवेन मा चक्षुषा पश्यतापः शिवया तनुवोपस्पृशत त्वचं मे । सर्वाꣳ अग्नीꣳ रप्सुषदो हुवे वोमयिवर्चो वलमोजो निधत्त॥ इति पाद्यं दत्त्वा ॐपवमानः सुवर्जनःपवित्रेण विचर्षणिः। यः पोता स पुनातु मा इत्याचमनं दद्यात् । ॐइदमापः प्रवहतावद्यं च मलं च यत् यच्चाभिदुद्रोहानृतं यच्चशेपे अभीरुणम्।आपो मा तस्मादेनसः पवमानश्च मुञ्चतु । इतिमन्त्रेण स्नानम् । राजनसामाप्यध्येतव्यम् । तत्र तद्योनि ऋक् ॐइन्द्रं नरोनेमधिताहवन्ते यत्पा-

र्यायुनजते धियस्ताः। शूरोनृषाताशवसश्चकान आगोमति व्रजे भजात्वं नः॥ इति। ॐयुवासुवासाः परिवीत आगात् स उ श्रेयान् भवति जायमानः। तं धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्तः इति वाससी दत्त्वा ॐरथे अक्षेषु वृषभस्य वाजे वाते पर्जन्ये वरुणस्य शुष्मे। इन्द्रं या देवी सुभगा जजान सा न आगन् वर्चसा संविदाना॥ ॐया राजन्ये दुन्दुभावायतायाम् अश्वस्य क्रन्दे पुरुषस्य मायौ। इन्द्रं या देवी सुभगा जजान सान आगन् वर्चसा संविदाना॥ॐया हस्तिनि द्वीपिनि या हिरण्ये त्विपिरश्वेषु पुरुषेषु गोषु। इन्द्रं या देवी सुभगा जजानं सा न आगन् वर्चसा संविदाना॥ एभिर्मन्त्रैर्गन्धं दद्यात्। ॐपुष्पावतीः प्रसूवतीः फलिनीरफला उत। अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः॥ इति पुष्पाणि दत्त्वा ॐधूरसि धूर्वधूर्वन्तं धूर्वतं योस्मान् धूर्वतितं धूर्वयं वयं धूर्वामः। देवानामसि वह्नितमं सस्नितमं पप्रितमं जुष्टतमं देवहूतमम् इति धूपं दद्यात्। ॐतेजोऽसि शुक्रमस्य मृतमसि धामनामासि। प्रियं देवानामनाधृष्टं देवयजनमसि॥ इति दीपं दद्यात्। ॐदधिक्राव्णो अकार्षं जिष्णोरश्वस्य वाजिनः। सुरभिनोमुखाकरत्प्रण आयूंषि तारिषत्। इति मधुपर्कं निवेदयेत्। एषो हि देवः प्रदिशोनुसर्वाः पूर्वोहि जातः स उगर्भे अन्तः। स विजायमानः स जनिष्यमाणः प्रत्यङ्मुखास्तिष्ठति विश्वतोमुखः। ॐविश्वतश्चक्षुरुत विश्वतो मुखो विश्वतोबाहुरुत विश्वतस्पात्। संबाहुभ्यां धमति संपतत्रैर्द्यावाभूमी जनयन् देव एकः॥ ॐवेनस्तत्पश्यन् विश्वा भुवनानि विद्वान् यत्र विश्वं भवत्येकनीडम्। यस्मिन्निदꣳ संचविचैति सर्वꣳ सओतः प्रोतश्च विभु प्रजासु। ॐप्रतद्वोचेदमृतं नुविद्वान् गन्धर्वो नामनिहितं गुहासु। त्रीणि पदा निहिता गुहासु यस्तद्वेद स पितुः पिता सत्॥ ॐसनो-

बन्धुर्जनिता सविधाता धामानि वेदभुवनानि विश्वा। यत्र देवा अमृतमानशानास्तृतीये धामान्यभ्यैरयन्त ॥ ओंपरिद्यावा पृथिवी यन्ति सद्यः परिलोकान् परिदिशः परिसुवः। ऋतस्य तन्तुं वितत्तं विचृत्य तदपश्यत्तदभवत्प्रजासु। ओं परीत्य लोकान् परीत्य भूतानि परीत्य सर्वाः प्रदिशो दिशश्च। प्रजापतिः प्रथमजा ऋतस्यात्मनात्मानमभिसम्बभूव। ॐसदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम्। सनिंमेधामयासिषम्। एभिर्मन्त्रैर्नैवेद्यसमर्पणं कुर्यात्। ततः पानीयाचमनचामरव्यजनादीनि गायत्र्या दद्यात्। पुरुषसूक्तं जप्त्वा तेनैव जुहुयात् ॥

इति विष्णुधर्मोत्तरोक्तः पूजनप्रयोगः ॥

अथ श्रीभागवतोक्तः पूजाप्रयोगः।

प्रातर्हरिं स्मृत्वोत्थाय कृतावश्यकक्रियो दन्तधावनपूर्वकं वैदिकतान्त्रिकमन्त्रैः स्नात्वा कृतसन्ध्यावन्दनादिक्रियः प्रागग्रदर्भेष्वासीनः प्रागास्य उदङ्मुखो वा स्थिरप्रतिमासंमुखो वा आचम्य देशकालौ स्मृत्वा श्रीकृष्णप्रीतये भगवत्पूजनं करिष्ये इति सङ्कल्प्य पुरुषसूक्तादिमन्त्रैः कृतन्यासः कृतन्यासां भगवन्मूर्त्तिं निर्माल्याद्यपाकरणेन शोधयेत्। ततः कलशशङ्खपाद्यार्घाचमनीयपात्राण्यासादयेत्। तेषु जलं प्रक्षिप्य तत्र पाद्यपात्रं ॐनम इत्यभिमन्त्र्य अर्घपात्रं च ॐस्वाहा इत्यभिमन्त्र्य आचमनीयपात्रं ॐवषट् इत्यभिमन्त्र्य गायत्र्या सर्वाणि पुनरभिमन्त्रयेत्। ततो देहे कोष्ठगतेन वायुना शोषिते आधारगतेनाग्निना दग्धे पुनर्ललाटस्थचन्द्रमण्डलामृताप्लावनेनामृतमये जाते परां जीवकलां श्रीनारायणरूपां नादान्ते सिद्धभावितां स्मरेत्। अमृतमये पिण्डे दीपप्रभया गृह इव व्याप्ते सति मानसैरुपचारैः संपूज्य तन्मयः सन् अर्चादिष्वावाह्य स्थापनमुद्रया स्थापयित्वा

वेदतन्त्राभ्यां पीठपूजनपूर्वकं पूजयेत् । तत्र पीठपूजा यथा, आग्नेयादिचतुष्कोणेषु आसनपादभावनया ॐधर्माय नमः । ॐज्ञानाय नमः । ॐवैराग्याय नमः । ॐऐश्वर्याय नमः । पूर्वादिदिक्षु आसनगात्रभावनया ॐअधर्माय नमः।ॐअज्ञानाय नमः ॐअवैराग्याय नमः।अनैश्वर्याय नमः। मध्ये आसनपट्टिकाभावनया ॐआत्मने नमः । ॐअन्तरात्मने नमः । ॐपरमात्मने ॐज्ञानात्मने नमः । ॐसत्त्वाय नमः । ॐरजसे नमः । ॐतमसे नमः। ॐसूर्याय नमः। ॐसोमाय नमः।ॐअग्नये नमः इति ।ततः प्रागादिक्रमेण ॐविमलायैनमः ॐउत्कर्षिण्यै नमः।ॐज्ञानायै नमः। ॐक्रियायै नमः।ॐयोगायै नमः ॐप्रह्व्यै नमः । ॐसत्यायै नमः ॐईशानायै नमः । मध्ये ॐअनुग्रहायै नमः । तस्मिन् पीठे आवाह्य स्थापनमुद्रया स्थापयित्वा पूजयेत् । पाद्यार्घाचमनस्नानवस्त्रोपवीतगन्धपुष्पादि वैदिकैस्तान्त्रिकैर्मन्त्रैर्देयम् । तत्र स्नाने स्वर्णघर्मानुवाको जप्तव्यः । स यथा, सुवर्णं घर्मं परिवेद वेनम् । इन्द्रस्यात्मानं दशधा चरन्तम् । अन्तः समुद्रे मनसा चरन्तम् । ब्रह्मान्वविन्दद्दशहोतारमर्णे । अन्तःप्रविष्टः शास्ता जनानाम् एकः सन् बहुधा विचारः । शत ँ शुक्राणि यत्रैकं भवन्ति । सर्वे वेदा यत्रैकं भवन्ति । सर्वे होतारो यत्रैकं भवन्ति। समानसीन आत्मा जनानाम् ॥ १॥ अन्तः प्रविष्टः शास्ता जनाना ँ सर्वात्मा । सर्वाः प्रजा यत्रैकं भवन्ति । चतुर्होतारो यत्र सम्पदं गच्छन्ति देवैः । समानसीन आत्मा जनानाम् । ब्रह्मेन्द्रमग्निं जगतः प्रतिष्ठाम् । दिवआत्मान ँ सवितारं बृहस्पतिम् । चतुर्होतारं प्रदिशोनुक्लृप्तम् ।वाचो वीर्यं तपसान्वविन्दत् । अन्तः प्रविष्टं कर्त्तारमेतम् । त्वष्टार ँ रूपाणि विकुर्वन्तं विपश्चिम् ॥ २ ॥ अमृतस्य प्राणं यज्ञमेतम् ।चतुर्होतॄणामात्मानं कवयो निचिक्युः।

अन्तः प्रविष्टं कर्त्तारमेतम् । देवानां बन्धुर्निहितं गुहासु । अमृतेन क्लृप्तं यज्ञमेतम् । चतुर्होतॄणामात्मानं कवयो निचिक्युः । शतं नियुतः परिवेद विश्वा विश्ववारः । विश्वमिदं वृणाति । इन्द्रस्यात्मा निहितः पञ्चहोता । अमृतं देवानामायुः प्रजानाम् ॥३॥ इद्ँ राजानँ सवितारमेतम् । वायोरात्मानं कवयो निचिक्युः । रश्मिँ रश्मीनां मध्ये तपन्तम् । ऋतस्य पदे कवयो निपान्ति । य आण्डकोशे भुवनं बिभर्त्ति । अनिर्विण्णः सन्नथलोकान् विचष्टे । यस्याण्डकोशँ शुष्ममाहुः प्राणमुल्वम् । तेन क्लृप्तो मृतेनाहमस्मि । सुवर्णं कोशँ रजसा परीवृतम् । देवानां वसुधानीं विराजम् ॥४॥ अमृतस्य पूर्णां तामुकलां विचक्षते । पादँ षड्ढोतुर्नकिलाविवित्से येनर्त्तवः पञ्चधोतक्लृप्ताः । उत वा षड्धा मनसोतक्लृप्ताः । तँ षड्ढोतारमृतुभिः कल्पमानम् । ऋतस्य पदे कवयो निपान्ति । अन्तः प्रविष्टं कर्त्तारमेतम् । अन्तश्चन्द्रमसि मनसा चरन्तम् । सहैव सन्तं न विजानन्ति देवाः । इन्द्रस्यात्मानँ शतधा चरन्तम् ॥५॥ इन्द्रो राजा जगतो य ईशे । सप्तहोता सप्तधा विक्लृप्तः । परेण तन्तुं परिषिच्यमानम् । अन्तरादित्ये मनसा चरन्तम् । देवानाँ हृदयं ब्रह्मान्वविन्दत् । ब्रह्मैतद्ब्रह्मण उज्जभार । अर्कँ श्चोतन्तँ सरिरस्य मध्ये । आयस्मिन्सप्त पेरवः । मेहन्ति बहुलाँ श्रियम् । बह्वश्वामिन्द्रगोमतीम् ॥ ६ ॥ अच्युतां बहुलाँ श्रियम् । सहरिर्वसुवित्तमः । पेरुरिन्द्राय पिन्वते । बह्वश्वामिन्द्रगोमतीम् । अच्युतां बहुलाँ श्रियम् । मह्यमिन्द्रो नियच्छतु । शतँ शता अस्य युक्ता हरीणाम् । अर्वाङायातु वसुभी रश्मिरिन्द्रः । प्रमँहमाणो बहुलाँ श्रियम् । रश्मिरिन्द्रः सविता मे नियच्छतु ॥ ७ ॥ घृतं तेजोमधुमदिन्द्रियम् । मय्ययमग्निर्दधातु । हरिः पतङ्गः पटरी सुपर्णः । दिविक्षयो नभसा य एति । स न इन्द्रः कामवरं

ददातु । पञ्चारं चक्रं परिवर्तते पृथु । हिरण्यज्योतिः सरिरस्य मध्ये । अजस्रं ज्योतिर्नभसा सर्पदेति । स न इन्द्रः कामवरं ददातु सप्त युञ्जन्ति रथमेकचक्रम् ॥ ८ ॥ एको अश्वो वहति सप्तनामा । त्रिनाभिचक्रमजरमनर्वम् । येनेमा विश्वा भुवनानि तस्थुः । भद्रं पश्यन्त उपसेदुरग्रे । तपोदीक्षामृषयः सुवर्विदः । ततः क्षत्रं बलमोजश्च जातम् । तदस्मै देवा अभिसन्नमन्तु । श्वेतꣳ रश्मिं बोभुज्यमानम् । अपां नेतारं भुवनस्य गोपाम् । इन्द्रं निचिक्युः परमे व्योमन् ॥ ९ ॥ रोहिणीः पिङ्गला एकरूपाः । क्षरन्तीः पिङ्गला एकरूपाः । शतꣳ सहस्राणि प्रयुतानि नाव्यानाम् । अयं यः श्वेतो रश्मिः । परिसर्वमिदं जगत् । प्रजां पशून्धनानि । अस्माकं ददातु । श्वेतो रश्मिः परिसर्वं बभूव । सुवन्मह्यं पशून्विश्वरूपान् । पतङ्गमक्तमसुरस्य मायया ॥ १० ॥ हृदा पश्यन्ति मनसा मनीषिणः । समुद्रे अन्तः कवयो विचक्षते । मरीचीनां पदमिच्छन्ति वेधसः । पतङ्गो वाचं मनसा बिभर्ति । तां गन्धर्वोवदद्गर्भे अन्तः । तां द्योतमानाꣳ स्वर्यं मनीषाम् । ऋतस्य पदे कवयो निपान्ति । ये ग्राम्याः पशवो विश्वरूपाः । विरूपाः सन्तो बहुधैकरूपाः । अग्निस्ताꣳ अग्रे प्रमुमोक्तु देवः ॥ ११ ॥ प्रजापतिः प्रजया संविदानः । वीतꣳ स्तुके स्तुके । युवमस्मासु नियच्छतम् । प्रप्रयज्ञपतिं तिर । ये ग्राम्याः पशवो विश्वरूपाः । विरूपाः सन्तो बहुधैकरूपाः । तेषाꣳ सप्तानामिह रन्तिरस्तु । रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय । य आरण्याः पशवो विश्वरूपाः । विरूपाः सन्तो बहुधैकरूपाः ॥ १२ ॥ वायुस्ताꣳ अग्रे प्रमुमोक्तु देवः । प्रजापतिः प्रजया संविदानः । इडायै सृप्तं घृतवच्चराचरम् । देवा अन्वविन्दन्गुहाहितम् । य आरण्याः पशवो विश्वरूपाः । विरूपाः सन्तो बहुधैकरूपाः । तेषाꣳ सप्तानामि-

हरन्तिरस्तु । रायस्पोषाय सुप्रजास्त्वाय सुवीर्य्याय ॥ १३ ॥ राजनसाम पुरुषसूक्तं च एतानि स्नाने जपेत् । जितं ते पुण्डरीकाक्ष इत्यपि जपेत् स्नानकाले । ततः पुष्पान्तं पूजयित्वा प्रागादिक्रमेण सुदर्शनादीन् पूजयेत् । तद्यथा, ॐसुदर्शनाय नमः। ॐपाञ्चजन्याय नमः। ॐगदायै नमः। ॐअसये नमः। ॐइषुभ्यो नमः। ॐधनुषे नमः। ॐहलाय नमः। ॐमुसलाय नमः। इति। उपरि कौस्तुभाय नमः। ॐवनमालायै नमः। ॐश्रीवत्साय नमः। अष्टदिक्षु ॐनन्दाय नमः। ॐसुनन्दाय नमः। ॐगरुडाय नमः। ॐप्रचण्डाय नमः। ॐचण्डाय नमः। ॐमहाबलाय नमः। ॐकुमुदाय नमः। ॐकुमुदेक्षणाय नमः। पुरतः ॐगरुडाय नमः। आग्नेयादिकोणेषु ॐदुर्गायै नमः। ॐविनायकाय नमः। ॐव्यासाय नमः। ॐविष्वक्सेनाय नमः। वामतः ॐगुरुभ्यो नमः। प्रागादिक्रमेण ॐइन्द्राय नमः। ॐअग्नये नमः। ॐयमाय नमः। ॐनिर्ऋतये नमः। ॐवरुणाय नमः। ॐवायवे नमः। ॐसोमाय नमः। ॐईशानाय नमः। ॐब्रह्मणे नमः। ॐअनन्ताय नमः। एतान् देवस्याभिमुखान् अर्घादिभिः पूजयेत्। ततो धूपदीपनैवेद्यं नानाविधं समर्पयेत्। ततो होमं यथावद्विहिते कुण्डे प्रकुर्वीत। तद्यथा, अग्निं संस्थाप्य परिस्तीर्य्य पर्युक्ष्य अन्वाधाय प्रोक्षण्युदकेन आसादित द्रव्यं प्रोक्ष्य वह्नौ प्रमाणवाक्यप्रतिपादितरूपमावाहयेत् । तत इध्मसमिधो घृताक्ताः प्रास्य ॐप्रजापतये स्वाहा इदं प्रजापतये। ॐइन्द्राय स्वाहा इदमिन्द्राय। ॐअग्नये स्वाहा इदमग्नये। ॐसोमाय स्वाहा इदं सोमाय इति हुत्वा मूलमन्त्रेण नारायणाष्टाक्षरेण पुरुषसूक्तषोडशर्चाभिर्जुहुयात् प्रत्यृचम् । ततः पूजाक्रमेण धर्मादिभ्य एकैकामाहुतिं दत्त्वा अग्नये स्विष्टकृते स्वाहेति

स्विष्टकृतं हुत्वा वह्निस्थं भगवन्तं पूजयित्वा नन्दादिभ्यः पूर्वोक्तेभ्यो बलिं दद्यात् । ततः पूजास्थानमागत्य देवस्याग्रे समुपविश्य मूलमन्त्रं जप्त्वा नैवेद्ये होमे च भगवतो भोजनसमाप्तिं ज्ञात्वाऽऽचमनं दत्त्वोच्छेषं विष्वक्सेनाय दद्यात् । ताम्बूलादि दत्त्वा पुष्पाञ्जलित्रयं दद्यात् । ततो गीतनृत्यवादित्रस्तोत्रपाठदिकं कृत्व.भगवन् प्रसीदेति दण्डवत् नमस्कुर्यात् । ततो वामदक्षिणाभ्यां पाणिभ्यां वामदक्षिणौ पादौ स्वस्तिककरणेन धृत्वा प्रार्थयेत्

प्रपन्नं पाहि मामीश भीतं मृत्युग्रहार्णवात् ।

ततो निर्माल्यं शिरसा धृत्वा उद्वासयितुं योग्यं भगवन्तं प्रतिमादिस्थमात्मज्योतिषि निदध्यात् ।

इति श्रीभागवतोक्तः पूजाप्रयोगः ॥

अथ नमस्कारमन्त्राः बृहन्नारदीये,

नताः स्म विष्णुं जगदेकनाथं स्मरत्समस्तार्त्तिहरं परेशम् ।
स्वभावशुद्धं परिपूर्णभावं वदन्ति तं ज्ञानगतं च तज्ज्ञाः ॥
ध्येयः सदा योगिजनैःपरात्मा स्वेच्छाशरीरैःकृतदेवकार्यैः ।
जगत्स्वरूपो जगदादिनाथस्तस्मै नमामः पुरुषोत्तमाय ॥
यन्नामसङ्कीर्तनतो मुरारेः समस्तपापं प्रशमं प्रयाति ।
तमीशमाद्यं पुरुषं पुराणं नताः स्म विष्णुं पुरुषार्थसिध्यै ॥
यत्तेजसा भान्ति दिवाकराद्यानातिक्रमन्त्यब्धिनदीनदाद्याः ।
कालात्मकं तं त्रिदशाधिनाथं नताः स्म देवं पुरुषार्थरूपम् ॥
जगत्करोत्यब्जभवो ह्यजस्रं पुनान्ति लोकान् श्रुतयश्च विप्राः ।
तमादिदेवं सगुणं निदानं यदाज्ञया तं प्रणताः स्म विष्णुम् ॥
वरं वरेण्यं मधुकैटभारिं सुरासुराभ्यर्चितपादपीठम् ॥
सद्भक्तसङ्कल्पितसिद्धिदं तं ज्ञानैकवेद्यं प्रणताः स्म देवम् ।
अनादिमध्यान्तमजं परेशमवेद्यमज्ञानतिरोहितानाम् ॥

सच्चित्सदानन्दकृतस्वरूपं रूपादिहीनं प्रणताः स्म देवम् ॥
नारायणं विष्णुमनन्तमीशं पीताम्बरं पद्मभवादिसेव्यम् ।
यज्ञप्रियं यज्ञकरं विशुद्धं नताःस्म सर्वोत्त॰ रमिष्टदं तम् ॥

इति ॥

## अथ कश्यपोक्तं वामनस्तोत्र

नमो नमस्तेऽखिलकारणाय नमो नमस्तेऽखि॰ म् ।
नमो नमस्तेऽमरनायकाय नमोनमो दैत्यविमर्दनाय ॰पालकाय
नमोनमोभक्तजनप्रियाय नमोनमः सज्जनरञ्जनाय ।
नमोनमो दुर्जननाशनाय नमोऽस्तु तस्मै जगदीश्वराय ॥
नमोनमः कारणवामनाय नारायणायामितविक्रमाय ।
श्रीशार्ङ्गचक्रासिगदाधराय नमोऽस्तु तस्मै पुरुषोत्तमाय ॥
नमोनमोऽर्केन्दुविलोचनाय नमोऽस्तु ते यज्ञफलप्रदाय ।
नमोऽस्तु यज्ञाङ्गविराजिताय नमोऽस्तु ते सज्जनवल्लभाय ॥
नमो जगत्कारणकारणाय नमोऽस्तु शब्दादिविवर्जिताय ।
नमोऽस्तु ते दिव्यसुखप्रदाय नमोनमो भक्तमनोगताय ॥
नमोनमस्ते भ्रमनाशनाय नमोनमो मन्दरधारकाय ।
नमोऽस्तु ते यज्ञवराहनाम्ने नमो हिरण्याख्यविदारणाय ॥
नमोऽस्तु ते वामनरूपभाजे नमोऽस्तु ते क्षत्रकुलान्तकाय ।
नमोऽस्तु ते रावणमर्दनाय नमोऽस्तु ते नन्दसुताग्रजाय ॥
नमो जिनाकारधराय तुभ्यं नमो महाम्लेच्छजनार्दनाय ।
नमस्ते कमलाकान्त नमस्ते सुखदायिने ॥
स्मृतार्त्तिनाशिने तुभ्यं भूयोभूयो नमोनमः ॥
य इदं वामनस्तोत्रं त्रिसन्ध्यं तु पठेन्नरः ॥
धनारोग्यान्नसन्तानैस्तस्य नित्योत्सवो भवेत् ।

इति नमस्कारविधिः ।

## अथ विष्णोः संक्षेपतः पूजाविधिः ।

तत्र पुष्पादिकमादाय ॐभूर्भुवः स्वः भगवन् विष्णो इहागच्छ इह तिष्ठेति आवाह्य विष्णोरराटमसीति मन्त्रेण पाद्यार्घाचमनीयस्नानमधुपर्कपुनराचमनीयानि ॐभगवते विष्णवे नम इति मन्त्रेण वैदिकेन वा । इदमनुलेपनं ॐभगवते विष्णवे नम इति । अनेनैव पुष्पाञ्जलित्रयेण पूजयेत् । ॐभगवते विष्णवे नम एष धूपः । एवमेव दीपनैवेद्ये । नत्वा स्तुत्वा भगवन् विष्णो क्षमस्वेति विसर्जयेत् । इयं पूजा शूद्रेण वैदिकमन्त्रहीना कार्या ।

इति संक्षेपतोविष्णुपूजा ॥

## अथ विशेषपूजाविधिरभिधीयते ।

भगवानुवाच ।

नैमित्तिकं शृणु ब्रह्मन् मम प्रीतिकरं शुभम् ।
उच्यते हि समासेन मम प्रीतिकरो हि सः ॥
तत्कर्त्तेति शेषः ।
एकादश्यां सदा कुर्यात् घृतेनाभ्यञ्जनं तु यः ।
तस्याहं तोषितो नित्यं साधये च सुचिन्तितम् ॥
घृतेनाभ्यञ्जयेद्यस्तु न स पापैः कृताकृतैः ।
लिप्यते कुत्रचिद्देवं पद्मपत्रमिवाम्भसा ॥
अथापरं प्रवक्ष्यामि स्नानं त्रैलोक्यपूजितम् ।
प्रतिमासं च द्वादश्यां महास्नानं तु दापयेत् ॥
पयोदधिघृतालाभे तिलतैलं समाक्षिकम् ।
शर्कराबिल्वकुसुमै रक्षोघ्नैश्चैव सर्षपैः ॥
जातीफलानि समिधः श्रीफलेन समान्विताः ।
रक्षोघ्नसर्षपैः सितसर्षपैः ।
अष्टोत्तरशतार्द्धं वा पादं पादार्द्धमेव च ॥

एकैकं न्यस्य देवाग्रे स्वमन्त्रेणैव चाष्टकम् ।
महास्नानं तु यो दद्यात्तस्य पुण्यफलं शृणु ॥
अश्वमेधसहस्राणि वाजपेयशतानि च ।
गवां कोटिप्रदानेन यत्पुण्यं देहिनां भवेत् ॥
तत्सर्वं शतधा भूत्वा पूजकस्य सदा भवेत् ।

**विष्णुधर्मोत्तरे पुलस्त्यः,**

द्वादश्यां पञ्चदश्यां वा गव्येन पयसा हरेः ।
स्नपनं दैत्यशार्दूल महापातकनाशनम् ॥
द्वादश्यां तुलसीपत्रैर्यः पूजां कुरुते हरेः ।
वैकुण्ठे विपुलान् भोगान् भुक्त्वा सायुज्यमाप्नुयात
कार्त्तिकशुक्लद्वादश्यां संपूज्य मधुसूदनम् ।
ततस्तु तुलसीपूजां कुरुते यच्छृणुष्व मे ॥
अतीतजन्मसाहस्रे यत् कृतं पापसञ्चयम् ।
सर्वं तु सहसा दग्ध्वा परं सायुज्यमाप्नुयात् ॥
अयने चोत्तरे प्राप्ते यः स्नापयति केशवम् ।
घृतप्रस्थेन पयसा सकलैनो व्यपोहति ॥
घृतस्नानं च देवस्य तस्मिन् काले समाहितः ।
स्नप्यमानं च पश्यन्ति ये घृतेनोत्तरायणे ॥
ते यान्ति विष्णुसालोक्यं पूर्वपापविवर्जिताः ॥

**बृहन्नारदीये,**

द्वादश्यां पौर्णमास्यां च क्षीरस्नानरतो नरः ।
कुलायुतयुतो राजन् सायुज्यं लभते हरेः ॥
पञ्चामृतेन स्नपयेदेकादश्यां जनार्दनम् ।
कुलकोटिसमायुक्तो विष्णोः सायुज्यमाप्नुयात् ॥
एकादश्यां पौर्णमास्यां द्वादश्यां च नृपोत्तम ।

नारिकेलोदकैर्विष्णुं स्नापयेत्तत्फलं शृणु ॥
शतजन्मार्जितैः पापैर्विमुक्तो मनुजो नृप ।
शतद्वयकुलैर्युक्तो विष्णुना सह मोदते ॥
क्षीरेण स्नापयेद्विष्णुं रविसंक्रमणे बुधः ।
स वसेद्विष्णुभवने त्रिसप्तपुरुषान्वितः ॥
शुक्लपक्षे चतुर्दश्यामष्टम्यां पूर्णिमादिने ।
एकादश्यां भानुवारे द्वादश्यां पञ्चमीदिने ॥
सोमसूर्योपरागे च मन्वादिषु युगादिषु ।
व्यतीपाते वैधृतौ च गजच्छायाह्वये तथा ॥
अर्द्धोदये च पुष्यार्के हस्तार्के रोहिणीबुधे ।
तथैव शनिरोहिण्यां भौमाश्विन्यां तथैव च ॥
शन्याश्विन्यां बुधाश्विन्यां भृगुपातेऽर्कवैधृतौ ।
तथा बुधानुराधायां श्रवणाऽर्के तथैव च ॥
तथाच भौमश्रवणे हस्तस्थे च बृहस्पतौ ।
बुधाष्टम्यां बुधाषाढे भृगुरेवतिसंयुते ॥
स्नापयेत्पयसा विष्णुं शिवं वा वाग्यतः शुचिः ।
जन्मायुतार्जितैः पापैर्विमुक्तः परमं पदम् ॥
कुलकोटिसमायुक्तः संप्राप्नोति न संशयः । इति ।
शङ्खे तीर्थोदकं कृत्वा यः स्नापयति केशवम् ।
बिन्दुमात्रेण द्वादश्यां कुलानां तारयेच्छतम् ॥
वल्लकीनिर्गते शब्दे पूजाकाले तु केशवे ।
द्वादश्यां जागरे रात्रौ कोटियज्ञैस्तु किं कृतैः ॥
यवगोधूममाषाश्च व्रीहयः कुशसर्षपाः ॥
तिलश्यामाकनीवारा ग्रामारण्याश्च वैष्णवाः ।
नित्यं वा मन्दिरे वापि एकादश्यां पुनर्वसौ ॥

महोत्पाते नृपक्षोभे महादुःखसमुद्भवे ।
गृहदाहे च मरणे पापेऽरौ गृहमध्यगे ॥
सर्वेषां च प्रशान्त्यर्थं धान्यैरेतैर्हरिं यदि ।
प्रत्येकं प्रस्थमात्रेण यथालाभं समर्चयेत् ॥
सर्वोत्पातप्रशान्तिः स्याद्व्यासस्य वचनं ध्रुवम् । इति
पुष्पसारसुधानिधौ,
दमनकेनापि देवेशं संप्राप्ते मधुमाधवे ।
कपिलाशतस्य मुने अर्चनाल्लभते फलम् ॥
माधवे मासि तुलसी शस्ता केशवपूजने ।
कपिलाशतदानेन समं पुण्यं दिने दिने ॥
मल्लिकाकुसुमैर्देवं वसन्ते गरुडध्वजम् ।
योऽर्चयेत्परया भक्त्या दहेत्पापं त्रिधाऽर्जितम् ॥
कर्कराशिगते सूर्ये केतकीसंभवैर्दलैः ।
अर्चयिष्यन्ति गोविन्दं संप्राप्ते दक्षिणायने ॥
कृत्वा पापसहस्राणि कृत्वा पापशतानि च ।
तेऽपि यास्यन्ति विप्रेन्द्र स्वर्गं च पितृभिः सह ॥
वर्षाकाले तु देवेशं कुसुमैश्चम्पकोद्भवैः ।
येऽर्चयन्ति च ते भक्त्या संसारे त्वपुनर्भवाः ॥
मधुप्रस्थेन गोविन्दं कार्त्तिकीपूर्णिमादिने ।
संस्नाप्य हरिमायाति शतकोटिकुलान्वितः ॥
विष्णुधर्मोत्तरे,
परशुराम उवाच ।
भगवन् श्रोतुमिच्छामि कर्मकामानहं नृणाम् ।
कृतेन येन कामानां नरो भवति भाजनम् ॥
पुष्कर उवाच ।

सर्वेषामेव कामानामीश्वरो भगवान् हरिः ।
तस्य संपूजनादेव सर्वान् कामानवाप्नुयात् ॥
स्नापयित्वा घृतक्षीरैस्त्रिशुक्लेनानुलेपयेत् ।
त्रिशुक्लं च बलिं दत्त्वा मुच्यते मानवो ज्वरात् ॥
त्रिशुक्लानुलेपनलक्षणम्—
त्रिशुक्लं कथितं राम कर्पूरोशीरचन्दनम् ।
त्रिशुक्लबलिलक्षणम्—
घृतौदनं पायसं च तथा दध्योदनं द्विज ।
त्रिशुक्लस्तु बलिः प्रोक्तः सर्वकामफलप्रदः ॥
अन्यच्च,
विष्णुं सहस्रमूर्द्धानं चराचरगुरुं हरिम् ।
स्नापयित्वा घृतक्षीरैश्चन्दनेनानुलेपयेत् ॥
शुक्लैः संपूज्य पुष्पैश्च सप्तसस्यं बलिं हरेत् ।
रक्तपित्तान्नरो घोरान्मुच्यते नात्र संशयः ॥
सप्तसस्यबलिलक्षणम्—
मुद्गमाषमसूराश्च गोधूमचणकानि च ।
मकुष्ठकः कपालश्च सप्तसस्यो बलिः स्मृतः ॥
मकुष्ठको वनमुद्गः । कपालः अलाबुः ।
तैलक्षौद्रघृतैर्देवं स्नापयित्वा जनार्दनम् ॥
उष्णत्रयेणानुलिप्य संपूज्य कुसुमैः सितैः ॥
पञ्चमुद्गबलिं दत्त्वा ह्यतीसारात्प्रमुच्यते ।
उष्णत्रयानुलेपनलक्षणम्—
कुङ्कुमं मृगदर्पं च तथैवागुरु भार्गव ।
उष्णत्रयमिदं प्रोक्तं देवदेवानुलेपनम् ॥
मृगदर्पः कस्तूरिका । अगुरु इति षण्ढत्वमार्षम् ।

पञ्चमुद्गबलिलक्षणम्—
वटकानि च भक्ष्याणि कुल्माषं रागखाण्डवम् ।
मुद्गसूपौदनं चैव पञ्चमुद्गो बलिर्भवेत् ॥
रागखाण्डवम् शर्करामिश्रं मधु । कुल्माषाः स्विन्नमाषाः ।
संस्नाप्य पञ्चगव्येन दत्त्वा पञ्चानुलेपनम् ।
पञ्चसस्यं बलिं दत्त्वा कुष्ठं त्यजति मानवः ॥
पञ्चगव्यलक्षणम्—
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
पञ्चगव्यमिदं स्नानं कथितं पापनाशनम् ॥
पञ्चानुलेपनलक्षणम्—
चन्दनं च प्रियङ्गुं च कर्पूरेण समन्वितम् ।
कुङ्कुमं मृगदर्पं च पञ्चगन्धं प्रकीर्तितम् ॥
पञ्चसस्यबलिलक्षणम्—
मकुष्ठकमसूरैश्च सप्तसस्यैर्विना कृतः ।
पञ्चसस्यो बलिः प्रोक्तः सर्वकामप्रदः शिवः ॥ इति ।
त्रिरसैः स्नापितं देवं त्रिसुगन्धानुलेपितम् ।
कृत्वा दत्त्वा त्रिशूकं च बलिं कासाद्विमुच्यते ॥
त्रिरसलक्षणम्—
घृतं तैलं तथा क्षौद्रं त्रिरसं परिकीर्त्तितम् ।
त्रिसुगन्धलक्षणम्—
कर्पूरं च सुगन्धिं च प्रियङ्गुं चैव लेपनम् ।
त्रिसुगन्धमिति प्रोक्तं देवदेवस्य कारयेत् ॥
त्रिशूकबलिलक्षणम्—
गोधूमयवशाल्यन्नैस्त्रिशूकं परिचक्षते । इति ।
स्नापयित्वा च तैलेन त्रिभिरुष्णैर्विलेपयेत् ।

पञ्चमाषबलिं दत्त्वा वातव्याधेर्विमुच्यते ॥
उष्णत्रयानुलेपलक्षणं पूर्वमेवोक्तम् ।
पञ्चमाषलक्षणम्—
कुल्माषेन्दिरिकामूपवटकैः खाण्डवान्वितैः ।
पञ्चमाषो बलिः प्रोक्तः सदा मांसभुजां प्रियः ॥
कुल्माषा राजमाषा इति प्रयोगपारिजातकारः । स्विन्नमाषा इति काश्चित् ।
द्विस्नेहस्नापितं देवं शीतोष्णेनानुलेपितम् ।
श्वेतद्वयबलेर्दानात् व्याधिभ्यो मुच्यते नरः ॥
द्विस्नेहलक्षणम्—
घृतं च तिलतैलं च द्विस्नेहमिति कीर्तितम् ।
शीतोष्णलक्षणम्—
चन्दनं मृगदर्पं च शीतोष्णमिति चक्षते ।
श्वेतद्वयबलिलक्षणम्—
श्वेतद्वयमिदं प्रोक्तं दधि क्षीरं च भार्गव । इति ।
पञ्चभिः स्नापयित्वा च रसैर्देवं जनार्दनम् ।
अनुलिप्य च धर्मज्ञ तथा पञ्चसुगन्धिना ॥
पञ्चवर्णानि पुष्पाणि तथा दत्त्वा यथाविधि ।
धूपं तु पञ्च निर्यासं दत्त्वा चैवाप्यनन्तरम् ॥
ततस्तु पञ्चमधुरं बलिं सम्यक् निवेदयेत् ।
सर्वस्माद्याधितः शीघ्रं मुच्यते नात्र संशयः ॥
पञ्चरसस्नानलक्षणम्—
घृतं तैलं तथा क्षौद्रं दधि क्षीरं च पञ्चमम् ।
प्रोक्तं पञ्चरसं नाम स्नपनं पापनाशनम् ॥
पञ्चसुगन्धलक्षणम्—

चन्दनं च प्रियङ्गु च तथा कर्पूरकान्वितम् ।
कुङ्कुमं मृगदर्पं च पञ्चगन्धं प्रकीर्त्तितम् ॥

पञ्चवर्णपुष्पलक्षणम्—

पीतानि शुभ्रवर्णानि हरिद्वर्णानि भार्गव ।
कृष्णानि चैव रक्तानि पञ्चवर्णानि निर्दिशेत् ॥

पञ्चनिर्यासलक्षणम्—

शल्लकी गुग्गुलं चैव कर्पूरं बकुलं तथा ।
कथितं पञ्चनिर्यासमेतत् श्रीवासवान्वितम् ॥

श्रीवासवं बिल्वनिर्यासः ।

पञ्चमधुरबलिलक्षणम्—

क्षीरं क्षौद्रं घृतं द्राक्षा शर्करा च भृगूत्तम ।
इदं च पञ्चमधुरं बलिं दद्यात् सुखप्रदम् ॥ इति

घृतेन स्नापितं देवं चन्दनेनानुलेपयेत् ।
चतुर्भिर्जलजैः पुष्पैस्ततः सम्पूजयेद्विभुम् ॥
धूपं दद्यात्त्रिसारं च पञ्चगव्यं तथा बलिम् ।
पञ्चगौडं तथा राम बद्धो मुच्येत बन्धनात् ॥

चतुर्जलजलक्षणम्—

श्वेतरक्तानि पद्मानि कुमुदानि च भार्गव ।
इन्दीवराणि चत्वारि जलजानि विनिर्दिशेत् ॥

त्रिसारधूपलक्षणम्—

चन्दनागुरुकालेयैस्त्रिसारः परिकल्पितः ।

कालेयं पीतचन्दनम् ।

पञ्चगव्यलक्षणम्—

कीलाटदधिकाज्यैश्च क्षीरतक्रैर्मनोरमैः ॥
पञ्चगव्यो बलिः प्रोक्तः सततं केशवप्रियः ।

कीलाटलक्षणम्—

बहुतक्रोऽल्पदुग्धो यः पाकेन घनतां गतः।
कीलाटः स तु वातघ्नः पुंस्त्वनिद्राबलप्रदः॥

पञ्चगौडबलिलक्षणम्—

मोदकैश्च तथाऽपूपैः पायसेन तथैव च।
गुडौदनेन च तथा पाचनेन गुडेन च॥
पञ्चगौडबलिः प्रोक्तः परः सौभाग्यवर्धनः। इति।
त्रिशीतस्नापितं देवं त्रिशीतेनानुलेपितम्।
त्रिशीतैः कुसुमैः पूज्य धूपं दद्यात्रिशीतलम्॥
त्रिशीतं च बलिं दत्त्वा राजकोपात् प्रमुच्यते।

त्रिशीतस्नानलक्षणम्—

घृतं क्षीरं तथा क्षौद्रं त्रिशीतं स्नानमुच्यते।

त्रिशीतानुलेपलक्षणम्—

जातीफलं सकर्पूरं चन्दनं च भृगूत्तम।
त्रिशीतमेतत् कथितं देवदेवानुलेपनम्॥

त्रिशीतपुष्पलक्षणम्—

नीलोत्पलं रक्तपद्मं जातीपुष्पाणि भार्गव।
विष्णोः प्रियाणि पुष्पाणि त्रिशीतानि विनिर्दिशेत्॥

त्रिशीतधूपलक्षणम्—

कर्पूरचन्दनोशीरैस्त्रिशीतं परिकीर्त्तितम्।

त्रिशीतबलिलक्षणम्—

लाजसक्तुपयः क्षौद्रं त्रिशीतश्च बलिः स्मृतः। इति।
शीतोष्णस्नापितं देवं शीतोष्णेनानुलेपयेत्।
धूपं च दत्त्वा शीतोष्णं शीतोष्णं च तथा बलिम्॥
गुरुप्रसादमाप्नोति नात्र कार्या विचारणा।

शीतोष्णस्नानलक्षणम्—

क्षौद्रं तैलं च धर्मज्ञ शीतोष्णं परिकीर्तितम् ।

शीतोष्णानुलेपलक्षणम्—

चन्दनं मृगदर्पं च शीतोष्णमिति चक्षते ।

शीतोष्णधूपलक्षणम्—

चन्दनागुरुकर्पूरं मृगदर्पं तथैव च ।

शीतोष्णं च तथा प्रोक्तं देवदेवस्य धूपने ॥

शीतोष्णबलिलक्षणम्—

मुद्गमाषकृतैर्भक्ष्यैः शीतोष्णः परिकीर्त्तितः । इति ।

यमलस्नापितं देवं यमलेनानुलेपयेत् ।

अभ्यर्च्य यमलैः पुष्पैर्धूपं च यमलं दहेत् ।

यमलं च बलिं दत्त्वा सौभाग्यं प्राप्नुयान्नरः ॥

यमलस्नानलक्षणम्—

घृतं क्षौद्रं तथा राम यमलं परिकीर्त्तितम् ।

यमलानुलेपलक्षणम्—

कुङ्कुमं मृगदर्पं च यमलं परिकीर्तितम् ।

यमलपुष्पलक्षणम्—

जाती नीलोत्पलं चैव यमलं पुष्पमादिशेत् ।

यमलधूपलक्षणम्

यमलाख्यं तथा राम गुग्गुलं घृतसंयुतम् ।

यमलबलिलक्षणम्—

यवगोधूमजं भक्ष्यं यमलं च तथा स्मृतम् । इति ।

त्रिभिः संस्नापितं देवं मधुरैस्त्रिसुगन्धिभिः ।

अनुलिप्य त्रिभिः पत्रैः पूजयित्वा द्विजोत्तम ॥

धूपं त्रिसारं दातव्यं त्रिशूकं च तथा बलिम् ।

ततश्च त्रिफलं दत्त्वा सौभाग्यं महदाप्नुयात् ॥
सौभाग्यकामना नारी सौभाग्यं महदाप्नुयात् ।
त्रिमधुरस्नानलक्षणम्—
क्षौद्रमिक्षुरसं क्षीरं तथा त्रिमधुरं स्मृतम् ।
त्रिसुगन्धानुलेपलक्षणम्—
कर्पूरं च सुगन्धं च प्रियङ्गुं चैव लेपनम् ।
त्रिसुगन्धमिति प्रोक्तं देवदेवस्य कारयेत् ॥
त्रिपत्रलक्षणम्—
बिल्वं च तुलसीपत्रं जातीपत्रं तथैव च ।
त्रिपत्रमेतन्निर्दिष्टं देवदेवस्य पूजने ॥
त्रिसारधूपलक्षणं त्रिशूकबलिलक्षणं च पूर्वमेवोक्तम् ।
त्रिफललक्षणम्—
नारङ्गैश्च तथाचाम्लैर्द्राक्षया च भृगूत्तम ।
त्रिफलं तु बलिः प्रोक्तः सततं केशवप्रियः ॥ इति ।
त्रिभिः फलैः स्नापयित्वा त्रिसारेणानुलेपयेत् ।
त्रिशीतं च बलिं दत्त्वा यशः प्राप्नोत्यनुत्तमम् ॥
त्रिफलस्नानलक्षणम्—
जातीफलं च बिल्वं च तथैवामलकं फलम् ।
अभीष्टं तत्कृतं राम त्रिफलस्नानमुच्यते ॥
त्रिसारानुलेपलक्षणं त्रिशीतलक्षणं च पूर्वोक्तमेव ।
त्रितैलस्नापितं देवं त्रिरक्तेनानुलेपितम् ।
धूपयेन्महिषाज्येन त्रिरक्तं च बलिं हरेत् ॥
सर्वकार्याणि सिद्ध्यन्ति सत्यं नैवात्र संशयः ।
त्रितैलस्नानलक्षणम्—
नवनीतं घृतं तैलं त्रितैलमिति कीर्तितम् ।

त्रिरक्तानुलेपलक्षणम्—

तथा बकुलनिर्यासरक्तचन्दनकुङ्कुमैः ।
त्रिरक्तं कथितं राम देवदेवानुलेपने ॥

त्रिरक्तबलिलक्षणम्—

गुडेन द्राक्षया चैव बदरैः संस्कृतो बलिः ।
त्रिरक्तः कथितो राम प्रतिपक्षक्षयङ्करः ॥ इति

त्रिगव्यस्नापितं देवं त्रिशीतेनानुलेपयेत् ।
पूजयेत् श्वेतपद्मानां सहस्रेण महाभुज ॥
निवेद्य परमान्नं च प्रियमाप्नोत्यनुत्तमम् ।

त्रिगव्यस्नानलक्षणम्—

दधि क्षीरं घृतं चैव त्रिगव्यं परिकीर्तितम् ।
त्रिशीतानुलेपलक्षणं पूर्वमेवोक्तम् ।

घृतेन स्नापितं देवं चन्दनेनानुलेपितम् ।
जातीपुष्पसहस्रेण कर्पूरेण च धूपयेत् ॥
परमान्नबलिं दत्त्वा यथेष्टं काममाप्नुयात् ।
दिग्धं द्राक्षेण दध्ना च क्षौद्रेण च घृतेन च ।
अष्टाधिकशतानां च श्रीफलानि निवेदयेत् ॥
पञ्चगव्यं बलिं दत्त्वा धनमाप्नोत्यनुत्तमम् ।
पञ्चगव्यबलिलक्षणं तु पूर्वोक्तमेव ।
त्रिरक्तस्नापितं देवं त्रिरक्तेनानुलेपयेत् ।
रक्तैः पुष्पैः समभ्यर्च्य त्रिभिरेव यथाविधि ॥
त्रिरक्तं च बलिं दत्त्वा हुत्वा वै सर्षपत्रयम् ।
त्रिलोहं दक्षिणां दत्त्वा शत्रुनाशमवाप्नुयात् ॥

त्रिरक्तस्नानलक्षणम्—

रक्तचन्दनपानीयं कुङ्कुमांभस्तथैव च ।

तथैवोशीरजं तोयं त्रिरक्तं परिकीर्त्तितम् ॥
त्रिरक्तानुलेपनलक्षणं पूर्वमेवोक्तम् ।
त्रिरक्तपुष्पलक्षणम्—
कुङ्कुमं रक्तपद्मानि रक्तानि कुसुमानि च ।
एतत्रिरक्तं निर्दिष्टं कुसुमं केशवप्रियम् ॥
त्रिरक्तबलिलक्षणं पूर्वमेवोक्तम् ।
सर्षपत्रयलक्षणम्—
रक्तास्तु सर्षपा नाम तथा कृष्णाश्च सर्षपाः ।
सर्षपत्रयमित्युक्तं तथा ये शुक्लसर्षपाः ॥
त्रिलोहदक्षिणालक्षणम्—
ताम्रं सुवर्णं रजतं त्रिलोहं दक्षिणा स्मृता । इति ।
मिथुनस्नापितं देवं मिथुनेनानुलेपयेत् ।
अभ्यर्च्य मिथुनैर्देवं धूपं च मिथुनं दहेत् ॥
मिथुनं च बलिं दद्यात् मिथुनं जुहुयात्ततः ।
मिथुनं दक्षिणां दत्त्वा विवाहं प्राप्नुयान्नरः ॥
मिथुनस्नानलक्षणम्—
तथा क्षीरं घृतं चैव मिथुनं परिकीर्त्तितम् ।
मिथुनानुलेपलक्षणम्—
मिथुनं चन्दनं प्रोक्तं राम कस्तूरिकान्वितम् ।
मिथुनपुष्पलक्षणम्—
चम्पकं मल्लिकोपेतं मिथुनं परिकीर्त्तितम् ।
मिथुनधूपलक्षणम्—
कस्तूरिका सकर्पूरा मिथुनं भृगुनन्दन ।
मिथुनबलिलक्षणम्—
बलिर्मिथुनसंज्ञस्तु द्राक्षाबदरसंयुतः ।

मिथुनहोमलक्षणम्—
सर्षपास्तिलसंयुक्ता मिथुनं परिकीर्त्तितम् ।
मिथुनदक्षिणालक्षणम्—
बलीवर्दयुता धेनुर्मिथुनं परिकीर्त्तितम् । इति ।
त्रिस्नेहस्नापितं देवं त्रिसारेणानुलेपयेत् ।
त्रिभिः पत्रैः समभ्यर्च्य त्रिसारेण च धूपयेत् ॥
सप्तसस्यं बलिं दत्त्वा तदेव जुहुयात्तथा ।
शयनं दक्षिणां दत्त्वा गृहमाप्नोत्यनुत्तमम् ॥
त्रिस्नेहस्नानलक्षणम्—
नवनीतं घृतं तैलं त्रिस्नेहमिति शब्दितम् ।
अवशिष्टान्युक्तानि ।
त्रिफलस्नापितं देवं त्रिरक्तेनानुलेपितम् ।
त्रिशुक्रं च बलिं दत्त्वा पुन्नागकुसुमानि च ॥
पुन्नागकानि मुख्यानि फलानि विविधानि च ।
सुपुत्रं समवाप्नोति नात्र कार्या विचारणा ॥
एतल्लक्षणानि पूर्वोक्तानि ।
क्षीराज्यस्नापितं देवं चन्दनेनानुलेपयेत् ।
तदेव धूपं दातव्यं जातीपुष्पाणि वाप्यथ ॥
पञ्चगव्यं बलिं दत्त्वा हुत्वा वह्नौ तथा घृतम् ।
गाश्च दत्त्वा महाभाग गाः समाप्नोति मानवः ॥
पञ्चगव्यलक्षणं पूर्वोक्तमेव ।
यमलस्नापितं देवं यमलेनानुलेपयेत् ॥
अभ्यर्च्य यमलैः पुष्पैर्धूपं च यमलं दहेत् ॥
यमलं च बलिं दद्यात् जुहुयादर्जुनांस्तथा ।
तिलसिद्धार्थकयुतान् क्षीरसर्पिर्युतांस्तथा ॥

अश्वं च दक्षिणां दत्त्वा अश्वानाप्नोत्यनुत्तमान् ।
यमललक्षणं पूर्वोक्तमेव ।
घृतेन स्नापितं देवं तथैवागुरुलेपितम् ।
नागपुष्पैः समभ्यर्च्य धूपं दद्यात्तथागुरुम् ॥
त्रिशूकं च बलिं दद्यात् हुत्वा चैव हुताशनम् ।
सुवर्णमश्वं गां दत्त्वा गजानाप्नोत्यसंशयम् ॥
त्रिशूकलक्षणं पूर्वमेवोक्तम् ।
इति काम्यपूजाविधिः ।

अत्र पूजाप्रकारेषु गुरुलघुषु फलतारतम्यं बोध्यम् । अन्यथा लघूपायेन फलसिद्धौ सत्यां गुरूपायाननुष्ठानप्रसङ्गात् । तदाह जैमिनिः 'अन्यानर्थक्यात्' इति । अत्र भाष्यकारोऽपि प्राचीनं श्लोकमुदाजहार

अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत् ।
इष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरेत् ॥ इति ।

अथ

स्वर्गापवर्गयोः पुंसां रसायां भुवि सम्पदाम् ।
सर्वासामपि सिद्धीनां मूलं त्वच्चरणार्चनम् ॥

इति भागवते अपवर्गस्यापि पूजाफलत्वेनाभिधानात् तस्य च ब्रह्मावाप्तिरूपतया विशेषाभावात् कथमेतत् । उच्यते । ज्ञानद्वारा मोक्षप्रयोजके चित्तशुद्धिरूपे फले तारतम्यसम्भवान्नैव दोषः । भागवतादौ मोक्षहेतुत्वाभिधानं तु सत्त्वशुद्धिद्वारा बोध्यम् । उक्तं तत्रैव

यर्ह्यब्जनाभचरणैषणयोरुभक्त्या
चेतोमलानि विधमेत् गुणकर्मजानि ।

१ पू० मी० अ० १ पा० २ सू० ४ ।

तस्मिन् विशुद्ध उपलभ्यत आत्मतत्त्वं
साक्षाद्यथाऽमलदृशोः सवितुः प्रकाशः ॥ इति ।

सत्त्वशुद्धावपि तारतम्यं प्रतियोगिपापतारतम्यात् बोध्यम्। स्वर्गाद्युद्देशेन क्रियमाणायां पूजायां तु फलतारतम्यं स्पष्टमेव। तथाच पारमर्षं सूत्रं 'फलस्य कर्मनिष्पत्तेः तेषां लोकवत् परिमाणतः फलविशेषः स्यात्' इति। अत्रैव वार्त्तिककृतां श्लोकः

कर्मणामल्पमहतां फलानां च स्वगोचरे ।
विभागस्थानसामान्यादविशेषेऽपि चोदिते ॥
इति सर्वमनवद्यम् ।

अथ द्वात्रिंशदपराधाः ।

वाराहे,
धरण्युवाच ।
देव पूजापराधास्ते द्वात्रिंशत्परिकीर्तिताः ।
कर्मणा केन शुध्यन्ति अपराधस्य कारिणः ॥
तन्ममाचक्ष्व तत्त्वेन मम प्रीत्या च माधव ।

वाराह उवाच ।

राजान्नं तु न भोक्तव्यं शुद्धैर्भागवतैः शुभे ।
यद्यप्येष ममांशेन राजा राज्ये प्रवर्त्तते ॥
राजसं तामसं वापि कर्म कुर्वन् सुदारुणम् ॥
अनेन गर्हितं देवि राजान्नं हि वसुन्धरे ।
धर्मसंस्थापनार्थाय तत्तु मे न हि रोचते ॥

तत्तु तदन्नं तु। मे मम न रोचते। किमर्थं धर्मसंस्थापनार्थम्। अन्यथा धर्महानिः स्यात्। *राजान्नभोजननिषेधे प्रतिप्रसवमाह—

२ पू० मी० अ० १ पा० २ सू० १७ ।

* राजान्नभोजिनः प्रायश्चित्तं तत्रैवोक्तम्—

वराहदेवः,

यथा राज्ञस्तु भोक्तव्यं शुभैर्भागवतैः शुभे ।
स्थापयित्वा तु मां देवि विधिदृष्टेन कर्मणा ॥
धनधान्यसमृद्धानि दत्त्वा भागवतेषु च ।

समृद्धानि धनधान्यानीत्यर्थः ।

सिद्धं भागवतैश्चान्नं मम प्रापणशेषजम् ।
भुञ्जानस्तु वरारोहे न स पापेन लिप्यते ॥

प्रापणं नैवेद्यम् । [ १ ]

दन्तकाष्ठमखादित्वा यो हि मामुपसर्पति ।
सर्वकालकृतं कर्म दिनेनैकेन नश्यति ॥

सर्वकालकृतं कर्म कथं नश्यतीति प्रश्ने उत्तरम्—

मनुष्यः किल्बिषी भद्रे कफपित्तसमन्वितः ।
पूयशोणितसंपूर्णो दुर्गन्धं मुखमस्य तत् ॥
न सहे दूषितं देवि दन्तकाष्ठमभक्षयत् ।

न सहे न क्षमामि । अभक्षयदिति दन्तकाष्ठभक्षणविहित-मुखप्रक्षालनोपलक्षणम् । विहितदिने दन्तधावनाकरणे दोषः । एवं ब्रह्मचारिणो दन्तधावनाकरणेनापराधः । अत्र प्राय-श्चित्तमाह—

आकाशशयनं कृत्वा दिनानि द्वे च पञ्च च ।
अभुक्तदन्तकाष्ठश्च एवं शुध्यति मानवः ॥

आकाशे अनावृतदेशे शयनम् । द्वे च पञ्च चेति सप्तदिनानि । अत्र व्रतत्वाद्व्रतधर्माः कर्त्तव्याः । एवमुत्तरतो बोध्यम् [ २ ]

---

एकं चान्द्रायणं कृत्वा तप्तकृच्छ्रं च पुष्कलम् ।
कुर्यात्सान्तपनं चैकं शीघ्रं मुच्यन्ति किल्बिषात् ॥
न तस्य चापराधोऽस्ति वसुधे वै वचो मम । इति ।

गत्वा तु मैथुनं तत्र नस्नातो मामुपस्पृशेत् ।
रेतः पिबति वर्षाणां सहस्राणि चतुर्दश ॥

अत्र मैथुनमृतुकालीनम् । तत्रैव स्नानप्रसक्तेः। तदपि पुंसो न स्त्रियाः । तदाहुः

शयनादुत्थिता नारी शुचिः स्यादशुचिः पुमान् ।

मैथुनानन्तरं शौचाचमने बोध्ये । मैथुनमात्रे स्नानाकरणे दोष इत्यन्ये । प्रायश्चित्तमाह—

यावकेन त्र्यहं भुक्त्वा पिण्याकेन पुनस्त्र्यहम् ।
वायुभक्षो दिनं त्वेकं ततो मुच्येत किल्विषात् ॥

पिण्याकस्तिलकल्को न तु खालिस्तद्भक्षणानिषेधात् [ ३ ]

दृष्ट्वा तु मृतकं भद्रे नरं पञ्चत्वमागतम् ।
मम शास्त्रं बहिष्कृत्वा अस्माकं यः प्रपद्यते ॥
पितरस्तस्य सुश्रोणि आत्मा चैव पितामहाः ।
श्मशाने जम्बुका भूत्वा भक्षयन्ति शवांस्तथा ॥

अत्राप्यस्नात्वेत्यनुषज्यते । मम शास्त्रं पञ्चरात्रादि । बहिष्कृत्वा तदुक्तदृष्टशवास्नातविष्णूपसर्पणनिषेधास्वीकारेणोल्लङ्घ्येत्यर्थः । अत्र प्रायश्चित्तमाह—

एकाहारो दिनान् सप्त त्रिरात्रं वा उपोषितः ।
पञ्चगव्यं ततः पीत्वा शीघ्रं मुच्येत किल्विषात् ॥
शवे दृष्टेऽपराधस्य एष ते कथितो विधिः ।

अत्र वाशब्दात् कृतसप्तदिनैकाहारस्य परदिने पञ्चगव्यपानम्, कृतत्रिरात्रोपवासस्य परदिने पञ्चगव्यपानमिति प्रायश्चित्तयोर्विकल्पः । क्वचित् पुराणपुस्तके चकारदर्शनात् समुच्चयो वा इति [ ४ ]

नारीं रजस्वलां स्पृष्ट्वा यो मां स्पृशति निर्भयः ।

रागमोहसमायुक्तः कामेन च वशीकृतः ॥
वर्षाणां च सहस्रैकं रजः पिबति निर्घृणः।
अन्धः सञ्जायते देवि दरिद्रो मूर्ख एव च ॥

अत्र रजस्वलां स्पृष्ट्वा अस्नात्वेति बोध्यम्।

प्रायश्चित्तमाह—

तपः कृत्वा त्रिरात्रं तु आकाशशयनं तथा।
मुच्यते किल्विषाद्देवि आचारेण बहिष्कृतः ॥

तन्निमित्तस्नानादिरहितः प्रायश्चित्तं कृत्वा मुच्यते इत्यर्थः। त्रिरात्रं त्रिरात्रोपवासम्। आकाशशयनं तिष्ठेत्। [ ५ ]

स्पृष्ट्वा तु मृतकं भूमि मम क्षेत्रेषु तिष्ठति।

स्पृष्ट्वा स्पर्शानन्तरमकृतघृतप्राशनादिशुद्धिरित्यर्थः। क्षेत्रावस्थानं भगवत्परिचर्योपलक्षणम्। अत एव

संस्पृष्ट्वा मृतकं चैव नमस्कारः कृतो बुधैः।

इति अपराधगणनायामुक्तम्।

शतं वर्षसहस्राणि गर्भेषु परिवर्त्तते।
दशवर्षसहस्राणि चाण्डालो जायते पुनः ॥
अन्धः शतसहस्राणि मण्डूकश्च शतं समाः।
मक्षिका त्रीणि वर्षाणि टिट्टिभैकादशं समाः ॥
हंसो वै सप्त चान्यानि कृकलासो भवेत्समाः।
अश्वो वर्षशतं चैव खरोष्ट्रौ त्रिंशकं भवेत् ॥
चतुर्विंशो बलीवर्दः श्वा च द्वादशवार्षिकः।
मार्जारो नव वर्षाणि वानरो नव पञ्च च ॥

प्रायश्चित्तमाह—

स्पृष्ट्वा तु मृतकं भूमि मम कर्मपरायणः।
एकाहारस्ततस्तिष्ठेद्दिनानि दश पञ्च च ॥

तत एवं विधिं कृत्वा पञ्चगव्यं तु प्राशयेत् ।
शुद्ध एव विशुद्धात्मा कर्मणा न च लिप्यते ॥
यथाविधि पञ्चगव्यं कृत्वा षोडशेऽह्नि पिबेदित्यर्थः । [६]
स्पृशन्मामत्र यो भूमि वातकर्म प्रमुञ्चति ।
वायुं पुरीषसंयुक्तं स पिबेत्तु न संशयः ॥
स्पृशन्निति पूजादेरप्युपलक्षणम् ।
ममार्चनविधौ काले वायुं मुञ्चति निर्घृणः ।
इत्यपराधगणनायामुक्तत्वात् । वातकर्म अधोवायुसमुत्सर्गः।
तथा,
मक्षिका पञ्चवर्षाणि सप्तवर्षाणि मूषकः ।
श्वा चैव त्रीणि वर्षाणि नव वर्षाणि कच्छपः ॥
प्रायश्चित्तमाह—
दिनत्रयं यावकेन कणैश्चापि दिनत्रयम् ।
एवं कृत्वा तु मेधावी प्रायश्चित्तमपोहति ॥
सर्वसङ्गान् परित्यज्य मम लोकं च गच्छति ।
अपोहति पापमिति शेषः । [ ७ ]
पुरीषं च प्रमुञ्चति मम कर्म समाचरन् ।
दिव्यवर्षसहस्राणि रौरवे नरके स्थितः ॥
पुरीषं भक्षयेत्तत्र अपराधे हि नित्यशः ।
पुरीषमिति तुल्यतया मूत्ररेतसोरप्युपलक्षणम् ।
कर्म पूजादि ।
ममैवार्चनकाले तु पुरीषं यस्तु मुञ्चति ।
इत्यपराधगणनायामभिधानात् ।
प्रायश्चित्तमाह—
एकं जलेशयं कृत्वा एकमाकाशशायिनम् ।

कृत्वा मत्प्रापणं चैव अपराधात् प्रमुच्यते ॥

एकं दिनं जलेशयमात्मानं कृत्वा, अपरं दिनमनावृतदेशशायिनं कृत्वा तत्परदिने विष्णवे प्रापणं दद्यात् । जलशयनदिने मूत्रोत्सर्गादि बहिः कुर्यात् । मूत्ररेतसोरुत्सर्गेऽपि एतदेव प्रायश्चित्तम् । [ ८ ]

त्यक्त्वा तु मम शास्त्राणि वाक्यमन्यत् प्रभाषते ।

मुक्त्वा अनादृत्य । मम शास्त्राणि पूजायां विहितमन्त्रस्तवादीनि । अन्यद्वाक्यं भाषते पूजाकाल इति शेषः । तदुक्तमपराधगणनायाम्—

ममैवार्चनकाले तु यस्तु वाक्यं प्रभाषते ।
नवमश्चापराधोऽयं न मुञ्चामि वसुन्धरे ॥ इति ।

कूर्मो भवति सुश्रोणि जातीर्वै सप्त सप्त च ।

जातीर्जन्मानि । प्रायश्चित्तम्—

आकाशशयनं कृत्वा दिनानि दश पञ्च च ।
मुच्यते किल्बिषाद्भूमि एवमेतन्न संशयः ॥ [ ९ ]

भूषितो नीलवस्त्रेण यस्तु मां प्रतिपद्यते ।
शतानि पञ्च वर्षाणां कृमिर्भूत्वा स तिष्ठति ॥

नीलं नीलीरञ्जितम् । प्रायश्चित्तम्—

फलचान्द्रायणं कृत्वा विधिदृष्टेन कर्मणा ।
मुच्यते किल्बिषाद्भूमि एवमेतन्न संशयः ॥

फलचान्द्रायणं फलमात्रभक्षणसाध्यं चान्द्रायणम् । [ १० ]

अविधानेन संस्पृश्य यस्तु मामुपसर्पति ।

अविधानेन आचमनविधानव्यतिरेकेण । संस्पृश्य आचम्य ।

स मूर्खः पापकर्मा वै मम विप्रियकारकः ।
तेन दत्तं वरारोहे गन्धं माल्यं सुगन्ध्यपि ॥

प्रापणं च न गृह्णामि मृष्टं चापि कदाचन ।

प्रापणं नैवेद्यम् । मृष्टं शुद्धम् ।

धरण्युवाच

उपस्पर्शसमाचारं रहस्यं वक्तुमर्हसि ।

केन कर्मविभागेन शुद्धा भागवता भुवि ॥

उपस्पृश्योपसर्पन्ति तत्र कर्मपरायणाः ।

वराह उवाच

विमुच्य सर्वकर्माणि यस्तु मामुपसर्पति ।

तस्य वै शृणु सुश्रोणि उपस्पर्शस्य या क्रिया ॥

भूत्वा पूर्वमुखस्तत्र पादौ प्रक्षाल्य चाम्बुना ।

अत्र पूर्वाभिमुखत्वस्य सर्वाचमनाङ्गस्योपादानं वैकल्पिकदिगन्तरनिवृत्त्यर्थम् ।

उपस्पृश्य यथान्यायं तिस्रो वै गृह्यमृत्तिकाः ।

ततः प्रक्षालयेद्धस्तौ जलेन तदनन्तरम् ॥

सप्तकोशं ततः कृत्वा मुखं प्रक्षाल्ययेत्ततः ।

कोशः प्रसृतिः ।

पादमेकैकमेकत्र पञ्चपञ्च ददात्युत ॥

कोशानि संयतस्तत्र यदीच्छेत मम प्रियम् ।

पञ्च कोशान् दत्त्वा एकं पादं प्रक्षालयेत्, तथा अपरम् ।

तिस्रः कोश्यः पिबेत्तत्र सर्वकायाविशोधनाः ।

कोश्य इत्यल्पार्थे स्त्रीत्वम् । तेन हृद्गामित्त्वोपयुक्तत्वं सूचितम् । तिस्र इति द्विजपरं, स्त्रीशूद्रयोः सकृत् तयोरप्यत्र तिस्रो वदन्ति । इदं पानमाचमनरूपत्वादनुक्तजलब्राह्मतीर्थादिसर्वगुणाविशिष्टं बोध्यम् ।

कराभ्यां मुखमुन्मृज्य सर्वमिन्द्रियनिग्रहम् ।

प्राणायामं ततः कृत्वा मम चित्तपरायणः ॥
कर्मणा विधिदृष्टेन सर्वसंसारमोक्षणम् ।

कराभ्यां सजलाभ्यां मुखमुन्मार्जयेत् । सर्वेन्द्रियनिग्रहपूर्वकं प्राणायामं कुर्यात् । इन्द्रियनिग्रहश्चित्तस्थैर्यार्थम् । तदुक्तं 'मम चित्तपरायणः' मच्चित्त इत्यर्थः । प्राणायामश्च सन्ध्याविहितप्रकारेण द्विजानाम् । मन्त्रशून्योऽन्येषाम् । योगशास्त्रे ऽमन्त्रकप्राणायामस्यापि विहितत्वात् ।

वारत्रयं स्पृशेत्तत्र शिरो ब्रह्मात्र संस्थितः ।
त्रींस्तु वारान् पुनस्तत्र उभे ते कर्णनासिके ॥
स्पृशेत्तु निष्कलं तत्र सोमो यत्र व्यवस्थितः ॥

स्पर्शश्च सजलहस्तेन निष्कलः । हृदयस्पर्शोऽपि त्रिवारं साहचर्यादित्याहुः । अत्र शिरःस्पर्शादिविधानाच्चक्षुःस्पर्शादेर्निवृत्तिः । यथा आज्यभागविधावाघारस्य ।

वारत्रयं क्षिपेद्भूमौ जलस्य प्रसृतीस्तथा ।
एवं भक्तेन कर्तव्यं ममाभिगमनेषु च ॥
उपस्पृशेत्सदाचारो यदीच्छेत मम प्रियम् ।
एवं हि कुर्वतस्तस्य मम धर्मव्यवस्थितिम् ॥
अपराधो न विद्येत एवं भूमि न संशयः ।

अत्रायमाचमनविधिः । प्राङ्मुखः पादौ प्रक्षाल्य यथाविध्याचम्य तिसृभिर्मृद्भिः करौ प्रक्षाल्य सप्तभिः प्रसृतिभिः मुखं पञ्चभिः प्रत्येकं पादौ च प्रक्षाल्योक्ताचमनरीत्या प्रसृतित्रयं जलं पिबेत् । स्त्री शूद्रो वा सकृत् । ततः करं प्रक्षाल्य कराभ्यां मुखमुन्मृज्य यथोक्तं प्राणायामं विष्णुचिन्तनपरः कुर्यात् । स्त्रीशूद्रयोरमन्त्रकः प्राणायामः । शिरः कर्णौ नासिके च प्रत्येकं त्रिः स्पृशेत् । हृदयं च त्रिः स्पृशेत् । सर्वः स्पर्शः सजलहस्तेन कार्यः ।

ततो भूमौ जलप्रसृतित्रयं त्यजेत् ।

*धरण्युवाच*

उपस्पृश्य विधानेन यस्तु कर्माणि नाप्नुयात् ।
तापनं शोधनं चैव तद्भवान् वक्तुमर्हति ॥

उक्तविधिना उपस्पृश्य कर्माणि विष्णुपूजोपसर्पणादीनि नाप्नुयात् न कुर्यात् तादृशाचमनं विना कुर्यादित्यर्थः । तस्य तापनमनाचमनापराधफलम् । शोधनं प्रायश्चित्तम् ।

वराहउवाच

शृणु तत्त्वेन मे भूमि इदं गुह्यमनिन्दिते ।
यां गतिं प्रतिपद्येत मम कर्मबहिष्कृतः ॥
व्यभिचारं नरः कृत्वा यस्तु मामुपसर्पति ।
दशवर्षसहस्राणि दशवर्षशतानि च ॥
कृमिर्भूत्वा यथान्यायं तिष्ठते पुरुषाधमः ॥

व्यभिचारमाज्ञालङ्घनं उक्ताचमनाभावमिति यावत् । व्यभिचारोऽत्र तत्पूजामध्ये देवतान्तरपूजनमिति केचित् ।

प्रायश्चित्तं प्रवक्ष्यामि तस्य पापस्य शोधनम् ।
महासान्तपनं कृत्वा ततः कृच्छ्रं च पुष्कलम् ॥
ब्राह्मणाः क्षत्रिया वैश्या मम ये च मते स्थिताः ।
अनेन विधिना कृत्वा प्रायश्चित्तं यशस्विनि ॥
किल्विषात्तु प्रमुक्तास्ते गच्छन्ति परमां गतिम् । [ ११ ]
यस्तु क्रोधसमायुक्तो मम कर्मपरायणः ।
स्पृशेत्तु मम गात्राणि कृत्वा चित्तं चलाचलम् ॥
न चाहं रागमिच्छामि न क्रुद्धं च यशस्विनि ।
इच्छामि शान्तं दान्तं च भूमि भागवतं शुचिम् ॥
जितेन्द्रियसमायुक्तं लाभालाभविवर्जितम् ।

अहङ्कारविनिर्मुक्तं कर्मण्यभिरतं मम ॥

क्रोधयुक्तस्य देवपूजास्पर्शादिरपराधः । कर्ममध्ये तु दैवात् क्रोधोत्पत्तौ यावत् क्रोधस्तिष्ठेत् तावत् कर्म न कुर्वीत। क्रोधनिवृत्तौ जलस्पर्शादि कृत्वा कुर्यादेवं नापराधः । 'न चाहं रागमिति' राग उत्कटेच्छा सापि मैथुनविषया अन्यायपरधनग्रहणविषया कामलोभशब्दवाच्या लक्षणया तद्वन्तमित्यर्थः । एवं च कामलोभयोरुत्पत्तिरप्यपराधः । अत एव जितेन्द्रियसमायुक्तं लाभालाभविवर्जितमित्याह ।

अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वरानने ।
योनिदोषांस्तु लभते क्रुद्धो भागवतः शुचिः ॥
पल्ली जातो वर्षशतं श्येनो वर्षशतं पुनः ।
मण्डूकस्त्रिंशद्वर्षाणि यातुधानः पुनर्दश ॥
ऊर्णनाभिस्त्रिवर्षाणि रेतोभक्षस्तु जायते ।
अन्धो जायेत सुश्रोणि पञ्च सप्त तथा नव ॥
गृध्रो द्वात्रिंशद्वर्षाणि चक्रवाको दशैव तु ।
शैवालभक्षकश्चैवमाकाशशयनं तथा ॥
शैवालभक्षक इति चक्रवाकविशेषणम् ।
ब्राह्मणो जायते भूमि मण्डूकश्च पथि स्थितः ॥
आत्मकर्मापराधेन प्राप्तः संसारसागरम् ।
ततो धरणीप्रश्नानन्तरम्

ततो मां भाषते ब्रह्मन् विष्णुर्मायाकरण्डकः ।
क्रुद्धो भागवतो ब्रह्मन् येन शुद्ध्यति किल्विषात् ॥
कृत्वा तेन व्रतं चैव मम कर्मपरायणः ।
षष्ठकालेन भुञ्जीत गृह्णन् भिक्षामनिन्दिते ॥
अष्टौ भिक्षा यथान्यायं क्रुद्धो भगवतां गृहे ।

यत्र तेन विधानेन ब्रह्मन् कर्माणि कारयेत् ॥
मुच्यते किल्विषात्तत्र एवमाह जनार्दनः ।

व्रतं दिनद्वयोपवासरूपं षष्ठकाले भोजनविधानात् । भिक्षानियममाह अष्टाविति। भगवतां वैष्णवानां गृहे भिक्षामादाय भुञ्जीतेत्यर्थः । भिक्षा ग्रासामिति रत्नाकरः । [ १२ ]

अकर्मण्येन पुष्पेण यो मामर्चयते नरः ।
पतनं तस्य वक्ष्यामि तच्छृणुष्व वसुन्धरे ॥
अकर्मण्येन पुष्पेण विष्णुपूजायां निषिद्धेन ।
नाहं तत्प्रतिगृह्णामि न चैवैते मम प्रियाः ।
मूर्खैर्भागवतैर्दत्तं मम विप्रियकारिभिः ॥
पतन्ति रौरवे घोरे नरके तदनन्तरम् ॥
प्रायश्चित्तं महाभागे येन शुद्ध्यन्ति मानवाः ॥
एकाहारं ततः कृत्वा मासमेकं वसुन्धरे ।
वीरासनविधिं चैव कारयेत्सप्त वासरान ॥
चतुर्थभक्तमेकेन वाऽश्नीत घृतपायसम् ।
दिनत्रयं यावकेन वायुभक्षो दिनत्रयम् ॥
यस्त्वनेन विधानेन देवि कर्माणि कारयेत् ।
सर्वपापविनिर्मुक्तो मम लोकं स गच्छति । [ १३ ]
रक्तवस्त्रेण संयुक्तो यो हि मामुपसर्पति ।

---

१ अत्र मुद्रितवराहपुराणपुस्तके—
अज्ञानस्य च दोषेण दुःखान्यनुभवन्ति च ।
वानरो दशवर्षाणि मार्जारश्च त्रयोदश ॥
मूकः पञ्च च वर्षाणि बलीवर्दश्च द्वादश ।
छागश्चैवाष्टवर्षाणि मासं वै ग्रामकुक्कुटः ॥
त्रीणि वर्षाणि महिषो भवत्येव न संशयः । इत्यधिकमपि वर्तते ।

तस्यापि शृणु सुश्रोणि कर्म संसारमोक्षणम् ॥
रजस्वलासु नारीषु रजो यत्तु प्रवर्त्तते।
तेनासौ रजसा स्पृष्टः कर्मदोषेण जायते ॥
वर्षाणि दश पञ्चैव तिष्ठते तत्र निश्चयः।
रजो भूत्वा महाभागे रक्तवस्त्रपरायणः ॥

जायते तत्र कृमिरित्यर्थः।

रक्तजाः कृमयः स्त्रीणां मृदुमध्यादिशक्तयः।
जन्मवर्त्मनि कण्डूतिं जनयन्ति तथाविधाम् ॥

इतिवचनात् तत्र कृमिजन्मसम्भवात्। रजो भूत्वा रजोजन्यो भूत्वा। अत्र रक्तवस्त्रं कौसुम्भम्।

यस्तु रक्तेन वस्त्रेण कौसुम्भेनोपसर्पति।

इति अपराधगणनायामुक्तत्वात्। तेन गैरिकरक्तादौ न दोषः। प्रायश्चित्तम्—

एकाहारं ततः कृत्वा दिनानि दशपञ्च च।
वायुभक्षो दिनांस्त्रीणि दिनमेकं जलाशनः ॥
एवं स मुच्यते भूमि मम विप्रियकारकः। [ १४ ]
यस्तु मामन्धकारे तु विना दीपेन सुन्दरि।
स्पृशते च विना मन्त्रैरवशो रागमोहितः ॥
पतनं तस्य वक्ष्यामि तच्छृणुष्व वसुन्धरे।
तेन क्लेशं समासाद्य क्लिश्यते हि नराधमः ॥
अन्धो भूत्वा महाभागे जन्मैकं तु स तिष्ठति।
सर्वाशी सर्वभक्षश्च मानवश्चैव जायते ॥
प्रायश्चित्तं प्रवक्ष्यामि अन्धकारेषु यः स्पृशेत्।
अक्ष्णोः पट्टं बन्धयित्वा दिनानि दश पञ्च च ॥
एकाहारस्ततो भूत्वा तिष्ठेच्चैव समाहितः।

यस्य कस्य च मासस्य एकां च द्वादशीं पुनः ॥
एकाहं च ततः कृत्वा तिष्ठेच्चैव जलाशयः ।
ततो यवागूं भुञ्जीत गोमूत्रेण समायुताम् ॥
एवं निस्तरते देवि जन्मसंसारसागरात् ।

अक्षिणी पट्टेन बन्धयित्वा दशपञ्च दिनानि एकाहारस्तिष्ठेत् । ततः कस्याश्चित् द्वादश्यां एकाहारं कृत्वा जले शयनं कुर्यात् । ततो यवागूं गोमूत्रसहितां भुञ्जीतेत्यर्थः । [-१५ ]

यस्तु कृष्णेन वस्त्रेण मम कर्मपरायणः ।
भूमि कर्माणि कुर्वीत तस्य त्वं पतनं शृणु ॥
घुणो वै पञ्च वर्षाणि काष्ठभक्षश्च जायते ।
मशकस्त्रीणि वर्षाणि दंशकस्त्रीणि पञ्च च ॥
मत्स्यो द्वादशवर्षाणि काको वर्षत्रयं तथा ।
पञ्चवर्षाणि नकुलो मार्जारो नव पञ्च च ॥
ततो ममापराधेन स्थितः पारावतो भुवि ।
तिष्ठते मम पार्श्वे तु यत्रैवाहं प्रतिष्ठितः ॥
प्रायश्चित्तं प्रवक्ष्यामि तस्य संसारमोक्षणम् ।
सप्ताहं यावकं भुक्त्वा त्रिरात्रं सप्त पिण्डिकाः ॥
त्रीणि पिण्डास्त्रिवारं तु एवं मुच्येत किल्बिषात् ।

पिण्डिका ग्रासः।सप्ताहं यावकाहारः। दिनत्रयं सप्तग्रासाहारः। सप्त पिण्डिका इत्यत्र शक्तुपिण्डिका इति क्वचित् पाठः। [१६]

वाससाऽनवधौतेन यो मे कर्माणि कारयेत् ।
शुचिर्भागवतो भूत्वा मम कर्मानुसारतः ॥
तस्य दोषं प्रवक्ष्यामि अपराधं च सुन्दरि ।
पतितं येन संसारे वाससोच्छिष्टकारिणा ॥

वाससा करणभूतेनापवित्रकारिणेत्यर्थः ।

अत्र वायसोद्धूतवस्त्रेणेति, सोऽस्मिन् पतति संसारे वायसोच्छिष्टकारक इति क्वचित्पाठः । तत्रापि काकोद्धूतत्वमपवित्रत्वोपलक्षणमेव ।

अधौतेन तु वस्त्रेण यस्तु मामुपकल्पयेत् ।

इत्यपराधगणनायामभिधानात् ।

देवि भूत्वा दुर्गतस्तु जन्म चैकं न संशयः ।
उष्ट्रश्चैकं भवेज्जन्म जन्म चैकं खरस्तथा ॥
गोमायुरेकं जन्मापि जन्म चैकं हयस्तथा ।
सारङ्गस्त्वेकजन्मा वै मृगो भवति चैकतः ॥
सप्तजन्मोत्तरं भूमि पश्चाद्भवति मानुषः ।
मद्भक्तश्च गुणज्ञश्च मम कर्मपरायणः ॥
निरापराधो दक्षश्च अहङ्कारविवर्जितः ।
प्रायश्चित्तं प्रवक्ष्यामि मम भक्तसुखावहम् ॥
यावकेन त्र्यहं तिष्ठेत् पिण्याकेन पुनस्त्र्यहम् ।
कणभक्षस्त्र्यहं च स्यात्फलभक्षस्तथैव च ।
शाकभक्षस्त्र्यहं तिष्ठेत्पयोभक्षो दिनत्रयम् ॥
दध्याहारस्त्र्यहं च स्यात् स्नानं कृत्वा दृढव्रतः ।
दिनैकविंशति ह्येवं कृते वै शुभलक्षणे ॥
अपराधं न विन्देत मम लोकं च गच्छति । [ १७ ]
श्वानोच्छिष्टं च यो दद्यात् मम कर्मपरायणः ।

श्वानः कुक्कुरः । तदुच्छिष्टस्य नैवेद्यादिरूपेण दानमपराधः ।

पातं तस्य प्रवक्ष्यामि संसारस्य महाद्भुतम् ॥
श्वानो वै सप्त जन्मानि गोमायुः सप्त वै तथा ।
उलूकः सप्तवर्षाणि पश्चाज्जायेत मानवः ॥

---

१ वाससाऽनवधौतेनेत्यस्य स्थाने इदं पाठान्तरम् ।

विशुद्धात्मा श्रुतिज्ञश्च मद्भक्तश्चैव जायते ।
गृहे भागवतोत्कृष्टे अपराधविवर्जितः ॥
शृणु तत्त्वेन वसुधे प्रायश्चित्तं महौजसम् ।
मूलभक्षो दिनांस्त्रीणि फलभक्षो दिनत्रयम् ॥
दध्न्याहारो दिनांस्त्रीणि पायसेन दिनत्रयम् ।
वाय्वाहारो दिनांस्त्रीणि स्नानं कृत्वा दृढव्रतः ॥
एवं दिनान्येकविंशं कृत्वा वै शुभलक्षणम् ॥
अपराधं न विन्देत मम लोकं च गच्छति । [ १८ ]
भुक्त्वा वाराहमांसं तु यस्तु मामुपसर्पति ।
पतनं तस्य वक्ष्यामि यथा भवति सुन्दरि ।
वराहो दशवर्षाणि भूत्वा चरति वै वने ॥
व्याधो भूत्वा महाभागे समास्तिष्ठति सप्ततिः ।
कृमिर्भूत्वा समाः सप्त तिष्ठते तस्य पुष्करे ॥
तस्य शूकरस्य । पुष्करे घोणाप्रदेशे ।
अथो वै मूषिको भूत्वा वर्षाणि च चतुर्दश ।
एकोनविंशवर्षाणि यातुधानश्च जायते ॥
शल्यकश्चाष्टवर्षाणि जायते स वनेचरः ।
व्याघ्रस्त्रिंशच्च वर्षाणि जायते पिशिताशनः ॥
एवं संसारितां गत्वा वराहामिषभक्षकः ।
जायते विपुले सिद्धे कुले भागवतस्तथा ॥
प्रायश्चित्तम्—
गोमयेन दिनाः सप्त कणाहारेण सप्त वै ॥
पानीयं च ततो भुक्त्वा तिष्ठेत्सप्त दिनानि वै ॥
अक्षारलवणैः सप्त सक्तुभिश्च त्रयं तथा ।
तिलभक्षस्तु सप्तैव सप्त पाषाणभक्षणः ॥

पयोभक्षस्तु सप्ताहं कारयेच्छुद्धिमात्मनः।
शान्तिदान्तिपरो भूत्वा अहङ्कारविवर्जितः॥
दिनान्येकोनपञ्चाशच्चरेत्कृच्छ्रं विशुद्धये।
विमुक्तः सर्वपापेभ्यो ज्ञानवान् विगतज्वरः॥
कृत्वा तु मम कर्माणि मम लोकाय गच्छति।
अक्षारलवणैरिति सक्तुभिरित्यस्य विशेषणम्।
तेनैकोनपञ्चाशद्भवन्ति। पाषाणः पाषाणाकारापिण्डिकाः।
कृच्छ्रं प्रकृतमेव व्रतम्। [ १९ ]
जालपादं भक्षयित्वा यस्तु मामुसर्प्पति।
जालपादा हंसादयः।
जालपादस्ततो भूत्वा वर्षाणि दश पञ्च च॥
कुम्भीरो दशवर्षाणि दशवर्षाणि कच्छपः।
तावद्भ्रमति संसारे मम चैवापराधतः॥
प्रायश्चित्तं प्रवक्ष्यामि जालपादस्य भक्षणात्।
यावकान्नस्त्र्यहं तिष्ठेत् जलाहारो दिनत्रयम्॥
अक्षारलवणं कृत्वा पुनस्तिष्ठेद्दिनत्रयम्।
दिनत्रयं पयोभक्षो दधिभक्षो दिनत्रयम्॥
एवं पञ्चदशाहानि प्रायश्चित्तं समाचरेत्। [ २० ]
स्पृष्ट्वा तु दीपकं भुक्त्वा यस्तु मामुपसर्पति।
अप्रक्षाल्यैव हस्तौ च मम कर्माणि कारयेत्॥
तस्यापराधाद्वै भूमि फलं प्राप्नोति मानवः।
जायते षष्टिवर्षाणि कुष्ठी गात्रपरिप्लुतः॥
चाण्डालस्य गृहे तस्मादेवमेतन्न संशयः।
प्रायश्चित्तम्—
यस्य कस्य च मासस्य शुक्लपक्षस्य द्वादशी।

चतुर्थकालमाहारं आकाशशयनं तथा ॥
कुर्यादिति शेषः ।
दीपं दत्त्वा ब्रह्मारोहे भवन्ति मनुजा भुवि ।

कस्यांचिच्छुक्लैकादश्यामुपोष्य रात्रौ भुञ्जीत दिनद्वये चानावृते देशे सुप्यात् । दीपं च भगवते दद्यात् । [ २१ ]

श्मशानं यो नरो गत्वाऽस्नातो मामुपसर्पति ।
जम्बूको जायते भूमि वर्षाणि नव पञ्च च ॥
गृध्रश्च नववर्षाणि जायत खचरस्तथा
चरतो मानुषं मांसं उभौ तौ गृध्रजम्बुकौ ॥
पिशाचो जायते तत्र वर्षाणि नवपञ्च च ।

प्रायाश्चित्तम्—

कृत्वा चतुर्थभक्षं तु कृत्वा तु दशपञ्च च ।
आकाशशयनं कुर्यादेकवासाः कुशास्तरे ॥
प्रभाते पञ्चगव्यं तु प्राशयेत्कर्मकारणात् ।
विमुक्तः सर्वपापेभ्यो विष्णुलोकं च गच्छति ॥

अत्र द्यहसाध्यचतुर्थभक्तसप्तकं कृत्वा पञ्चदशे दिने उपोष्य पञ्चगव्यं पिबेत् । पञ्चदशस्वपि उक्तदिनेषु एकवस्त्रः कुशास्तरे अनावृतदेशे सुप्यात् । रत्नाकरे तु कचिद्दिवसे चतुर्थभक्तं कृत्वा पञ्चदशादिनान्याकाशशयनं कुर्यादित्युक्तम् । [ २२ ]

पिण्याकं भक्षयित्वा तु यस्तु मामुपसर्पति ।
पिण्याकः खलिः ।
जम्बूको दशवर्षाणि वकश्चैव स मानवः ॥
जायते मानवस्तत्र मम कर्मपरायणः ।
यावकेन दिनैकं तु तक्रेण सह कारयेत् ॥
एकपिण्डाविमिश्रेण उदकेन तथापरम् ।

एवं ततो विधिं कृत्वा मम कर्मपरायणः ॥
रात्रौ वीरासनं कुर्यादाकाशे कायशोधनम् ।
आकाशशयनं कृत्वा प्रभाते तु समाहितः ॥
पञ्चगव्यं ततः पीत्वा शीघ्रं पापात् प्रमुच्यते ।

तक्रेण सह यावकाहारमेकादिने, एकग्रासमिश्रोदकपानं द्वितीयादिने, उभयतोऽपि रात्रौ अनावृतदेशे वीरासनं तच्च भित्त्याद्यालम्बनमन्तरेणोपवेशनम् । वीरासनस्य शयनशब्देनानुवादोऽशक्तौ शयनमपि दर्शयति । [ २३ ]

यो वै वराहमांसेन मम कुर्वीत प्रापणम् ।

प्रापणं नैवेद्यदानम् । त्यागे द्रव्यस्य कारणत्वं विवक्षित्वा तृतीया कृता ।

यावन्मात्राणि वाराहगात्रे रोमाणि सन्ति वै ।
तावद्वर्षसहस्राणि नरके पततेऽशुभे ॥
अन्यच्च ते प्रवक्ष्यामि तच्छृणुष्व वसुन्धरे ।
वाराहेण तु मांसेन यस्तु कुर्वीत प्रापणम् ॥

अत्र सहार्थे तृतीया ।

यावन्ति तत्र सिक्थानि भाजने संस्थितानि वै ।
तावद्वर्षसहस्राणि शौकरीं योनिमाप्नुयात् ॥

तत्र वराहमांसयुक्तभाजने । प्रायश्चित्तम्—

फलाहारस्तु सप्ताहं सप्त मूलाशनं तथा ।
दिनानि सप्त तिष्ठेत तथा वै पायसेन च ॥
तक्रेण सप्तदिवसं सप्त यावकभोजनम् ।
दध्याहारो भवेत्सप्त अहङ्कारविवर्जितः ॥
यस्त्वेवं कुरुते भूमि मयोक्तं कर्म संसदि ।
प्रायश्चित्तं महाभागे मम लोकं स गच्छति ॥ [ २४ ]

मद्यपस्तु वरारोहे प्रविशेद्भवनं मम ।
दशवर्षसहस्राणि दरिद्रो जायते पुनः ॥
मद्यमत्र सुरा । मरणान्तप्रायश्चित्तदर्शनात् ।
सुरां पीत्वापि यो मां तु कदाचिदुपसर्पति ।
इति अपराधगणनायामुक्तत्वाच्च ।
यस्तु भागवतो भूत्वा कामरागेण मोहितः ।
दीक्षितोऽपि पिबेन्मद्यं प्रायश्चित्तं न विद्यते ॥
व्रतरूपमिति शेषः । एवं च कामतो व्रतरूपं द्वादशवार्षिकादि सूचितम् ।
अग्निवर्णां सुरां पीत्वा मुच्यते किल्बिषात्ततः ।
पानं चेदं मरणफलकम् । तत्प्रकारः प्रायश्चित्तादावनुसन्धेयः । [ २५ ]
यः कुसुम्भं नाम शाकं भक्षयित्वोपसर्पति ।
दशवर्षसहस्राणि दरिद्रो जायते हि सः ॥
प्रायश्चित्तम् —
ततश्चान्द्रायणं कृत्वा एवमेव वसुन्धरे ।
भोक्ता कुसुम्भशाकस्य शीघ्रं मुच्येत किल्बिषात् । [ २६ ]
पारक्येणावधूतेन यस्तु मामुपसर्पति ।
करोति मम कर्माणि स्पृशते मां तथा स्थितः ॥
पारक्येण परकीयेण । अवधूतेन अशुचिना। अवधूतेनेतिदृष्टान्तार्थं तस्य पूर्वमुक्तत्वात् ।
परप्रावरणेनैव यस्तु मामुपसर्पति ।
इत्यपराधगणनायामुक्तत्वात् ।
मृगो जायेत सुश्रोणि वर्षाणि दश सप्त च ॥
हीनपादेन जायेत चैकं जन्म वसुन्धरे ।

मूर्खश्च क्रोधनश्चैव मम भक्तश्च जन्यते ॥

प्रायश्चित्तम्—

अष्टभक्तं ततः कृत्वा मम कर्मपरायणः ।
माघमासस्य सुश्रोणि शुक्लपक्षे तु द्वादशीम् ॥
तिष्ठेज्जलाशये तत्र क्षान्तो दान्तो जितेन्द्रियः ।
अनन्यमानसो भूत्वा मम कर्मपरायणः ।
प्रभातायां तु शर्वर्यामुदिते तु दिवाकरे ॥
पञ्चगव्यं ततः पीत्वा मम कर्माणि कारयेत् ।
यस्त्वनेन विधानेन प्रायश्चित्तं समाचरेत् ॥
सर्वपापविनिर्मुक्तो मम लोकाय गच्छति ।

अष्टभक्तो दिनत्रयमुपोष्य चतुर्थदिने रात्रौ भोजनवान् । ग्रासाष्टकभोजनवानिति कश्चित् । अत्रोपवासत्रयं कृत्वा द्वादश्यां नक्तं भुक्त्वा रात्रौ जलशायी परेऽहनि प्रातः पञ्चगव्यं पिबेत् [ २७ ]

अदत्त्वा यो नवान्नानि मम कर्मपरायणः ।
भुङ्क्ते भूमि न चान्नानि परदत्तानि कानि चित् ॥
पितरस्तस्य नाश्नन्ति वर्षाणि दश पञ्च च ।

प्रायश्चित्तम् —

उपवासं त्रिरात्रं तु एकरात्रं तथैव च ।
आकाशशयनं कृत्वा चतुर्थेऽहनि शुद्ध्यति ॥
एवं ततो विधिं कृत्वा उदिते च दिवाकरे ॥
पञ्चगव्यं ततः पीत्वा शीघ्रं मुच्येत किल्बिषात् [ २८ ]
अदत्त्वा गन्धमाल्यानि धूपं यो मे प्रयच्छति ।
मृतोऽसौ जायते भूमे यातुधानो न संशयः ॥

अत्र माल्यपदं पुष्पपरम् ।

गन्धपुष्पाण्यदत्त्वा तु यस्तु धूप प्रयच्छात ।

इत्यपराधगणनायामुक्तत्वात् । तदनुवादेनात्र प्रायश्चित्तविधानात् । प्रायश्चित्तम् —

यस्य कस्य च मासस्य शुक्लपक्षे तु द्वादशीम् ।
उपोष्य चाऽष्टभक्तेन आकाशशयनं स्वपेत् ॥
प्रभातायां तु शर्वर्यामुदिते च दिवाकरे ।
पञ्चगव्यं ततः पीत्वा शीघ्रं मुच्येत किल्बिषात् ॥

द्वादश्यां उपोष्य उपवासं कृत्वा, त्रयोदश्यां अष्टभक्तं अष्टग्रासाशनं कृत्वा आकाशशयनं च कृत्वा, प्रभाते पञ्चगव्यं पिबेदित्यर्थः । पूर्वदिने उपोष्य द्वादश्यामष्टग्रासाशनं कृत्वा आकाशशयनं कृत्वा त्रयोदश्यां पञ्चगव्यं पिबेदित्यन्ये [ २९ ]

उपानद्गूढपादस्तु मम स्थानं विशेत्तु यः ।
चर्मकारस्तु जायेत स वर्षाणि त्रयोदश ॥
ततो जन्मपरिभ्रष्टः शूकरो जायते नरः ।
शूकराच्च परिभ्रष्टः श्वानस्तत्रैव जायते ॥
ततः श्वानात्परिभ्रष्टो मनुष्यश्चैव जायते ।
मद्भक्तश्च विनीतश्च अपराधविवर्जितः ॥

प्रायश्चित्तम्—

यस्य कस्य च मासस्य शुक्लपक्षे च द्वादशीम् ।
आकाशशयनं कृत्वा शीघ्रं मुच्येत किल्बिषात् [ ३० ]

भेरीशब्दमकृत्वा तु यस्तु मां प्रतिबोधयेत् ।
बधिरो जायते भूमे एकं जन्म न संशयः ॥

अत्र भेरीपदं वाद्योपलक्षणम् ।

विना भेर्यादिशब्देन द्वारस्योद्घाटनं मम ।

इत्यपराधगणनायामुक्तत्वात् । तथाच शङ्खादिशब्दं कृत्वा

द्वारोद्घाटनेऽपि नापराधः । प्रायश्चित्तम्—

यस्य कस्य च मासस्य शुक्लपक्षे तु द्वादशीम् ।
आकाशशयनं कृत्वा शीघ्रं मुच्येत किल्बिषात् [ ३१ ]
प्रभूतमन्नं भुक्त्वा वै अजीर्णेन परिप्लुतः ।
उद्गारेण समायुक्तो यस्तु मामुपसर्पति ॥
जन्म चैकं भवेत् श्वा वै जन्म चैकं च वानरः ।
शृगालो जन्म चैकं च छागश्चैवैकजन्मनि ॥
एकजन्म भवेदन्धो मूषिकश्च पुनर्भवेत् ॥
भावितश्चैव संसारे जायते विपुले कुले ।
शुद्धो भागवतश्रेष्ठो ह्यपराधविवर्जितः ॥

अत्र

अजीर्णेन समाविष्टो यश्च मामभिगच्छति ।

इत्यपराधगणनायामजीर्णपदं उद्गाराभिव्यक्ताजीर्णपरम् । यत्किञ्चिदजीर्णस्य प्रायेण सार्वत्रिकत्वात्, अत्रोद्गारादिपद-वैयर्थ्याच्च । तादृगजीर्णे निवृत्ते तु स्नानपूजादि कार्यमिति ।

प्रायश्चित्तम्–

यावकेन त्र्यहं तिष्ठेन्मूलेन च पुनस्त्र्यहम् ।
फलाहारो दिनांस्त्रीणि अक्षारलवणस्त्र्यहम् ॥
पायसेन दिनांस्त्रीणि सक्तुभिश्च दिनत्रयम् ।
वायुभक्षस्त्र्यहं तिष्ठेदाकाशशयनं कुशैः ॥
प्रभातायां तु शर्वर्यामुदिते तु दिवाकरे ।
पञ्चगव्यं पिबेद्धीरः शरीरपरिशोधनम् ।
य एतेन विधानेन प्रायश्चित्तं समाचरेत् ॥
न तस्य भवते दोषो मम लोकं च गच्छति । [ ३२ ]

एतत्प्रायश्चित्ताध्ययनपठनफलम्—

यस्तु भागवतो नित्यं पठते च दृढव्रतः ।
*कृत्वा सर्वापराधानि न स पापेन लिप्यते ॥*
तैलाभ्यङ्गं नरः कृत्वा यस्तु मामुपसर्पति ।
शरीरं मण्डयित्वा तु यो मामाप्नोति माधवि ॥

इत्यपराधद्वयं अपराधगणनाध्याये क्वचिद्दृश्यते । तत्कल्पतरुप्रभृतिषु नास्ति ।

**इति वाराहपुराणोक्ताः अपराधाः सम्प्रायश्चिताः ।**

**अथागमे भगवदपराधाः ।**

यानैर्वा पादुकैर्वापि गमनं भगवद्गृहे ।
देवोत्सवाद्यसेवा च अप्रणामस्तदग्रतः ॥
उच्छिष्टो वाथवाऽशौचो भगवद्वन्दनादिकम् ।
कुर्यादिति शेषः ।
एकहस्तप्रणामस्तु तत्पुरस्तात्प्रदक्षिणम् ।
पादप्रसारणं चाग्रे तथा पर्यङ्कबन्धनम् ॥
शयनं भक्षणं वापि मिथ्याभाषणमेव च ।
उच्चैर्भाषा मिथोजल्पो रोदनादि च विग्रहः ॥
निग्रहोऽनुग्रहश्चैव नृषु च क्रूरभाषणम् ।
कम्बलावरणं चैव परनिन्दा परस्तुतिः ॥
अश्लीलभाषणं चैव अधोवायुविमोक्षणम् ।
शक्तौ गौणोपचारस्तु अनिवेदितभक्षणम् ॥
तत्तत्कालोद्भवानां च फलादीनामनर्पणम् ।
विनियुक्तावशिष्टस्य प्रदानव्यं जनादिके ॥
पृष्ठीं कृत्वासनं चैव परेषामभिवादनम् ।
गुरोर्मौनं निजस्तोत्रं देवतानिन्दनं तथा ॥
अपराधा इमे विष्णोर्द्वात्रिंशत् परिकीर्त्तिताः ।

पृथ्वीं कृत्वासनं उच्चासनम्।भगवदग्रे अन्येषां नमस्कारः।

*गुरोर्मौनं गुरोः स्तुतौ मौनम् ।*

**स्कन्दपुराणे,**

अहन्यहनि यो मर्त्यो गीताध्यायं तु सम्पठेत् ।
द्वात्रिंशदपराधैस्तु अहन्यहनि मुच्यते ॥

एवं गीताध्यायपठनं अपराधप्रायश्चित्ताध्यायपठनं च रहस्यविषयमिति वृद्धाः । अन्यथा गुरुतरप्रायश्चित्ताम्नानं विफलं स्यात् । एते चापराधा भागवतेन वर्जनीयाः । भागवतः कृतभगवद्दीक्षः । यस्य विष्णुरिष्टदैवतं इत्यपरे । भगवद्देवालयपूजाधिकृत इति कश्चित् । तन्न, अन्येषामपराधवर्जनसमाचारात् । तथानभिधानाच्च । वराहपुराणोक्तदीक्षित इत्यन्ये अत्रापि अन्येषामपराधवर्जनसमाचारो दुर्घट इति ।

**तथाच वराह एव,**

अवैष्णवस्य पक्वान्नं यो मह्यं विनिवेदयेत् ।
अवैष्णवेषु पश्यत्सु मत्पूजां विदधाति च ॥
दिनान्तरितपक्वान्नं यो मह्यं विनिवेदयेत् ।
भूताष्टम्योर्न कुरुते नक्तं न हरिवासरम् ॥
कुरवकपलाशस्थैः पुष्पैः कुर्यान्ममार्चनम् ।
इत्यादयोऽन्येऽपि सन्ति ते च ग्रन्थगौरवभयान्न लिखिताः ।

शन्तनुं प्रति नारदवाक्यम्–

अतः परं तु निर्माल्यं न लङ्घ्य महीपते ।
नरसिंहस्य देवस्य तथाऽन्येषां दिवौकसाम् ॥ इति

**अथ वैष्णवलक्षणानि प्रसङ्गतः ।**

एकादशीव्रते सक्तः पक्षयोरुभयोरपि ॥
शङ्खचक्रगदापद्ममत्स्यकूर्माङ्कपत्रवान् ।

शिवलिङ्गार्चनरतश्चतुर्दश्युपवासवान् ।
विप्रातिथ्यग्निगुरुषु भक्त आचारवान् शुचिः ॥
सन्ध्योपसेवी ह्यवचाः शालग्रामार्चने रतः ।
अमत्सरः शुभमना जितयोगो जितेन्द्रियः ॥
तीर्थवासी स्तुतिपरो हरेर्देवाद्यनिन्दकः ।
विष्णुभक्तिरतो मर्त्यो ह्रीमान् वैष्णव उच्यते ॥
स्कान्देऽपि,
समात्मा सर्वभूतेषु निजाचारादविच्युतः ।
विष्ण्वर्पिताखिलाचारः स हि वैष्णव उच्यते ॥
परमापदमापन्नो हर्षे वा समुपस्थिते ।
त्यजेन्नैकादशीं यस्तु यस्य दीक्षाऽस्ति वैष्णवी ॥
विष्णुपुराणे,
न चलति निजवर्णधर्मतो यः
सममतिरात्मसुहृद्विपक्षपक्षे ॥
न हरति न च हन्ति किञ्चिदुच्चैः
स्थिनमनसं तमवेहि वैष्णवाग्र्यम् ॥
लिङ्गपुराणे,
यत्रास्ते विष्णुभक्तश्च तत्र नारायणः स्थितः ।
विष्णुरेव हि तेषां वै देवता परमा स्मृता ॥
विष्णुभक्तिसमायुक्तान् श्रौतस्मार्त्तप्रवर्त्तकान् ।
प्रीतो भवति यो दृष्ट्वा वैष्णवोऽसौ प्रकीर्त्तितः ॥
गन्धपुष्पादिकं सर्वं शिरसा यो न धारयेत् ।
विष्णवे योग्यमित्येवं मत्वाऽसौ वैष्णवोत्तमः ॥
भोजनाच्छादनं सर्वं यथाशक्त्या करोति यः ।
विष्णुभक्तस्य सततं स वै भागवतः स्मृतः ॥

पद्मपुराण,

न यमं यमलोकं वा न दूतान् घोरदर्शनान् ।
पश्यन्ति वैष्णवा नूनं सत्यं सत्यं मयोदितम् ॥
प्राहास्मान् यमुनाभ्राता सादरं हि पुनः पुनः ।
भवद्भिर्वैष्णवास्त्याज्या न ते स्युर्मम गोचराः ।
दुराचारो दुष्कुलोऽपि सदा पापरतोऽपि वा ॥
भवाद्भिः सर्वथा त्याज्यो विष्णुं चेद्भजते नरः ।

गीतायामपि,

अपि चेत्सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥ इति ।

अन्येऽपि भगवत्समक्षमन्यनमस्कारः देवं पृष्ठतः कृत्वा अवस्थानं देवदर्शनयोग्यस्थले योगपट्टादिनोपवेशनं देवप्रयाणकाले अनुत्थानमित्यादयोऽपराधा अन्यतोऽनुसन्धेयाः ॥

स्कान्दे,

अपराधसहस्राणि अपराधशतानि च ।
पद्मेनैकेन देवेशः क्षमते हेलयाऽर्चितः ॥ इति ।

इति विष्णुपूजा ।

अथ देयानि ।

वामने,

गोदानानि पवित्राणि भूमिदानानि चानघ ।
वस्त्रान्नस्वर्णदानानि प्रीतये मधुघातिनः ॥

नारसिंहे,

वस्त्राभ्यामच्युतं भक्त्या परिधाय विचित्रितः ।
स मे लोके वसित्वा तु विष्णुलोके महीयते ॥

ध्वजं च विष्णवे यस्तु गरुडेन समन्वितम् ।
दद्यात्सोऽपि ध्वजाकीर्णविमानेन विराजता ॥
विष्णुलोकमवाप्नोति सेव्यमानोऽप्सरोगणैः ।
मुकुटैः कटकाद्यैश्च यो विष्णुं पूजयेन्नृप ॥
सर्वपापविनिर्मुक्तः सर्वभूषणभूषितः ।
इन्द्रलोके वसेच्छ्रीमान् यावदिन्द्राश्चतुर्दश ॥
यो गां पयस्विनीं विष्णोः कपिलां संप्रयच्छति ।
सर्वपापविनिर्मुक्तः सर्वभूषणभूषितः ।
गवां सहस्रदानस्य फलं प्राप्य हरिं व्रजेत् ॥

विष्णुः, न वासो नीलरक्तं न मणिसुवर्णयोः प्रतिरूपमलङ्करणम् ।

आग्नेये,

दुकूलपट्टकौशेयराङ्ककार्पासकादिभिः ।
वासोभिः पूजयेद्देवं सुशुभ्रैरात्मनः प्रियैः ॥
भक्ष्याणि यानि पेयानि भोज्यान्यभिमतानि च ।
फलं च वल्लभं यच्च तच्च देयं जनार्दने ॥
सुवर्णमणिमुक्तादि यच्चान्यदपि वल्लभम् ॥
तत्तु देवाधिदेवाय केशवाय निवेदयेत् ।

इति दानम् ।

इति श्रीमत्सकलसामन्तचक्रचूडामणिमरीचिमञ्जरीनीराजित-
चरणकमल-
श्रीमन्महाराजाधिराजप्रतापरुद्रतनूज-
श्रीमन्महाराजाधिराजमधुकरसाहसूनु-
श्रीमन्महाराजाधिराजचतुरुदधिवलयवसुन्धरासुहृदयपुण्डरीक—

विकास दिनकर—

श्रीवीरसिंहदेवोद्योजित—

श्रीहंसपण्डितात्मजश्रीपरशुराममिश्रसूनुसकलविद्यापारावारपारीणधुरीणजगद्दारिद्र्यमहागजपारीन्द्रविद्वज्जनजीवातु—

श्रीमन्मित्रमिश्रकृते वीरमित्रोदयाभिधनिबन्धे पूजाप्रकाशे विष्णुपूजाप्रकरणम् ।

## अथ शिवपूजनम् ।

**हारीतः,**

अथवा देवमीशानं भगवन्तमनामयम् ।
आराधयेन्महादेवं भावपूतो महेश्वरम् ॥
मन्त्रेण रुद्रगायत्र्या प्रणवेनाथवा पुनः ।
ऐशानेनाथवा रौद्रैस्त्र्यम्बकेन समाहितः ॥
तथोन्नमः शिवायेति मन्त्रेणानेन वा यजेत् ।

मन्त्रेण नमः शिवायेति पञ्चाक्षरेण । रुद्रगायत्र्या ॐतत्पुरुषाय विद्महे इत्यादिकया । ऐशानेन ईशानः सर्वविद्यानामित्यादिना । रौद्रैः रुद्रदैवतैः । त्र्यम्बकेन त्र्यम्बकं यजामहे इत्यनेन ।

पञ्चाक्षरेण मन्त्रेण पत्रं पुष्पं फलं जलम् ।
यः प्रयच्छति शर्वाय तदनन्तफलं स्मृतम् ।
सप्तकोटिमहामन्त्राः शिववक्त्राद्विनिर्गताः ॥
पञ्चाक्षरस्य मन्त्रस्य कलां नार्हन्ति षोडशीम् ।
अत्र रुद्राक्षधारणमावश्यकम् ।

**तदुक्तं स्कान्दे,**

हस्ते बाहौ तथा कण्ठे मूर्ध्नि रुद्राक्षधारणात् ।
अवध्यः सर्वभूतानां रुद्रवद्विचरेद्भुवि ॥
सुरासुराणां सर्वेषां वन्दनीयो यथा शिवः ।
तथैव सर्वभूतानां पूज्यो रुद्राक्षधारकः ॥
रुद्राक्षं धारयेन्नित्यं विशेषाच्च शिवार्चने ॥ इति ।

पूजाविधिमाह—

**बौधायनः,**

ॐअथातो महादेवस्याहरहः परिचर्याविधिं व्याख्यास्यामः ।

स्नात्वा शुचौ देशे गोमयेनोपलिप्य प्रतिकृतिं कृत्वाऽक्षतपुष्पैर्यथालाभमर्चयेत् । सह पुष्पोदकेन महादेवमावाहयेत् । ॐ भूर्महादेवमावाहयामि । ॐ भुवर्महादेवमावाहयामि ॐ स्वर्महादेवमावाहयामीत्यावाह्य आयातु भगवान् महादेव इति । अथ स्वागतेनाभिनन्दति स्वागतं पुनरागतं भगवते महादेवाय एतदासनमुपक्लृप्तमत्रास्तां भगवान् महादेव इति। अत्र कूर्चं ददाति भगवतेऽयं कूर्चो दर्भमयस्त्रिवृद्धरितसुपर्णस्तं जुषस्वेति अत्र स्थानानि कल्पयति अग्रतो ब्रह्मणे कल्पयामि, विष्णवे कल्पयामि । दक्षिणतः स्कन्दाय कल्पयामि, विनायकाय कल्पयामि । पश्चिमतः शूलाय कल्पयामि, महाकालाय कल्पयामि। उत्तरतो दुर्गायै कल्पयामि, नन्दिकेश्वराय कल्पयामि। सावित्र्या पात्रमभिमन्त्र्य प्रक्षाल्य तिरः पवित्रमित्यप आनीय सह पवित्रेणादित्यं दर्शयेदोमित्यातामितोस्तासां त्वरितरुद्रेण पाद्यं दद्यात् । प्रणवेनार्घ्यमथ व्याहृतिभिर्निर्माल्यं व्यपोह्योत्तरतश्चण्डेशाय नम इति । अथैनं स्नापयति आपोहिष्ठा मयोभुवास्तिसृभिर्हिरण्यवर्णा इति चतसृभिः पवमानः सुवर्जन इत्येतेन अनुवाकेन स्नापयित्वाऽद्भिस्तर्पयति । भवं देवं तर्पयामि, शर्वं देवं तर्पयामि, ईशानं देवं तर्पयामि, पशुपतिं देवं तर्पयामि, रुद्रं देवं तर्पयामि, उग्रं देवं तर्पयामि, भीमं देवं तर्पयामि, महान्तं देवं तर्पयामीति तर्पयित्वा अथैतानि वस्त्रयज्ञोपवीताचमनीयान्युदकेन व्याहृतिभिर्दत्त्वा व्याहृतिभिः प्रदक्षिणमुदकं परिषिच्य पवित्रं पादतले निधाय नमस्ते रुद्र मन्यव इति गन्धं दद्यात् । सहस्राणि सहस्रश इति पुष्पं दद्यात् । ईशानं त्वां भुवनानामित्यक्षतान् दद्यात् । सावित्र्या धूपम् । उद्दीप्यस्वेति दीपम् । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ता-

भ्यां भगवते महादेवाय जुष्टं चरुं निवेदयामीति नैवेद्यम्। अथाष्टभिर्नामभिरष्टौ पुष्पाणि दद्यात् । भवाय देवाय नमः । शर्वाय देवाय नमः । ईशानाय देवाय, पशुपतये देवाय, रुद्राय देवाय, उग्राय देवाय, भीमाय देवाय, महते देवाय। नमो ब्रह्मणे, नमो विष्णवे, नमः स्कन्दाय, नमो विनायकाय, नमः शूलाय, नमो महाकालाय, नमो दुर्गायै, नमो नन्दिकेश्वराय इति संपूज्य चरुशेषेणाष्टभिर्नामभिरष्टाहुतीर्जुहोति । भवाय देवाय स्वाहेत्यादिभिर्हुत्वा अथ शिष्टैर्गन्धमाल्यैर्ब्राह्मणानलङ्कृत्य अथैनमृग्यजुः सामाथर्वभिः स्तुतिभिः स्तुवन्ति सहस्राणि सहस्रश इत्यनुवाकं जप्त्वाऽन्यांश्च रौद्रान् मन्त्रान् यथाशक्तीत्येके। ॐ भूर्भुवः स्वर्महरों भगवते महादेवाय चरुमुद्वासयामीत्युद्वासनकाले, ॐ भूर्महादेवमुद्वासयामीत्यादिभी रुद्रमुद्वास्य प्रयातु भगवानीशः सर्वलोकनमस्कृतोऽनेन हविषा तुष्टः पुनरागमनाय पुनः सन्दर्शनाय चेति ।प्रतिमास्थानेष्वप्स्वग्नावावाहनविसर्जनवर्जं सर्वं समानं महत्स्वस्त्ययनमित्याचक्षत इत्याह भगवान् बौधायन इति ।

भविष्यपुराणे शिवलिङ्गपूजनमाहिमा,

लिङ्गे देवो महादेवः सर्वदेवनमस्कृतः ।
अनुग्रहाय लोकानां तस्मान्नित्यं प्रपूजयेत् ॥

एतेन नित्यत्वं पूजायाः ।

यो न पूजयते भक्त्या लिङ्गं त्रिभुवनेश्वरम् ।
न स स्वर्गस्य लोकस्य मोक्षस्य च न भाजनम् ॥
यस्तु पूजयते नित्यं शिवं त्रिभुवनेश्वरम् ।
स स्वर्गराज्यमोक्षाणां क्षिप्रं भवति भाजनम् ॥

अनेन काम्यत्वं पूजायाः ।

तस्मात्सौम्यमना भूत्वा यावज्जीवं प्रतिज्ञया ।

अर्चयेत सदा देवमापन्नोऽपि महामुने ॥
वरं प्राणपरित्यागः शिरसो वापि कर्त्तनम्।
न त्वसम्पूज्य भुञ्जीत भगवन्तं त्रिलोचनम् ॥
स्फुटं निर्वहते यस्य यावज्जीवं शिवार्चनम्।
मनुष्यवर्मणा नद्धः स रुद्रो नात्र संशयः ॥
न हि लिङ्गार्चनात् किञ्चित् पुण्यमभ्यधिकं क्वचित्।
इति विज्ञाय यत्नेन पूजनीयः सदा शिवः ॥
आकाशं लिङ्गमित्याहुः पृथिवी तस्य पीठिका।
आलयः सर्वभूतानां लयनाल्लिङ्गमुच्यते ॥
यो लिङ्गं द्वेष्टि संमोहात् सर्वदेव नमस्कृतम्।
नरो नरकगामी स्यात् तस्य सम्भाषणादपि ॥
लिङ्गपुराणे,
लिङ्गे तु पूजिते सर्वमर्चितं स्याच्चराचरम्।
तस्मात्सदार्चनं कार्यं लिङ्गस्य सुमहात्मनः ॥
अनेकजन्मसाहस्रं भ्राम्यमाणस्तु योनिषु।
कः समाप्नोति वै मुक्तिं लिङ्गार्चनमृते नरः ॥
स्कन्दपुराणे,
मनसा चिन्तयेद्यस्तु पूजयामि हरं पदम्।
अशक्तौ नास्ति चेद्द्रव्यं यस्य चापि सुमध्यमे ॥
स तया श्रद्धया पूतो विमुक्तः सर्वपातकैः।
मम लोकमवाप्नोति भिन्नदेहो न संशयः ॥
यो रोगादिना अशक्तो यस्य च द्रव्यं नास्ति स मानसीं पूजां कुर्यादित्यर्थः।
योऽर्चायामर्चयेन्मां हि पूर्णं वर्षशतं नरः।
एकं च दिवसं लिङ्गं सममेतन्न संशयः ॥

न तुष्याम्यर्चितोऽर्चायां तथा देवि नगात्मजे ।
लिङ्गेऽर्चिते यथात्यर्थं परितुष्यामि पार्वति ॥
सर्वेन्द्रियप्रसक्तोऽपि युक्तो वा सर्वपातकैः ।
स प्रयाति शिवं देवि लिङ्गं योऽर्चयतीह मे ॥
अनेकजन्मसाहस्रैर्भ्राम्यमाणस्तु योनिषु ।
कः समाप्नोति वै मुक्तिं लिङ्गार्चनमृते नरः ॥
मृद्भस्मगोसकृत्पिष्टताम्रकांस्यमयं तथा ।
कृत्वा लिङ्गं सकृत्पूज्य वसेत् कल्पायुतं दिवि ॥

देवीपुराणे,

वार्क्षं वित्तप्रदं लिङ्गं स्फाटिकं सर्वकामदम् ।
नार्मदं गिरिजं श्रेष्ठमन्यद्वापि हि लिङ्गवत् ॥

नार्मदं नर्मदोद्भवम् । गिरिजं पाषाणभवमिति यावत् । लिङ्गवत् लिङ्गाकारम् ।

कृत्वा पूजय विप्रेन्द्र लप्स्यसे वाञ्छितं फलम् ।

भविष्ये,

वाणलिङ्गानि राजेन्द्र ख्यातानि भुवनत्रये ।
न प्रतिष्ठा न संस्कारस्तेषामावाहनं तथा ॥
एवमेव प्रपूज्यानि शिवरूपाणि भावतः ।

अन्यच्च,

यः कृत्वा पार्थिवं लिङ्गमर्चयेत् शुभवेदिकम् ।
इहैव धनवान् श्रीमान् सोऽन्ते रुद्रोऽभिजायते ॥
त्रिसन्ध्यं योऽर्चयेल्लिङ्गं कृत्वा वित्तेन पार्थिवम् ।
दशैकादशकं यावत्तस्य पुण्यफलं शृणु ॥

वित्तेन पूजाद्रव्येण । दशैकादशकं दशोत्तरशतमित्यर्थः ।

अनेनैव स देहेन रुद्रः सन् तिष्ठते क्षितौ ।

पापहा सर्वमर्त्यानां दर्शनात्स्पर्शनादपि ॥
यो हि पिष्टमयं लिङ्गं सर्वगन्धोपशोभितम् ।
कुसुमैश्च सुगन्धैश्च विविधैरनुलेपनैः ॥
भक्ष्यभोज्यैरशेषैश्च घृतदीपैश्च संयुतम् ।
तस्य दक्षिणपार्श्वे तु अगुरुं विन्यसेद्बुधः ॥
दद्यात् पश्चिमभागे तु शोभनां तु मनः शिलाम् ।
उत्तरे चन्दनं दद्याद्धरितालं तु पूर्वतः ॥
एवं वित्तानुसारेण कृत्वा विभवविस्तरम् ।
कृष्णपक्षे चतुर्दश्यां शिवाय विनिवेदयेत् ॥
निष्कलः सर्वशो भूत्वा प्रविशेच्छिवमव्ययम् ।
अथामलकमात्रं तु कृत्वा लिङ्गं हिरण्मयम् ॥
संपूज्य रत्नखचितं शिवलोके महीयते ।
वर्णकैः सितरक्तैर्वा अन्त्याङ्गुल्या च यो लिखेत् ॥
लिखित्वा पूजयेद्यस्तु भवेत्सोऽपि महेश्वरः ।
पांसुना क्रीडमानोऽपि लिङ्गं कुर्यात्तु यो नरः ॥
पुण्यात्स लभते राज्यमसपत्नमकण्टकम् ।
देवीपुराणे,
ब्रह्मोवाच ।
शैलं ब्रह्मा हरिर्नित्यमिन्द्रनीलमयं यजेत् ॥
इन्द्रो मणिमयं तात यक्षो हैमं समर्चयेत् ।
विश्वेदेवास्तथा रौप्यं वायुः पित्तलसम्भवम् ॥
वसवः कांस्यजं देवमश्विनौ तु हिरण्मयम् ।
स्फाटिकं जलदेवस्तु वह्नी रत्नमयं यजेत् ॥
ऐन्द्रं सूर्योऽर्चयेल्लिङ्गं सोमो मौक्तिकशैलजम् ।
ऐन्द्रं इन्द्रनीलजम् ।

उरगा वैद्रुमं लिङ्गमायसं दानवोत्तमाः ।
पिशाचास्त्रपुजं सीसं योगिनो भूतनायकाः ॥
गुह्यकास्ताम्रजं लिङ्गं वज्रलोहं च मातरः ।
पद्मरागं समस्तास्तु देवदानवमानवाः ॥
वैडूर्यं ग्रहनक्षत्रतारकाः पूजयन्ति वै ।

**शिवपुराणे,**

यत्फलं पाकयज्ञेषु हविर्यज्ञेषु यत्फलम् ।
एकाह्ना तदवाप्नोति शिवलिङ्गार्चने रतः ॥
गवां शतसहस्रस्य सम्यग्दत्तस्य यत्फलम् ।
दशाहात्तदवाप्नोति शिवलिङ्गार्चने रतः ॥

**पाद्मे,**

शालग्रामशिलालिङ्गे यः करोति ममार्चनम् ।
तेनार्चितः कार्त्तिकेय युगानामेकसप्ततिः ॥
न चात्र नैवेद्यादेरग्राह्यत्वम् ।
अग्राह्यं मम नैवेद्यं पत्रं पुष्पं फलं जलम् ॥
शालग्रमशिलालिङ्गे सर्वं याति पवित्रताम् ।
स्ववर्णधर्मत्यागिनां शिवपूजायामनधिकारः ।
स्वधर्मं यः परित्यज्य परधर्मरुचिर्भवेत् ।
चकोरनयने चोरः स मूढः शूद्रसन्निभः ॥
तेनाहं पूज्यमानोऽपि गन्धं जिघ्रामि कौणपम् ।
कौणपं शवसम्बन्धि ।
तामर्चामर्चितो हित्वा तस्याहं स्पर्शनादपि ।
वृजाम्यायतनं त्यक्त्वा यत्रासौ पापनिश्चयः ॥
वर्णत्रयस्य शुश्रूषां शुचिः शूद्रः करोति यः ।
स्वधर्मस्य स्थितिं ज्ञात्वा तस्य गृह्णाम्यहं बलिम् ॥

THE

# CHOWKHAMBÂ SANSKRIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

## NO. 166.

# वीरमित्रोदयः ।

पूजाप्रकाशः ।

महामहोपाध्यायश्रीमित्रमिश्रविरचितः ।

साहित्योपाध्यायविष्णुप्रसादशर्मणा संशोधितः ।

VÎRAMITRODAYA,

PUJA PRAKÂSA,

BY

MAHÂMAHOPÂDHYÂYA PANDITA MITRA MISRA.

EDITED BY

Vishnu Prashada Sarma.

VOL. III.

FASCICULUS III.

*PUBLISHED AND SOLD BY THE SECRETARY,*

CHOWKHAMBÂ SANSKRIT BOOK-DEPOT.

BENARES.

AGENTS - OTTO HARRASSOWITZ, LEIPZIG

PANDITA JYESHTHARÂMA MUKUNDAJI BOMBAY;

PROBSTHAIN & CO., BOOKSELLERS, LONDON

*Printed by Jai Krishna Dâsa Gupta,*

AT THE VIDYA VILÂSA PRESS

BENARES.

*Price Rupee one.*

॥ श्रीः ॥

-*-

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तबकः— १६६

१ अस्यां चौखम्बा-संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तबको मुद्रयित्वा प्रकाश्यते। एकस्मिन् स्तबके एक एव ग्रन्थो मुद्र्यते ।

२ प्राचीना दुर्लभाश्चामुद्रिता मीमांसावेदान्तादिदर्शनव्याकरण धर्म-शास्त्रसाहित्यपुराणादिग्रन्था एवात्र सुपरिष्कृत्य मुद्र्यन्ते ।

३ काशिकराजकीयप्रधानसंस्कृतपाठशालाऽध्यापकाः पण्डिता अन्ये च शास्त्रदृष्टयो विद्वांस एतत्परिशोधनादिकार्यकारिणो भवन्ति।

४ भारतवर्षीयैः, ब्रह्मदेशीयैः, सिंहलद्वीपवासिभिश्च एतद्ग्राहकै-र्देयं वार्षिकमग्रिमं मूल्यम्-मुद्राः ७ आणकाः ८

५ अन्यैर्देयं प्रतिस्तबकम् ,, ,, १ ,, ०

६ प्रापणव्ययः पृथग् नास्ति ।

७ साम्प्रतं मुद्र्यमाणा ग्रन्थाः- मुद्रिताः स्तबकाः

| | | |
|---|---|---|
| (१) संस्काररत्नमाला । गोपीनाथभट्टकृता | ( संस्कारः ) | २ |
| (२) शब्दकौस्तुभः । भट्टोजिदीक्षितकृतः | ( व्याकरणम् ) | १० |
| (३) श्लोकवार्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृत-न्यायरत्नाकराख्यया व्याख्यया सहितम् । सम्पूर्णम् । | | १० |
| (४) भाष्योपबृंहितं तत्त्वत्रयम् । विशिष्टाद्वैतदर्शनप्र-करणम् । श्रीमल्लोकाचार्य्यप्रणीतम् । श्रीनारायण तीर्थ विरचित भाट्टभाषा प्रकाशसहितम् । सं० | (वेदान्त) | २ |
| (५) करणप्रकाशः । श्रीब्रह्मदेवविरचितः सम्पूर्णः | ( ज्योतिषः ) | १ |
| (६) भाट्टचिन्तामणिः । महामहोपाध्याय-श्रीगागाभट्ट विरचितः । तर्कपादः | ( मीमांसा ) | २ |

वेदमन्त्रधरैर्विप्रैरहं तुष्येऽर्चितः सदा ।
न विप्राणां करस्पर्शैरुद्विजामि वरानने ॥
शूद्रकर्मरतेनापि स्पृश्यमानो द्विजन्मना ।
हृष्यामि तेन सुतरां पूज्यमानश्च सुन्दरि ॥
विप्रस्य तु सदैवाहं शुचेरप्यशुचेरपि ।
गृह्णन् बलिं न तृप्यामि प्रियाणामिव दर्शनात् ॥

अत्रायं तात्पर्यार्थः । शूद्रः स्वधर्मनिरतोऽधिकारी पूजायां न स्पर्शे । इतरस्य स्वधर्मभ्रष्टशूद्रसङ्करजात्यादेरुभयत्रानधिकारः क्षत्रियवैश्ययोरुभयत्राधिकारः। विप्रस्य जात्यैव सर्वत्राधिकारः। अनधिकारिणां विप्रद्वारा पूजनं न परित्यागः ।

स्त्रीशूद्रैश्च प्रकर्तव्यं पार्थिवे तु शिवेऽर्चनम् ।

इति लिङ्गपुराणोक्तेः पार्थिवे शिवे शूद्राणां साक्षात्पूजनाधिकारः।

अथ पार्थिवलिङ्गपूजनविधिर्ब्रह्मपुराणे,

हरो महेश्वरश्चैव शूलपाणिः पिनाकधृक् ।
पशुपतिः शिवश्चैव महादेवेति कीर्त्तयेत् ॥
मृत्तिकाग्रहणे चैव घटने च प्रतिष्ठिते ।
आवाहने च स्नपने पूजने च विसर्जने ॥
हरादीनि च नामानि महादेवेति कीर्त्तयेत् ।

अष्टमूर्त्तिपूजां प्रति विष्णुवाक्यं भविष्ये,

साधु साधु द्विजश्रेष्ठ साधु पृष्टोऽस्मि सुव्रत ।
शृणुष्व सकलं पूर्वं शिवमन्त्रगणं परम् ॥

ॐनमः शिवायेति लिङ्गपूजा । ॐशर्वाय क्षितिमूर्त्तये नमः। ॐभवाय जलमूर्त्तये नमः । ॐरुद्रायाग्निमूर्त्तये नमः । ॐउग्राय वायुमूर्त्तये नमः । ॐभीमाय आकाशमूर्त्तये नमः । ॐपशुपतये यजमानमूर्त्तये नमः । ॐमहादेवाय सोममूर्त्तय नमः । ॐई-

शानाय सूर्यमूर्त्तये नमः ।

मूर्त्तयोऽष्टौ शिवस्यैताः पूर्वादिक्रमयोगतः ।
आग्नेय्यन्ताः प्रयोज्यास्तु वेद्यां लिङ्गे शिवं यजेत् ॥

स्कन्दपुराणे,

ईश्वर उवाच ।

सर्वमाल्यानि यो दद्यात् सर्वमूर्त्तिषु नित्यशः ।
मन्त्रेण विधिवत्तस्य पुण्यं फलमनन्तकम् ॥

सर्वमाल्यानि शिवपूजाविहितपुष्पाणि । मूर्त्तयो यथा,

ॐसर्वगाय नमोनमः ॐसर्वदेवाय नमोनमः ।
ॐनमो भगवते चैव गुह्यगुह्याय वै नमः ॥
ॐसोमाय भूतनाथाय भावाय च भवाय च ।
सर्वगुह्याय वै स्वाहा वेदगुह्यमयाय च ॥
सर्वगुह्यमयो मन्त्रः स्वाहा सोमाय वै सदा ।
कटङ्कटाय वै स्वाहा महादेवाय सूक्ष्मिणे ॥
पुष्पाण्यनेन मन्त्रेण यो मे नित्यं निवेदयेत् ।
सहस्रं तेन जप्यस्य मामकस्य कृतं भवेत् ॥
अथाञ्जलिममावास्यां सुसम्पूर्णं समाहितः ।
तिलानां चैव कृष्णानां सर्षपाणां च पार्वति ॥
अर्चयित्वा यथान्यायं यथालाभं प्रयच्छति ।
इदं च वचनं ब्रूयादार्षेति च सहेति वा ॥
सर्वपापविनिर्मुक्तः स्वर्गलोकं व्रजेन्नरः ।
अर्चयित्वा च मां देवि यो मे नामानि कीर्तयेत् ॥
चतुर्दश्यामथाष्टम्यां पक्षयोरुभयोरपि ।
वामदेव सुदेवेति हरगुप्तेति वै पुनः ॥
उमापते नीलकण्ठ शान्त श्रीकण्ठ गोपते ।

शिव भीम पशुपते शङ्करोग्रभवेति च ॥
महादेवेति चाप्यन्यन्नामगुह्यं प्रकीर्त्तयेत्।
सर्वपापैः प्रमुच्येत दिवि देवैश्च मोदते॥
एतेषामेकमपि यः पठेद्वा कथयेत्तथा।
स देहपद्धतिं हित्वा मामेव प्रतिपद्यते॥
इदं च परमं गुह्यं यो मे देवि निवेदयेत्।
अर्कपत्रपुटं पूर्णं घृतस्य मधुनस्तथा॥
इमानि च महाभागे यो मे नामानि कीर्तयेत्।
समस्तनिलयो भर्गो भस्मशायी यतव्रतः॥
वामदेवः प्रशान्तश्च शर्वश्चैव त्रिलोचनः।
अपसव्याप्रियः सव्यो बहुरूपोऽन्धकारकः॥
पुराणः पुरुहूतश्च मर्त्यो मृत्युर्जितेन्द्रियः।
अतीन्द्रियोऽनिन्द्रियश्च सर्वभूतहृदि स्थितः॥
संसारक्रीडयोगात्मा कपाली डिण्डिमेव च।
महादेव महादेव महादेवेति चैव हि॥
पठेदेतान्नियमवान् शृणुयाद्वा ऽपि यः सदा।
स देहभेदमासाद्य योगात्मा गणपो भवेत्॥
रुद्रेत्यभिष्टुते देवे अग्निष्टोमफलं लभेत्।
हरेत्यभिहिते चापि ज्योतिष्टोमफलं लभेत्॥
भवेति कीर्त्तिते वापि अश्वमेधफलं लभेत्।
शिवेत्युक्त्वा नमस्कारं यः करोति कपर्दिने॥
सर्वलोकैर्नमस्कृत्यः सर्वलोके महीयते।
महेश्वरेति यश्चोक्त्वा प्रतिबुद्धो नमस्यति।
सौत्रामणेः स यज्ञस्य फलभाग् जायते नरः॥
ईशानमिति यस्त्वेवं नाम कीर्त्तयते विभोः।

स कीर्त्तिमांश्च भवति वाजपेयं च विन्दति ॥
मखेश इति यस्त्वेवं सङ्कीर्त्तयति शङ्करम् ।
फलं पुरुषमेधस्य लभते पुरुषः स तु ॥
पशूनां पतिरित्येवं य उदाहरते हरम् ।
पशवस्तस्य वर्द्धन्ते पशुयज्ञमवाप्नुयात् ॥
वेदैरधीतैः किं तस्य किं तीर्थैः सेवितैरपि ।
यो मर्त्यः सुमना ब्रूयान्महादेवेति नित्यशः ।
कोटीष्वष्टादशसु तीर्थानां फलमुच्यते ॥
एकस्थो लभते तत्तु महादेवेति कीर्तनात् ।
अश्वमेधसहस्रस्यागणितस्य च यत्फलम् ॥
फलमाप्नोति मामुक्त्वा महादेवेति मानवः ।
महादेवेति यो गायन् पञ्चत्वमुपगच्छति ॥
स रुद्रलोके रुद्रस्य पूज्यतेऽतुलविग्रहः ।
भविष्ये,
कीर्त्तयन्ति च ये रुद्रं सकृदप्येव मानवाः ।
सर्वपापैः प्रमुच्यन्ते सप्तजन्मकृतैरपि ॥
ब्रह्मपुराणे,
नाधिकारोऽस्ति विप्राणां भौमानां देवपूजने ।
भृत्या भरतशार्दूल क्ष्माधिपत्ये विशेषतः ॥
भृत्या भरणेन । क्ष्माधिपत्ये देवभूमिप्रभुत्वे ।
यस्तु पूजयते देवान् ब्राह्मणो द्रव्यलोभतः ॥
भृत्या भरतशार्दूल स याति नरकं ध्रुवम् ।
देवालयेषु सर्वेषु वर्जयित्वा शिवालयम् ॥
अधिकारः स्मृतो राजन् भौमानां न संशयः ।
विधिं विना च यो रुद्रं पूजयेऽविनियोजितः ॥

स याति निरयं घोरं स्वामी चाशु विनश्यति ।
कृत्वा प्रदक्षिणं भक्त्या शिवस्यायतने नरः ॥
अश्वमेधसहस्रस्य सुपुष्टस्य फलं लभेत् ।

अथ पञ्चगव्यादिस्नानविधिः ।

कापिलापञ्चगव्येन कुशवारिश्रुतेन च ।
स्नापयेत् मन्त्रपूतेन ब्राह्मं स्नानं हि तत्स्मृतम् ॥
एकाहमपि यो लिङ्गे ब्राह्मं स्नानं समाचरेत् ।
विधूय सर्वपापानि रुद्रलोके महीयते ॥
कपिलापञ्चगव्येन दधिक्षीरघृतेन च ।
स्नानं शतगुणं प्रोक्तामितरेभ्यो न संशयः ॥
वर्षकोटिसहस्रैस्तु यत्पापं समुपार्जितम् ।
घृताभ्यङ्गेन लिङ्गस्य दहेत्सर्वं न संशयः ॥
कृष्णाष्टम्यां घृतस्नानं कृत्वा लिङ्गे सकृन्नरः ।
कुलैकविंशमुत्तार्य शिवलोके महीयते ॥
सकृद्गव्येन पयसा यो लिङ्गं स्नापयेन्नरः ।
राजतेन विमानेन सोमलोके महीयते ॥

स्कन्दपुराण,

अयुतं यो गवां दद्याद्दोग्ध्रीणां वेदपारगे ।
वस्त्रहेमादियुक्तानां क्षीरस्नानस्य तत्फलम् ॥
संवत्सरं तु यः कुर्यात् क्षीरेण स्नपनं शुचिः ।
गाणपत्यं च लभते वल्लभत्वं च नित्यशः ॥

भविष्यपुराणे,

स्नाप्य दध्ना सकृल्लिङ्गं कृष्णाष्टम्यामुपोषितः ।
कुलैकाविंशमुत्तार्य शिवलोके महीयते ॥
दध्ना तु स्नापयेल्लिङ्गं सकृद्भक्त्या तु यो नरः ।

सर्वपापविनिर्मुक्तः शिवलोके महीयते ॥
नैरन्तर्येण यो मासं घृतस्नानं समाचरेत् ।
स त्रिसप्तकुलोपेतो लभते पदमैश्वरम् ॥
मधुना स्नापयित्वा तु सकृद्भक्त्या तु यो नरः ।
पापकञ्चुकमुत्सृज्य वह्निलोके महीयते ॥
स्नानमिक्षुरसेनापि यो लिङ्गे सकृदाचरेत् ।
लभेद्विद्याधरं लोकं सर्वकामसमन्वितः ॥
यः पुमांस्तिलतैलेन करयन्त्रोद्भवेन च ।
शिवाभिषेकं कुरुते स शैवं पदमाप्नुयात् ॥
कर्पूरागुरुतोयेन यो लिङ्गं स्नापयेत्सकृत् ।
सर्वपापविनिर्मुक्तः शिवसायुज्यमाप्नुयात् ॥
श्रियं प्राप्नोति यः स्नाप्य शिवं कुङ्कुमवारिणा ॥
फलतोयैः शिवं स्नाप्य स वै ब्रह्मयुतो भवेत् ।
व्यासः,
सहस्रकलशैरद्भिरभिषेकं करोति यः ।
शिवाय विधिवन्मन्त्रैश्चिरजीवी भवेन्नरः ॥
वस्त्रपूतेन तोयेन यो लिङ्गं स्नापयेत्सकृत् ।
सर्वकामसुतृप्तात्मा वारुणं लोकमाप्नुयात् ॥
कुशोदकेन यो लिङ्गं सकृत् स्नापयते नरः ।
काञ्चनेन विमानेन ब्रह्मलोके महीयते ॥
गन्धचन्दनतोयेन स्नापयेत्सकृदीश्वरम् ।
गन्धर्वलोकमाप्नोति गन्धर्वैश्च सुपूजितः ॥
पुष्पोदकेन सावित्रं कौबेरं हेमवारिणा ।
रत्नोदकेन वाप्यैन्द्रं लोकं प्राप्य स मोदते ॥
स्नानं पलशतं ज्ञेयमभ्यङ्गः पञ्चविंशतिः ।

पलानां च सहस्रं तु महास्नानं प्रकीर्त्तितम् ॥
सितेन भस्मना स्नात्वा सकृल्लिङ्गं प्रमोदयेत् ।
स्नात्वा स्नापयित्वा ।
चण्डांशुनिर्मलः श्रीमान् शिववत् सोममण्डले ।
पाटलोत्पलपद्मानि करवीराणि सर्वदा ॥
स्नानेऽमलानि योज्यानि स्थिराणि सुरभीणि च ।
एषामन्यतमं स्नानं कृत्वा वै भक्तितः शिवे ॥
विधूय पापकलिलं शिवलोके महीयते ।
मन्त्राष्टशतजप्तेन विमलेनाम्भसा शिवम् ॥
स्नापयित्वा सकृद्भक्त्या शिवलोके महीयते ।
हिमशीताम्बुना स्नाप्य धारोष्णपयसा ततः ॥
स्नाप्य पश्चात् घृतस्नानं कृतमेतद्भविष्यति ।
एतत्स्नानत्रयं कृत्वा पूजयित्वा तु भक्तितः ॥
अश्वमेधसहस्रस्य फलमाप्नोति मानवः ।
मृत्कुम्भात्ताम्रजैः कुम्भैः स्नानं शतगुणोत्तरम् ॥
रौप्यैर्लक्षोत्तरं ज्ञेयं हैमैः कोटिगुणोत्तरम् ।
लिङ्गस्य दर्शनं पुण्यं दर्शनात् स्पर्शनं वरम् ॥
स्पर्शनाच्चार्चनं पुण्यं घृतस्नानमतः परम् ॥
दशापराधांस्तोयेन क्षीरेण च शतं क्षमेत् ।
सहस्रं क्षमते दध्ना घृतेनाप्ययुतं क्षमेत् ॥
अपराधः शिवस्य ।
घृताभ्यङ्गे घृतस्नाने लिङ्गं यत्नाद्विरूक्षयेत् ॥
यवगोधूमजैश्चूर्णैः कषायैर्गन्धयोजितैः ।
सुखोष्णेनाम्बुना वापि स्नापयेत्तदनन्तरम् ॥
घर्षयेद्बिल्वपत्रैश्च तच्च पीठं विशोधयेत् ।

दशधेनुसहस्राणि यद्दत्त्वा लभते फलम् ।
तत्फलं लभते सर्वं लिङ्गस्योद्वर्त्तने कृते ॥
अर्घं पुष्पफलोपेतं शिवाय विनिवेदयेत् ।
संपूज्य सर्वलोकेषु शिववन्मोदते दिवि ॥
गन्धतोयेन संमिश्रमुदकार्घं दशोत्तरम् ।
योऽष्टाङ्गमर्घमापूर्य लिङ्गमूर्धनि निःक्षिपेत् ॥
दशवर्षसहस्राणि रुद्रलोके महीयते ।
आपः क्षीरं कुशाग्राणि दधि सर्पिश्च तण्डुलाः ॥
तिलाश्च सर्षपाश्चैव अष्टाङ्गोऽर्घः प्रकीर्त्तितः ।
योऽर्कपत्रपुटे कृत्वा मधुपर्कं समन्त्रकम् ॥
निवेदयति शर्वाय सोऽश्वमेधफलं लभेत् ।
ताम्रपात्रार्घदानेन पुण्यं लक्षगुणोत्तरम् ॥
पलाशपद्मपत्राभ्यां ताम्रपात्रसमं भवेत् ।
रूप्यपात्रेण विज्ञेयं फलं लक्षोत्तरं गुणम् ॥
सुवर्णपात्रविन्यस्तमर्घं कोटिगुणोत्तरम् ।
एवं स्नानेऽथ नैवेद्ये बलिहोमादिषु क्रमात् ॥
पात्रान्तरविशेषेण फलं स्यादुत्तरोत्तरम् ।

**शिवपुराणे विभीषणं प्रति वाक्यम्,**

अर्घपुष्पप्रदानेन धूपदानेन यत्फलम् ।
दास्यामि च गतिं पुण्यां गाणपत्यं च दुर्लभम् ॥

## अथ वस्त्रादिदेयविधिः ।

**बृहन्नारदीये,**

वासांसि सुविचित्राणि सारवन्ति मृदूनि च ।
धूपितानि शिवे दद्याद्विकेशानि नवानि च ॥
यावत्तद्वस्त्रतन्तूनां परिमाणं विधीयते ।

तावद्वर्षसहस्राणि शिवलोके महीयते ॥
त्रिवृत् शुक्लं सुपीतं वा पट्टसूत्रादिनिर्मितम् ।
दत्त्वोपवीतं रुद्राय भवेद्वेदान्तपारगः ॥
त्रुटिमात्रं तु यो दद्यात् हेम लिङ्गे समौक्तिकम् ।
इन्द्रस्यार्द्धासनी तावद्यावदिन्द्राश्चतुर्दश ॥
त्रुटिस्त्रसरेणुः ।

**नन्दिपुराणे,**

गुञ्जागुञ्जार्धमात्रं तु आजीवं प्रतिवासरम् ।
कनकस्य तु लिङ्गेऽत्र व्रजेत्पदमनुत्तमम् ॥
एवमेवानुसारेण फलं ज्ञेयं समासतः ।
सर्वेषामेव पात्राणां मुकुटानां च सर्वशः ॥

## अथ गन्धविधिः ।

**भविष्ये,**

लिङ्गस्य लेपनं कुर्याद्दिव्यगन्धैः सुगन्धिभिः ।
वर्षकोटिशतं दिव्यं रुद्रलोके महीयते ॥
गन्धानुलेपनात् पुण्यं द्विगुणं चन्दनस्य तु ।
चन्दनाच्चागुरोर्ज्ञेयं पुण्यमष्टगुणं नृप ॥
कृष्णागुरोर्विशेषेण द्विगुणं फलमादिशेत् ।
तस्माच्छतगुणं पुण्यं कुङ्कुमस्य विधीयते ॥
चन्दनागुरुकर्पूरैः श्लक्ष्णपिष्टैः सकुङ्कुमैः ।
शिवलिङ्गं समालिप्य कल्पकोटिं वसेद्दिवि ॥
संवीज्य तालवृन्तेन शुभगन्धैः प्रलेपितम् ।
दशवर्षसहस्राणि वायुलोके महीयते ॥
मायूरव्यजनं दत्त्वा शिवायातीव शोभनम् ।
वर्षकोटिशतं पुण्ये शिवलोके महीयते ॥

शुद्धैः शाल्यक्षतैः शुभ्रैः कुशपुष्पैः प्रयत्नतः ।
शिवं संपूजयेद्भक्त्या शिवलोकमवाप्नुयात् ॥ इति ।

अथ पुष्पाणि ।

पुष्पैररण्यसम्भूतैः पत्रैर्वा गिरिसम्भवैः ।
अपर्युषितनिश्छिद्रैः प्रोक्षितैर्जन्तुवर्जितैः ॥
आत्मारामोद्भवैर्वापि पुष्पैः सम्पूजयेच्छिवम् ।
तपःशीलगुणोपेते विप्रे वेदस्य पारगे ॥
दत्त्वा सुवर्णस्य शतं तत्फलं कुसुमस्य च ।

अत्र कुसुमस्य शते शिवायार्पिते सुवर्णशतदानजन्यफलसमं फलं भवतीत्यर्थः ।

अर्कपुष्पे तथैकस्मिन् शिवाय विनिवेदिते ॥
दश दत्त्वा सुवर्णस्य यत्फलं तदवाप्नुयात् ।
अर्कपुष्पसहस्रेभ्यः करवीरं विशिष्यते ॥
करवीरसहस्रेभ्यो बिल्वपत्रं विशिष्यते ।
बिल्वपत्रसहस्रेभ्यो द्रोणपुष्पं विशिष्यते ।
द्रोणपुष्पसहस्रेभ्यो ह्यपामार्गो विशिष्यते ॥
अपामार्गसहस्रेभ्यः कुशपुष्पं विशिष्यते ।
कुशपुष्पसहस्रेभ्यः शमीपत्रं विशिष्यते ॥
शमीपत्रसहस्रेभ्यः श्रीमन्नीलोत्पलं वरम् ।
पद्मपत्रसहस्रेभ्य एकं धत्तूरकं स्मृतम् ॥
धत्तूरकसहस्रेभ्यः शमीपुष्पं विशिष्यते ।
सर्वासां पुष्पजातीनां प्रवरं नीलमुत्पलम् ॥

नारदः,

विष्णोर्यानीह चोक्तानि पुष्पाण्यपि च पत्रिकाः ।
केतकीपुष्पमेकं तु विना तान्यखिलान्यपि ॥

शस्तान्येव सुरश्रेष्ठ शङ्कराराधनेऽपि हि ।
तथैव फलदान्येव तानि पुष्पाणि वासव ॥
सत्यं सत्यं पुनः सत्यं शिवं स्पृष्ट्वेदमुच्यते ।
बकपुष्पेण चैकेन शैवमर्चनमुत्तमम् ॥
व्यासः,
चम्पकैर्बृहतीपुष्पैः पुन्नागैः कल्हारकैः ।
कुशपुष्पैः कुशैश्चैव कदम्बैः पूजयेच्छिवम् ॥
करवीरसमा ज्ञेया जातीबकुलपाटलाः ।
श्वेतमन्दारकुसुमं सितपद्मं च तत्समम् ॥
शमीपुष्पं बृहत्याश्च कुसुमं तुल्यमुच्यते ।
नागचम्पकपुन्नागौ धत्तूरकसमौ स्मृतौ ॥
गन्धवन्त्यपवित्राणि कुसुमानि विवर्जयेत् ।
गन्धहीनमपि ग्राह्यं पवित्रं यत्कुशादिकम् ॥
अपवित्राणि नीलीकापित्थादिपुष्पाणि ।
धत्तूरकेण यो लिङ्गं सकृत्पूजयते नरः ।
स गोलक्षफलं प्राप्य शिवलोके महीयते ॥
बृहतीकुसुमैर्भक्त्या यो लिङ्गं सकृदर्चयेत् ।
गवामयुतदानस्य फलं प्राप्य दिवं व्रजेत् ॥
भविष्ये,
करवीरो बकश्चैव अर्क उन्मत्तकस्तथा ।
पाटला बृहती चैव तथाच गिरिकर्णिका ॥
तथा काशस्य पुष्पाणि मन्दारश्चापराजिता ।
शमीपुष्पाणि चान्यानि कुब्जकः शङ्खिनी तथा ॥
अपामार्गस्तथा पद्मं जातीपुष्पं च काञ्चनम् ।
चम्पकोशीरतगरास्तथा वै नागकेसरः ॥

पुन्नागं किङ्किरातं च द्रोणपुष्पं तथा शुभम् ।
शिंशिपोदुम्बरश्चैव जया मल्ली तथैवच ॥
पुष्पाणि यज्ञवृक्षस्य तथा बिल्वदलं शुभम् ।
कुसुम्भस्य च पुष्पाणि तथा वै कुङ्कुमस्य च ॥
नीलं च कुमुदं चैव तथा रक्तोत्पलानि च ।
सुरभीणि च पुष्पाणि स्थलजान्यम्बुजानि च ॥
गृह्णामि शिरसा देवि यो मे भक्त्या निवेदयेत् ।

उन्मत्तो धत्तूरकः । गिरिकर्णिका कुटजः । किङ्किरातः कुरण्टपुष्पम् । जया जयन्ती । याज्ञियवृक्षःपलाशः।नीलं नीलोत्पलम् ।

स्कन्दपुराणे,

चतुर्णां पुष्पजातीनां गन्धमाघ्राति शङ्करः ।
अर्कस्य करवीरस्य बिल्वस्य च बकस्य च ॥
लिङ्गपूरं तु यः कुर्यान्मम देवि दृढव्रतः ।
शतवर्षसहस्राणि दिव्यानि दिवि मोदते ॥

पूरणवस्तूनि देवीपुराणे,

पूरणं फलगन्धाद्यैः पुष्पाद्यैस्तु सुशोभनैः ।
कार्यं वित्तानुसारेण सर्वकामफलाप्तये ॥
अनेकाकारविन्यस्तैः कुसुमैः शिवमन्दिरे ।
यः कुर्यात्पर्वकालेषु विचित्रकुसुमोत्करैः ॥
अक्षयान् लभते कामानतिरस्कृतशासनः ।
पूजादिभक्तिविन्यासरचनादिषु सर्वतः ॥
फलमेवं समानेन ज्ञेयं वित्तानुसारतः ।
मालाभिर्वै सृजेद्वेदीं लिङ्गं संपूज्य यत्नतः ॥
यस्तु देव्याः स पुत्रः स्यादभ्यासे च स तिष्ठति ।

अभ्यासे सन्निधाने ।

स्वयमुत्पाद्य पुष्पाणि यः स्वयं पूजयेच्छिवम् ॥
तानि साक्षात् प्रगृह्णाति तद्भक्त्या सततं शिवः । इति ।
**बृहन्नारदीये,**
अपामार्गदलैर्यस्तु पूजयेद्गिरिजापतिम् ।
स याति शिवसारूप्यं चतुर्दश्यां न संशयः ॥
पञ्चाक्षरेण मन्त्रेण बिल्वपत्रैः शिवार्चनम् ।
करोति श्रद्धया युक्तः स गच्छेदैश्वरं पदम् ॥
बिल्वपत्रतिलाभ्यां यः शङ्करं पूजयेत्सकृत् ।
सर्वपातकयुक्तोऽपि शिवलोके महीयते ।
अथ मालाफलं वक्ष्ये शिवलिङ्गस्य पूजने ॥
नीलोत्पलसहस्राणां मालया पूजयेच्छिवम् ।
कल्पकोटिसहस्राणि शिवलोके महीयते ॥
करवीरासिताम्भोजबकुलासितपाटलैः ।
पुन्नागश्वेतमन्दारनागकेसरचम्पकैः ॥
मालाभिः पूजयेल्लिङ्गं शमीमालाभिरेव च ।

शमीमाला शमीपत्रमाला, पुष्पमाला वा ।

कल्पकोटियुतं कालं शिवलोके महीयते ।
तुलसीदलमालाभिः कुर्यात्पूजां शिवस्य यः ॥
गवां कोटिप्रदानेन यत्फलं तल्लभेन्नरः ॥ इति ।
प्रत्येकमुक्तपुष्पेषु दशसौवर्णिकं फलम् ॥
स्रग्ग्रथितेषु तेषु च द्विगुणं फलमिष्यते।
अशोकश्वेतमन्दारकार्णिकारबकानि च ।
करवीरार्कमन्दारशमीतगरकेसरम् ॥
पुष्पैरेतैर्यथालाभं यो नरः पूजयेच्छिवम् ।
स यत्फलमवाप्नोति तदेकाग्रमनाः शृणु ॥

सूर्यकोटिप्रतीकाशैर्विमानैः सार्वकामिकैः ।
दोधूयमानश्चमरैः शिवलोके महीयते ॥
पत्रजातिषु सर्वासु बिल्वपत्रं विशिष्यते ।
मन्दारमालतीजातीपद्मेभ्यो वरमुच्यते ॥
शुष्कैः पर्युषितैर्वापि बिल्वपत्रैस्तु यो नरः ।
पूजयंस्तु महादेवं मुच्यते सर्वपातकैः ॥
भुक्त्वेह विपुलान् भोगानन्ते शिवपुरं व्रजेत् ।
पञ्चाक्षरेण मन्त्रेण यो नरः पूजयेच्छिवम् ॥
अखण्डबिल्वपत्रैश्च शिवसायुज्यमाप्नुयात् ।

**अथ कालविशेषाः ।**

प्रदोषे जातीकुसुमैः पूजयन्निशि चम्पकैः ।
कदम्बकुसुमैः शम्भुमुन्मत्तैः सर्वसिद्धिभाक् ॥
कनकानि कदम्बानि रात्रौ देयानि शङ्करे ।
दिवा शेषाणि पुष्पाणि दिवारात्रौ च मल्लिका ॥
नन्द्यावर्त्तं शतावर्तं श्वेतार्कमुदये रवेः ।
करवीराणि पद्मानि द्रोणं चाह्नस्तु मध्यमे ॥
मल्लिका कृष्णधत्तूरं सायाह्ने बकुलं शुभम् ।
श्रीवृक्षोत्थैरखण्डैश्च त्रिकालं लिङ्गपूजनम् ॥

**देवीपुराणे,**

वैशाखे मासि कर्त्तव्या पूजा पाटलया सदा ।
सर्वान् कामानवाप्नोति ज्येष्ठे पद्मार्चनैस्तथा ॥
आषाढे बिल्वकल्हारैरीहितं लभते फलम् ।
नवमालिकया पूजा नभोमासि महाफला ॥
कदम्बैश्चम्पकैरेवं नभस्ये सर्वकामदा ।
पूजा चम्पकमालत्या इषेऽभ्युदयकारिणी ॥

शतपत्रिकया पूजा कार्त्तिके सार्वकामिका।
मार्गे नीलोत्पलैः पूजा सदा पुष्ये तु कुब्जकैः॥
माघे तु कुन्दकुसुमैर्मरुबकेण फाल्गुने।

कुन्दपुष्पस्य निषेधेऽपि माघे निषेधाभावः।

शतपत्रैस्तथा चैत्रे यः कुर्याच्छिवपूजनम्।
स लभेत्सर्वयज्ञानां सर्वदानफलं तथा॥

सदेति वाक्यात् मासं व्याप्य पूजा कार्या।

इति मासविशेषेण फलमुक्त्वा ऋतुविशेषेण पुष्पपूजाफलमुच्यते—

धत्तूरैश्चैव कह्लारैर्नीलोत्पलसुजातकैः।
शरत्काले महादेवे पूजिते सत्रमाप्नुयात्॥
सत्रं सत्रफलम्।
हेमन्ते तु ऋतौ प्राप्ते करवीरैः सुजातकैः।
नीलोत्पलैर्विशेषेण पूजिते पार्वतीपतौ॥
शतक्रतुफलं प्राप्य शिवलोके महीयते।
शिशिरे च ऋतौ प्राप्ते कर्णिकारैर्मनोहरैः॥
पूजिते तु विरूपाक्षे सर्वक्रतुफलं लभेत्।
वसन्ते तु ऋतौ प्राप्ते सर्वपुष्पैर्मनोरमैः॥
पूजिते तु महादेवे ह्यश्वमेधफलं लभेत्।
घर्मर्तौ तु ऋतौ प्राप्ते पुष्पैस्तु पाटलोद्भवैः।
पूजनात् शङ्करस्याशु सर्वान् कामानवाप्नुयात्॥
घनर्तौ तु समायाते बिल्वीपत्रैः कदम्बकैः।
योऽर्चयेत् पार्वतीशानं कैलासनिलयो भवेत्।
ऋताष्टतौ तु यः कुर्यात् दिव्यगन्धैः शिवालयम्।
स समस्तकुलोपेतः शिवतुल्यः प्रजायते॥

दिव्यगन्धैः पुष्पैर्वासितमिति शेषः ।

अथ निषिद्धपुष्पाणि ।

केशकीटापविद्धानि शीर्णपर्युषितानि च ।
स्वयम्पातितपुष्पाणि त्यजेदुपहतानि च ॥
बकुलैर्नार्चयेद्देवमपक्कं न निवेदयेत् ।
फलं क्वथितविद्धं च यत्नात् पक्कमपि त्यजेत् ॥
अत्यन्तप्रतिषिद्धानि कुसुमानि शिवार्चने ।
कदम्बं फल्गुपुष्पं च केतकं च शिरीषकम् ॥

सामान्यतः कदम्बकुसुमार्चनं यत्तत् वर्षर्तुविषयम् । अन्यदा तु निषेधः । तेन न पूर्वोत्तरवाक्यविरोधः ।

तिन्तिणी बकुलं कोष्ठं कपित्थं गृञ्जनं तथा ।
विभीतकं च कार्पासं श्रीपर्णीपत्रकण्टकम् ॥
शाल्मलीदाडिमीवर्ज्जं धातकी शङ्करार्चने ।
निर्गन्धान्युग्रगन्धीनि कुसुमानि विवर्जयेत् ॥
केतकी चातिमुक्तं च कुन्दो यूथी मदन्तिका ।
शिरीषसर्जबन्धूककुसुमानि विवर्जयेत् ॥
अलाभेऽपि च पुष्पाणां पत्राण्यपि निवेदयेत् ।
पत्राणामप्यलाभे तु फलान्यपि निवेदयेत् ॥
फलानामप्यलाभे तु तृणगुल्मौषधीरपि ।
औषधीनामलाभे तु भक्त्या भवति पूजितः ॥

अथ धूपाः ।

**शिवपुराणे,**

गुग्गुलं घृतसंयुक्तं शिवे यश्च निवेदयेत् ।
रुद्रलोकमवाप्नोति गाणपत्यं च विन्दति ॥

**भविष्ये,**

गुग्गुलं घृतसंयुक्तं साक्षात् गृह्णाति शङ्करः ।
मासार्धदानमात्रेण शिवलोके महीयते ॥
कृष्णपक्षे चतुर्दश्यां यः साज्यं गुग्गुलं दहेत् ।
स याति परमं स्थानं यत्र देवः पिनाकधृक् ॥
द्विसहस्रं पलानां तु महिषाक्षस्य गुग्गुलम् ।
दग्ध्वा गवाज्यसंमिश्रं शिवतुल्यः प्रजायते ॥
कृष्णागुरुमयो धूपस्तुषाग्निरिव काञ्चनम् ।
शोधयेत्पापसंयुक्तं पुरुषं नात्र संशयः ॥
कृष्णागुरुं सकर्पूरं धूपं दद्यान्महेश्वरे ।
नैरन्तर्येण मासार्द्धं तस्य पुण्यफलं शृणु ॥
कल्पकोटिसहस्राणि कल्पकोटिशतानि च ।
भुङ्क्ते शिवपुरे भोगान् तस्यान्ते च महीपतिः ॥
देवदारुसमेतं च सर्जश्रीवासकुन्दुरम् ।
श्रीफलं चाज्यसंमिश्रं दग्ध्वाऽऽप्नोति परां गतिम् ॥

सर्जः सालरसः। श्रीवासः सरलद्रुमः। कुन्दुरं शल्लकी। श्रीफलं बिल्वफलम् ।

एभ्यः सौगन्धिकं धूपं षट्सहस्रगुणोत्तरम् ।

सौगन्धिकं सोधेडाति प्रसिद्धमूलविशेषः ।

अगुरुं दशसाहस्रं सघृतं द्विगुणं भवेत् ।
प्रियं तु गुग्गुलं नित्यमाज्ययुक्तं विशेषतः ॥

स्कन्दपुराणे शिववाक्यम्,

द्वे सहस्रे पलानां तु माहिषाक्षस्य यो दहेत् ।
दिवि संवत्सरं पूर्णं स मे नन्दिसमो भवेत् ॥

भविष्यपुराणे,

दधित्थं घृतसंयुक्तं दग्ध्वा बिल्वमथापि वा ।

अग्निष्टोमस्य यज्ञस्य फलं विन्दति मानवः ॥

स्कन्दपुराणे शिववाक्यम्,

अमावास्यां तु यो नित्यं सघृतं गुग्गुलं दहेत् ।
क्षीरेण चैव संमिश्रं गुह्यमेतन्मम प्रिये ॥
सोऽच्युतं स्थानमाप्नोति मत्प्रसादान्न संशयः ।

अथ दीपाः ।

भविष्यपुराणे,

घृतदीपप्रदानेन शिवाय शतयोजनम् ।
विमानं लभते दिव्यं सूर्यकोटिसमप्रभम् ॥
यः कुर्यात् कार्त्तिके मासि शोभनां दीपमालिकाम् ।
घृतेन च चतुर्दश्याममावास्यां विशेषतः ॥
यावद्दीपस्य सङ्ख्या तु घृतेनापूर्य बोधिता ।
तावद्युगसहस्राणि रुद्रलोके महीयते ॥

अमावास्यासमभिव्याहारात् चतुर्दशी कृष्णैव । अमावास्यामिति द्वितीया सप्तम्यर्थे ।

दीपवृक्षं समुद्बोध्य शर्वस्यायतने शुभम् ।
पुण्यं सुमहदाप्नोति शिवलोकं स गच्छति ॥
शिरसा धारयेद्दीपं सर्वां रात्रिं शिवाग्रतः ।
ललाटे वाथ हस्ताभ्यां समुद्युक्तस्तथोरसि ॥
कल्पायुतशतं दिव्यं शिवलोके महीयते ।

स्कन्दपुराणे,

प्रदीपमालां यः कुर्यात् कार्तिके मासि वै मम ।
अवसाने तु दीपानां ब्राह्मणांस्तर्पयेच्छुचिः ॥
गाणपत्यं स लभते दीप्यते च रविर्यथा ।
मासव्यापकोऽयं प्रयोगो विशेषाश्चुनः ।

शिवपुराणे,
दीपवृक्षं च यो दद्याच्छुचिः प्रयतमानसः।
तेन दीपप्रदानेन सत्प्रख्यो याति चैव सः॥
अथ नैवेद्यम्।
शिवधर्मोत्तरे,
शालितण्डुलप्रस्थं तु कुर्यादन्नं सुसंस्कृतम्।
शिवाय तं चरुं दद्यात् चतुर्दश्यां विशेषतः॥
हरिद्राकृशरां शुद्धां पायसं यावकं त्वथ।
घृतं गुडाज्यसंमिश्रमेवमादिविकल्पितम्॥
यावन्तस्तण्डुलास्तत्र नैवेद्ये परिसङ्ख्यया।
तावद्युगसहस्राणि रुद्रलोके महीयते॥
हरिद्रासाधितां कृशराम्। एवमादि उक्तादन्यत्। गुडाज्यसंमिश्रमित्यर्थः।
तथा,
गुडखण्डघृतानां च भक्ष्याणां च निवेदने।
घृतेन पाचितानां च दत्त्वा शतगुणं फलम्॥
नन्दिकेश्वरपुराणे,
अथ भक्त्या शिवं पूज्य नैवेद्यमुपकल्पयेत्।
यद्यदेवात्मनः श्रेयस्तत्तदीशाय कल्पयेत्॥
स्कान्दे,
परिपक्वं सुसंमृष्टमाज्यसिक्तं सुसंस्कृतम्।
शिवाय मांसं दत्त्वा च शृणु यत् फलमाप्नुयात्॥
अशेषफलदानेन यत्फलं परिकीर्त्तितम्।
तत्फलं प्राप्नुयान्नित्यं सर्वं मांसनिवेदने॥
मज्जिकापानकानां च लक्षार्धं फलमिष्यते।

तदर्धं सलिलस्यापि वासितस्य निवेदने ॥
मातुलुङ्गफलादीनि पक्कानि विनिवेदयेत् ।
शिवाय तत्फलं तस्य तद्भक्ष्याणां निवेदने ॥
द्राक्षारम्भाफलादीनि अखण्डानि निवेदयेत् ।
खार्जूरिकान्नारिकेलं शिवे दत्त्वा शिवं लभेत् ॥

स्कन्दपुराणे,

दक्षिणायां तु यो मूर्त्तौ पायसं सघृतं शुभम् ।
निवेदयेद्द्रपमेकं स च नन्दिसमो भवेत् ॥
चरवो दशसाहस्रं यावकाश्च चतुर्गुणाः ।
शेषाश्च चरवः सर्वे यावकार्द्धेन संमिताः ॥

शिवपुराणे,

पायसं घृतसंयुक्तं महेशाय प्रयच्छति ।
न दुर्गतिमवाप्नोति स्वर्गं लोकं च गच्छति ॥
घृतपात्रमसङ्ख्येयमिह प्रेत्य च शाश्वतम् ।
असङ्ख्येयमसङ्ख्यातफलम् ।

अथ ताम्बूलफलादि ।

पञ्चसौगन्धिकोपेतं यस्ताम्बूलं निवेदयेत् ॥
शिवाय गुरवे चैव तस्य पुण्यफलं शृणु ।
सुगन्धिदेहः स्वोजस्वी सर्वावयवसुन्दरः ॥
वर्षकोटिशतं दिव्यं रुद्रलोके महीयते ।
संवीज्य तालवृन्तेन सुगन्धिजलसंयुजा ॥
वर्षकोटिसहस्राणि वायुलोके महीयते ॥
शिवस्य पुरतो दद्याद्दर्पणं चारु निर्मलम् ।
पर्यन्तशोभितं कृत्वा दिव्यैर्माल्यैः सचन्दनैः ॥
कल्पकोटिसहस्रं तु शिवलोके महीयते ।

भविष्यपुराणे,

पात्राणामुत्तमं पात्रं परं पात्रं महेश्वरः ।
पतन्तं त्रायते यस्मादतीव नरकार्णवात् ॥
शिवे दत्तं हुतं जप्तं बलिपूजानिवेदनम् ।
एकान्ततोऽनन्तफलं तद्भवेन्नात्र संशयः ॥
सर्वस्वमपि यो दद्यात् शिवे भक्तिविवर्जितः ।
न तेन फलभागी स्याद्भक्तिरेवात्र कारणम् ॥
श्वेतं महाध्वजं दत्त्वा कृत्वा वै गैरिकेण तु ।
स याति परमं स्थानं यत्र देवः पिनाकधृक् ॥
गैरिकेण रक्तं कृत्वा ।
ध्वजमालाकुलं कुर्यात् यः प्रान्ते तु शिवालयम् ।
महाध्वजमथो वापि दिवि दिक्षु निवेदयेत् ॥
कल्पायुतशतं दिव्यं मोदते दिवि देववत् ।

स्कन्दपुराणे,

छत्रं दद्याच्च यः सोऽपि दीप्यते तेजसा दिवि ।
यस्तु गावो हिरण्यं वा मम उद्दिश्य यो ददेत् ॥
तस्य कामदुघां पृथ्वीं ददामि निरुपद्रवाम् ।
वृषभं सम्प्रयच्छेत अन्नं कृशरमेव च ॥
रथेन वृषयुक्तेन प्रयाणं तस्य सर्वदा ।

भविष्यपुराणे,

शरच्चन्द्रांशुविमलं मुक्तादामोपशोभितम् ।
मणिदण्डमयं छत्रं दद्याद्वा काञ्चनादिकम् ॥
छत्रेण सपवित्रेण धार्यमाणेन शोभने ।
विमानशतसम्भोगैश्चिरं शिवपुरे वसेत् ॥
अथवा राज्यं काङ्क्षेत स देही कालपर्ययान् ।

*भुङ्क्ते समुद्रपर्यन्तामेकच्छत्रां स मेदिनीम् ॥*
अथवेति फलान्तरद्योतनार्थः ।
चामरं यः शिवे दद्यात् मणिदण्डविभूषितम् ।
हेमदण्ड्यादि रौप्यादि तस्य पुण्यफलं शृणु ॥
चामरासक्तहस्ताग्रदिव्यस्त्रीपरिवीजितः ।
महाभोगविमानस्थश्चिरं शिवपुरे वसेत् ॥
यो महाशृङ्खलायुक्तां महाघण्टां महास्वनाम् ।
कांस्यलोहमयीं वापि बध्नीयाच्च शिवालये ॥
घण्टाकर्णगणः श्रीमान् शिवस्यातीव वल्लभः ।
स तत्तुल्यबलो भूत्वा शिवलोके महीयते ॥
भेरीमृदङ्गमुरजदुन्दुभीपटहादिकम् ।
वंशकांस्यादिवादित्रं यः शिवाय निवेदयेत् ॥
युगायुतशतं दिव्यं शिवलोके महीयते ।
महास्वनं तु यो दद्यात् शङ्खयुग्मं शिवालये ॥
युगकोटिशतं साग्रं शिवलोके महीयते ।
वितानं सितपद्माभं मध्ये कमलभूषितम् ॥
विचित्रमेकवर्णं वा नववस्त्रे विकल्पितम् ।
किङ्किणीरवसंयुक्तं कम्बुकण्ठोपशोभितम् ॥
लम्बकैः सूत्रदामैश्च घण्टाचामरभूषितम् ।
शिवस्योपरि यः कुर्यात् पुरतो वापि कल्पयेत् ॥
रुद्रवत्सर्वलोकेषु युगकोटिं स मोदते ।
शिवस्योपरि यः कुर्यात् सर्वरत्नोपशोभितम् ॥
मण्डपं मौक्तिकं कुर्यात् तस्य पुण्यफलं शृणु ।
आभूतसंप्लवं यावत् वसेच्छिवपुरं सुखी ॥
शिवस्यायतने कुर्यात् वस्त्रशोभां तु यो नरः ।

दुकूलपट्टनेत्राद्यैर्वस्त्रैर्वा वर्णकान्वितैः ॥
वस्त्रादिपट्टतन्तूनां यावत्संख्या विधीयते ।
तावद्युगसहस्राणि रुद्रलोके महीयते ॥
शिवयज्ञोपकरणमल्पं वा यदि वा बहु ।
दत्त्वा वित्तानुसारेण शिवलोके महीयते ॥
दद्यात्कृष्णतिलानां च प्रस्थमेकं च मागधम् ।
अर्चयित्वा विधानेन पौर्णमास्यां विशेषतः ॥
युगायुतसहस्राणि रुद्रलोके महीयते ।
अर्चयित्वा शिवमिति विशेषतः ।
यो गां पयस्विनीं दद्यात् तरुणीं रूपसंयुताम् ।
शिवाय तेन दत्तं स्याज्जगत्सर्वं चराचरम् ॥
वृषभं परिपूर्णाङ्गमुदाराङ्गं शशिप्रभम् ।
गोपतिं नीलवर्णं वा यथेष्टं विनिवेदयेत् ॥
शिवाग्रस्नानकार्यार्थं सुरूपां च पयस्विनीम् ।
कुलीनां कपिलां दत्त्वा दत्तं भवति शाश्वतम् ॥
शिवस्य होमार्थं स्नानार्थं चेति ।
कर्मसाध्येन ये दद्युर्मूल्येनापि शिवालये ।
तेऽपि पापा दिवं यान्ति कर्मणा पापवर्जिताः ॥
कूपारामप्रपाद्यैस्तु शिवायतनकर्मणि ।
उपयुक्तानि भूतानि खननात् पाटलादिषु ॥
कामतोऽकामतो वापि स्थावराणि चराणि च ।
शिवं यान्ति न सन्देहः प्रसादात्परमेष्ठिनः ॥
क्रोशमात्रं परं क्षेत्रं शिवस्य परमात्मनः ।
देहिनां तत्र पञ्चत्वं शिवसायुज्यकारकम् ॥
मनुजस्थापिते लिङ्गे क्षेत्रमानमिदं स्मृतम् ।

स्वयम्भूते सहस्रं स्यादार्षे चैव तदर्धकम् ॥
तस्मादावसथं कुर्याच्छिवक्षेत्रसमीपतः ।
शिवलिङ्गसमीपस्थं यत्तोयं पुरतः स्थितम् ॥
शिवगङ्गेति तज्ज्ञेयं तत्र स्नात्वा दिवं व्रजेत् ।
यः कुर्याद्दीर्घिकां वापि कूपं वापि शिवालये ॥
त्रिः सप्तकुलसंयुक्तः शिवलोके महीयते ।
स्कन्दपुराणे,
दद्यात्कृष्णतिलांश्चैव तथा सिद्धार्थकांश्च ह ।
यो मे देवि सदा भक्त्या सोऽपि नन्दिसमो भवेत् ॥
चकारद्वयायाद्दाने समुच्चयः ।
काञ्चनं त्रुटिमात्रं वा यो दद्याद्बहुधा मम ।
तस्य हैमवते शृङ्गे ददामि स्थानमुत्तमम् ॥
यो मे गां तु हिरण्यं वा दद्यादविमनाः प्रिये ।
लोकान् ददाम्यहं तस्मै सर्वकामसमन्वितान् ॥
रत्नावलिं तु यो दद्यात् ब्राह्मणः क्षत्रियोऽथ विट् ।
शूद्रः स्त्री वा महासौख्यं मम लोके समश्नुते ॥
एतेन सङ्करजातेरनधिकारः ।
गोचर्मद्वयमात्रां वा यो मे दद्याद्वसुन्धराम् ।
स मे पुरं समासाद्य गणैश्च सह मोदते ॥
यो मे पुण्यफलं दद्यादात्मना पूर्वसञ्चितम् ।
सोऽनन्तफलमाप्नोति पूज्यते च त्रिविष्टपे ॥
अनन्तं फलं दत्तपुण्यफलस्य ।
योऽन्नदानं चतुर्दश्यां कृष्णस्य कुरुते मम ।
रथेन वृषयुक्तेन मम लोके स मोदते ॥
कृष्णस्य कृष्णपक्षस्य ।

महामाल्योपहारैश्च यो मां जप्यैश्च पूजयेत् ।
ददामि ब्रह्मलोकस्य वासं वास्तुसुपूजितम् ॥
उपहारैर्गन्धादिभिः ।
स्नातो यः पूर्वसन्ध्यायां सदा मामभिगच्छति ।
स मृतो यक्षराजस्य समो भवति वीर्यवान् ॥
ये मे भक्ताः सदा चैव साङ्ख्ययोगविशारदाः ।
गच्छन्ति मम ते लोकं तमो भित्त्वाशु दुर्भिदम् ॥
न शक्योऽस्मि तमोयुक्तैर्द्रष्टुं मुनिगणैरपि ।
ध्यानिनो नित्ययुक्ताश्च देवि पश्यन्ति मां बुधाः ॥

## अथ घृतकम्बलदानम् ।

भविष्यपुराणे,
आलिङ्गपीठपर्यन्तं यो दद्यात् घृतकम्बलम् ।
घृतेन रूपकं रम्यं माघ्यां शम्भोर्महात्मनः ॥
मन्वन्तरं शतं साग्रं रुद्रलोके महीयते ।
रूपकं लिङ्गवेदिकानुकारि ।
रूपं पिष्टमयं कृत्वा त्रिनेत्रं रत्नभूषितम् ।
यज्ञोपवीतसंयुक्तं हेमपात्रे विशेषतः ॥
रूपं शिवप्रतिमाम् ।
दन्तेषु मौक्तिकं न्यस्य प्रवालमधरोष्ठयोः ।
दद्याद्वज्रं च नेत्राभ्यां वैदूर्यं चाप्यसम्भवे ॥
हेमरूप्यं च हस्ताभ्यां ताम्रं पादतले तथा ।
अण्डजैर्ललितैर्वस्त्रैर्विचित्रैः परिवेष्टयेत् ।
अण्डजैः कृमिकोशोत्थैः ।
विविधैर्भक्ष्यभोज्याद्यैर्लिङ्गपूजां प्रकल्पयेत् ।
भोजयेच्छिवभक्तांश्च विप्रान् भक्त्या च पूजयेत् ॥

प्रीयतां मे महादेवो भक्तान् क्षमापयेद्द्विजान् ।
तेनैव सार्द्धं विप्रेन्द्र तद्रूपं च शिवालये ॥
नीत्वा समर्पयेद्देव्यां शिवलिङ्गसमीपतः ।
सर्वयज्ञफलं प्राप्य सर्वदानफलानि च ॥
सुरूपो रूपदानेन शिवलोके महीयते ।

इति घृतकम्बलदानम् ।

अथ प्रतिकृतिनिवेदनम् ।

स्कन्दपुराणे,

ईश्वर उवाच ।

दद्याद्धिरण्मयीं यो मे कृत्वा प्रतिकृतिं स्विकाम् ।
सर्वगन्धरसैर्युक्तां निर्यासैश्चैव संस्कृताम् ॥
भक्ष्यभोज्यैश्च विविधैः कृष्णपक्षे चतुर्दशीम् ।
पूर्वदक्षिणयोश्चास्य पश्चिमोत्तरयोस्तथा ॥
पार्श्वे च हरितालं च कृष्णागुरु मनःशिलाम् ।
चन्दनं चैव दद्याद्वै यावत्सङ्ख्यन पूजितम् ॥
तस्य पुण्यफलं देवि शृणु यन्मत्तकाशिनि ।
सर्वव्याधिविनिर्मुक्तस्तथा निष्कल्मषश्च ह ॥
कल्पकोटिशतान्यष्टौ दिवि भुक्त्वा महासुखम् ।
इह लोके सुखी जातो मामेव प्रतिपद्यते ॥

चतुर्दशीमिति चतुर्दश्याम् । पार्श्वे सन्निधाने । सर्वगन्धः परिभाषितः ।

इति प्रतिकृतिनिवेदनम् ।

अथ महास्नानम् ।

कालिकापुराणे,

कार्त्तिक्यामथ वैशाख्यामयनादिषु पर्वसु ।

दत्त्वा दीपान् समुद्बोध्य लिङ्गस्याग्रे बलिं ततः ॥
भूतानां देवदेवस्य राजराजाधिपो भवेत् ।
स व्रती देवमामन्त्र्य स्वपेद्भूमौ हरं स्मरन् ॥
उपालिप्य गृहं गत्वा निराहारो निशि स्वपेत् ।
अपरेऽहनि पूर्वाह्णे गत्वा तत्रैव मन्दिरे ॥
कारयेत्तु महास्नानं हराय विधिना नृप ।
पञ्चविंशपलं लिङ्गे अभ्यङ्गं कारयेदथ ॥
घृतस्येति शेषः ।
शिवस्य सर्पिषा स्नानं प्रोक्तं पलशतेन वै ।
तावता मधुना चैव दध्ना चैव ततः पुनः ॥
तावतैव च क्षीरेण पञ्चगव्येन वा पुनः ।
भूयः सार्द्धसहस्रेण पलानामैक्षवेण च ॥
क्रमेण कारयेत्स्नानं भक्त्या चोष्णाम्बुना पुनः ।
ऐक्षवेण इक्षुरसेन ।
शीताम्बुना तथोद्वर्त्य वस्त्रपूतेन मन्त्रवित् ।
स्नापयेद्भक्तितो भूयो गन्धमन्त्रान्वितेन वै ॥
गन्धमन्त्रान्वितेन सुरभिद्रव्यवता मन्त्राभिमन्त्रितजलेनेत्यर्थः।
विधिना स्नाप्य तोयेन लिङ्गं रोचनया लिपेत् ।
कुष्ठकुङ्कुमकर्पूरचन्दनागुरुयुक्तया ॥
लेपयित्वा ततो लिङ्गमापीठान्तं घनं शुभम् ।
आपीठं पीठपर्यन्तम्, घनं निविडम्, शुभं मनोहरम्, क्त्वान्तविशेषणमेतत्पदत्रयं लिङ्गविशेषणं वा ।
नीलोत्पलसहस्रेण मालां बध्वा प्रपूजयेत् ।
अलाभे तु सहस्राणामर्धार्धेनापि पूजयेत् ॥
उत्पलानामलाभे तु पत्रैर्वा श्रीतरोर्यजेत् ।

श्रीतरोर्बिल्वस्य ।
पद्मैर्वा चम्पकैर्वापि जात्या पाटलयापि वा ।
पुन्नागैः कर्णिकारैश्च श्वेतमन्दारजैरपि ॥
दमनैकैर्मरुबकैः शमीशुक्लार्कनागरैः ।
नागरं मुस्तकम् ।
यथालाभं च पत्रैर्वा निर्ग्रन्थ्य गन्धलोडितैः ।
प्रपूज्य कारयेद्भक्त्या सुगन्धं पुष्पमण्डपम् ॥
गुग्गुलं चाज्यसंयुक्तमगुरुं वा सितं दहेत् ।
सम्पूज्य गौरीभर्त्तारं गीतवादित्रनिःस्वनैः ॥
ततो नीराजनं दीपैः कार्यं विंशतिसंमितैः ।
सर्षपैर्दधिभक्तैश्च दूर्वागोरोचनाक्षतैः ॥
गन्धपुष्पोदकं दद्याद्भूयः साञ्चिन्त्य शङ्करम् ॥
शातकुम्भमयं पद्ममष्टपत्रं सकर्णिकम् ।
ध्यात्वा निवेदयेन्मूर्ध्नि लिङ्गस्य कुसुमैः सह ।
सूक्ष्मवस्त्रयुगं पीतं श्वेतं वा पट्टसम्भवम् ॥
चामरं दर्पणं चैव दीपवृक्षं प्रदापयेत् ।
धूपं साधारणं चैव सघटं पूर्णमेव च ॥
वितानकध्वजौ दद्यात् किङ्किणीरवकान्वितौ ।
अथाष्टाभिः क्षितिं पीड्य अङ्गैर्भक्त्या तु दण्डवत् ॥
दण्डवदष्टाङ्गप्रणामः कार्यः ।
ततः किञ्चित् पठेत् स्तोत्रं शाङ्करं भवशङ्करम् ।
प्रदक्षिणमतो गच्छेच्छनैर्निर्माल्यवर्जकः ॥
प्रणम्योच्चैः पुनः पश्चान्नैवेद्यं च निवेदयेत् ।
दीनान्धकृपणांश्चैव आगतांश्च बुभुक्षितान् ॥
तर्पयेदन्नदानेन सर्वांस्तान्भक्तगोचरान् ।

नक्तगोचरान् रात्रावप्युपस्थितान् ।
कुर्यादेतन्महास्नानं विधिनाऽनेन धर्मवित् ।
कारयेद्यः शिवे भक्त्या तस्य पुण्यफलं शृणु ॥
समुद्धृत्य शतं साग्रं कुलानां पापवर्जकः ।
भवादिब्रह्मलोकान्तं भुक्त्वा लोकानशेषतः ॥
व्रजेत् क्रीडाप्रयत्नेन विमाने चाऽमरैर्युतः ।
भुक्त्वा यथेप्सितान् भोगान् शिवसायुज्यतां व्रजेत् ॥
मायावितानमुत्सृज्य तदन्ते योगमाप्नुयात् ।
केवलेनाप्यथाज्येन दध्ना गव्यने चैव हि ॥
पयसा पञ्चगव्येन मधुनेक्षुरसेन च ।
यः कारयेन्महास्नानं विधिनानेन यन्त्रितः ॥
यन्त्रितो यमवान् ।
सोऽपि तेनैव मार्गेण गमिष्यति परं पदम् ।
विधिनानेन निःस्वो यः स्नानं तोयेन कारयेत् ॥
नराणां त्रिंशतिं यावत् सोऽपि यास्यति तत्पदम् ।
पूर्वपूरुषाणां विंशतिमुद्धृत्येत्यर्थः ।
अन्तरा क्षीयते वस्तु अपूर्णे नियमे तथा ॥
सोऽपि गच्छेत्पदं तत्तु शिवभक्त्याप्यतन्द्रितः ।
एवमेवहि धर्मस्य राशिर्मन्त्रविवर्जितः ॥
मन्त्रयुक्तोऽर्चयेद्यस्तु नातस्तुल्योऽथ धर्मवान् ।

इति महास्नानम् ।

अथ घृताभिषेकः ।

घृताभिषेकं यः कुर्यादहोरात्रं शिवस्य च ।
सूक्ष्मद्वारणभाण्डेन पुष्यमासे द्विजोत्तम ॥
गीतनृत्योपहारेण शङ्खवादित्रनिःस्वनैः ।

कुर्याज्जागरणं तत्र प्रदीपाद्युपशोभितम् ॥
समस्तपापनिर्मुक्तः समस्तकुलवर्धनः ।
युक्तः शिवपुरे नित्यं मोदते शिववत् सुखी ॥
युक्तो योगवान् ।
ग्रहणे विषुवे चैव पुण्येषु दिवसेषु च ।
घृताभिषेकं यः कुर्यान्महापुण्यमवाप्नुयात् ॥

इति घृताभिषेकः ।

अथ घृतधारा ।

कालिकापुराणे,

अथाभ्यर्च्य सुगन्धेन विन्यसेद्धेमपङ्कजम् ।
प्रत्यहं वाहयेद्धारां यस्तु वै लिङ्गमूर्धनि ॥
हेमपङ्कजं लिङ्गमूर्द्धनि विन्यस्येत्यर्थः ।
उत्तरायणमासाद्य ज्ञात्वा सङ्क्रमणं रवेः ।
तदन्ते विधिवत्पूज्य दत्त्वा चैव उपस्करम् ॥

तदन्ते उत्तरायणसमयान्ते रवेः संक्रमणं दक्षिणायनरूपं ज्ञात्वेत्यर्थः । मकरसङ्क्रमणमारभ्य मकरसक्रान्तिसमाप्तिपर्यन्तमिति केचित् ।

गृहं प्राप्य ततो भक्त्या ब्राह्मणान् यतिभिः सह ।
सम्भोज्य दक्षयित्वा च क्षमाप्य च विसर्जयेत् ॥
दीनान्धदुःखिनानां च कल्पयेच्चानिवारणम् ।
कारुण्यादन्नदानं च अक्षयं स्वस्तिदं स्मृतम् ॥
कीर्तिं लोकेऽतुलां प्राप्य भुक्त्वा भोगानकल्मषान् ।
प्राप्नुयात्परमं स्थानं रुद्रसायुज्यलक्षणम् ॥
घृताभिषेकं यः कुर्यादहोरात्रमुपोषितः ।
विधूय सर्वपापानि शिवलोके महीयते ॥

इति घृतधारा ।

अथ शिवजागरः ।

कालिकापुराणे,

अतः परं प्रवक्ष्यामि पावनं धर्ममुत्तमम् ।
मोक्षदं च तथा क्लेशाद्भूरिभोगदमेव च ॥
आदाय कलशान् गौरान् शतमर्द्धमथापि वा ।
तस्याप्यर्द्धं तदर्द्धं वा भूयश्च धनमानतः ॥

धनमानतो वित्तानुसारतः ।

कार्त्तिक्यां सुप्रभाते तु हरं स्नाप्य घृतादिभिः ।
समालभ्य न्यसेन्मूर्द्धिन सौवर्णमथ पङ्कजम् ।

घृतादिभिर्महास्नानोक्तद्रव्यैः स्नापयित्वा चन्दनादिभिः समालभ्य ।

सुगन्धिभिस्ततः पुष्पैरभ्यर्च्य गुग्गुलं दहेत् ।
नैवेद्यं च पुनर्दत्त्वा वलिं बाह्ये विनिक्षिपेत् ॥

बाह्ये आगतनस्य ।

वितानं दीपमालां च वस्त्रयुग्मं तथा ध्वजम् ।
धूपोक्षेपं च घण्टां च दत्त्वा देवाय शम्भवे ॥
प्रदक्षिणं ततः कुर्याद्दण्डवत्तस्य चैव हि ।
दक्षिणे मन्दिराग्रे वा पश्चिमे वाथ सर्वतः ॥
उपलभ्य शुभे देशे सोदकांश्चार्च्य यत्नतः ।
चन्दनाक्षतपुष्पैश्च तान् घटान् स्थापयेद्बुधः ॥
चूताश्वत्थमुखान् गौरान् कृत्वा तेषु निवेदयेत् ।

चूताश्वत्थपल्लवमुखानित्यर्थः । गौरान् चूर्णादिनोपलिप्तान् । तेषु घटेषु ।

शरावानक्षतैः पूर्णान् सहिरण्यांश्च सर्वतः ।

दीपान् प्रज्वालयेत्तत्र विचिन्त्य हृदि शङ्करम् ॥
ततस्तत्रोपविष्टस्तु जागरं परिकामयेत् ।
भूयः सूर्योदये स्नातः स्नपनं कुसुमादिकम् ॥
निवेद्य देवदेवाय गृहं गच्छेत् हरं स्मरन् ।

स्नपनं स्नानोपकरणं घृतादिकं, कुसुमादिकं कुसुमगन्धधूपादिकं निवेद्येत्यर्थः ।

गत्वा हंसं समभ्यर्च्य पञ्चगव्यं पिबेत्ततः ।

हंसं शिवं प्रकृतत्वात् ।

श्रुतिरपि,

हंस हंसेति यो ब्रूयाद्धंसो नाम सदाशिवः। इति ।

व्रतिभिर्ब्राह्मणैः सार्द्धं तुष्टो भुञ्जीत वाग्यतः ॥
ततस्तान् दक्षयित्वा तु सर्वान् वित्तानुसारतः ।
पुण्यस्य च पुनर्भूत्वा क्षमाप्य च विसर्जयेत् ॥
विधिनानेन यश्चाब्दान् द्वादशोपवसेन्नरः ।
देवभुञ्जान् प्रभुञ्जानः परं धाम प्रयाति सः ॥
करोत्यारात्रिकं यस्तु बहुमानपुरः सरः ।
प्राप्य ज्ञानं प्रयाणान्ते गमिष्यत्यक्षयं पदम् ॥

इति शिवजागरः ।

## अथ चातुर्मासीपवित्रम् ।

तत्र भविष्यपुराणे,

पौर्णमास्यामाषाढस्य शिवं सम्पूज्य यत्नतः ।
उपवीतं शिवे दद्यात् शिवभक्तांश्च पूजयेत् ॥
पुनरेव तु कार्त्तिक्यां पूजयित्वा क्षमापयेत् ।
यतीनां भोजनं दद्यात्तत्र वस्त्रादिकान्वितम् ॥
यः कुर्याद्विधिवद्भक्त्या चातुर्मासीपवित्रकम् ।

कल्पकोटिशतं साग्रं रुद्रलोके महीयते ॥

इति चातुर्मासीपवित्रकम्।

### अथ रथयात्रादिफलम्।

तत्र भविष्यपुराणे, विष्णुरुवाच

पौषे मासि सिते पक्षे अष्टम्यां विधिपूर्वकम्।
पूजयित्वा महादेवं गन्धपुष्पोपचारतः ॥

विधिपूर्वकमिति पूजाविहितेतिकर्त्तव्यतया।

महापाशुपतान् विप्रान् शैवांश्च विधिवद्द्विज।
भोजयित्वा यथान्यायं देवमारोहयेद्रथम् ॥
दीनान्धकृपणान् सर्वान् ब्राह्मणानपि यत्नतः।
भोजयेत्पूजयेद्भक्त्या नानाभक्ष्यैर्विधानतः ॥
तिलान् पलाशसमिधो जुहुयात् पावके तथा।
कृत्वा तु सघृतं वीर देवमारोहयेद्रथम् ॥

सघृतमिति जुहुयादितिक्रियाविशेषणम्। तेन सघृतान् तिलान् जुहुयात् इत्यर्थः।

कुर्यात्प्रजागरं नित्यं नानाप्रेक्षणकैर्द्विज।
परिव्राजकवृन्दैश्च नृत्यमानैश्च सर्वतः ॥

परिव्राजकाः शिवव्रतिनः।

एवं महोत्सवं कृत्वा यामिन्यर्द्धे वरानने।
कृत्वाष्टम्यां ततः पौषे देवं वै भ्रामयेत्पुरम् ॥

अष्टम्यां शुक्लायाम्।

नानाप्रेक्षणकैर्विप्र ब्रह्मघोषैश्च कृत्स्नशः।
वृन्दैः पाशुपतानां च नृणां सङ्घैः समन्ततः ॥
रथैर्विप्र ध्वजैश्छत्रैः किङ्किणीरवकान्वितैः।
वितानध्वजमालाभिर्घण्टाचामरदर्पणैः ॥

शङ्खभेर्यादिनिर्घोषैर्गेयवंशसमाकुलैः ।
लेप्यदारुमयैर्यन्त्रैर्मातृरक्षोगणादिभिः ॥
लेप्यदारुमयैरिति लेप्यमयैर्दारुमयैः ।
उद्यानयानपानाद्यैर्महोत्सवसमन्वितम् ॥
महाजनपदाकीर्णं यथाविभवविस्तरम् ।
महोत्सवसमन्वितमिति पुरविशेषणम् ।
स सर्वदानपुण्यानि सर्वतीर्थफलानि च ।
अत्युग्रतपसां पुण्यं सर्वयज्ञफलानि च ॥
लभते हि नरः श्रीमान् शिवयात्राप्रवर्त्तनात् ॥
जम्बूद्वीपाधिपः श्रीमान् तस्यान्ते जायते पुनः ।
यः कुर्यात्पर्वकाले तु महीमार्गप्रवर्त्तनम् ॥
महीमार्गप्रवर्त्तनमिति रथमार्गपरिशोधनम् ।
शिवस्य रथयात्रायां दिनरात्रिपरिभ्रमात् ।
स दिव्ययानमारूढः किङ्किणीरवनादितम् ॥
प्रयाति लोकमचलं गिरिराजस्य वल्लभः ।

इति रथयात्रा ।

अथ कालविशेषात् पूजने फलविशेषः ।

कालिकापुराणे,

व्यतीपाते दिनच्छिद्रे चन्द्रसूर्यग्रहेषु च ।
युगादौ विषुवे क्रान्तौ पुण्ययोगे च सर्वशः ॥
यत्र यत्रार्च्यते देवो विषमाक्षो वृषध्वजः ।
तत्र तत्राक्षयं पुण्यमिति प्राह पितामहः ॥
अक्षयं आभूतसंप्लवस्थायि ।

अथ प्रदक्षिणविधिः ।

बृहन्नारदीये,

शिवं प्रदक्षिणीकृत्य सव्यासव्यविधानतः ।
यत्फलं समवाप्नोति तन्मे निगदतः शृणु ॥
राजन् प्रदक्षिणैकेन मुच्यते ब्रह्महत्यया ।
द्वितीयेनाधिकारित्वं तृतीयेनेन्द्रसम्पदम् ॥
प्राप्नोतीति शेषः । तत्सङ्ख्या च
एकं गणाधिपे दद्याद्द्वे सूर्ये त्रीणि शङ्करे ।
चत्वारि केशवे दद्यात्सप्ताश्वत्थे प्रदक्षिणाः ॥
तद्विधानमुक्तं तत्रैव
पदान्तरे पदं न्यस्य करौ चलनवर्जितौ ।
स्तुतिर्वाचि हृदि ध्यानं चतुरङ्गं प्रदक्षिणम् ॥
स्थाने चण्डस्य सङ्कल्प्य वृषभादौ प्रदक्षिणम् ।
सव्ये सव्यं विजानीयादपसव्येऽपसव्यकम् ॥
वृषे चण्डे वृषे भूयः सोमसूत्रे पुनर्वृषे ।
चण्डे च सोमसूत्रे च पुनश्चण्डे पुनर्वृषे ॥
नवप्रदक्षिणोपेतं यः कुर्यात्तु प्रदक्षिणम् ।
त्रिंशत्सहस्रसङ्ख्याकप्रदक्षिणफलं लभेत् ॥

अत्र चण्डस्थानमैशानी दिक् । वृषस्थाने प्रदक्षिणं गत्वा वृषत आरभ्य अप्रादक्षिण्येन चण्डस्थानं गच्छेत् । ततः वृषं गच्छेत् । ततः प्रादक्षिण्येन सोमसूत्रं उत्तरदिक् तत्र गच्छेत्, प्रणालावधि । ततः अप्रादक्षिण्येन पुनर्वृषं गच्छेत् । ततस्तथैव चण्डं गच्छेत् । ततः प्रादक्षिण्येन सोमसूत्रं गच्छेत् । ततः पुनरप्रादक्षिण्येन चण्डं गच्छेत् । पुनर्वृषं गच्छेदिति नवसु स्थानेषु प्रदक्षिणकरणम् । एवं नवविधत्वं प्रदक्षिणायाः ।

शम्भोः प्रदक्षिणं कुर्वन् सोमसूत्रं न लङ्घयेत् ।
लङ्घिते त्वेकमेव स्यादनुल्लङ्घेऽयुतत्रयम् ॥

अपसव्यं यतिः कुर्यात्सव्यं तु ब्रह्मचारिणः ।
सव्यापसव्यं गृहिणो नित्यं शम्भोः प्रदक्षिणम् ॥
तृणैः काष्ठैस्तथा पर्णैः पाषाणैर्लोष्ठकादिभिः ।
अन्तर्द्धानं पुनः कृत्वा सोमसूत्रं तु लङ्घयेत् ॥
प्रासादविस्तारसमानसूत्रं सोमस्य सूत्रं दिशि सोमसूत्रम् ।
सूत्राद्बहिर्लङ्घनतो न दोषः स्याद्दोष आभ्यन्तरलङ्घनेन ॥
सोमसूत्रद्वयं यत्र यत्र वाविष्णु मन्दिरम् ।
अपसव्यं न कुर्वीत कुर्यादेव प्रदक्षिणम् ॥
प्रदक्षिणत्रयं कृत्वा नमस्कारैश्च पञ्चभिः ।
पुनः प्रदक्षिणं कृत्वा शिवलोके महीयते ॥
एकहस्तनमस्कारादेकस्माच्च प्रदक्षिणात् ।
अन्धकारे नमस्कारादब्दपुण्यं विनश्यति ॥

### अथ नमस्कारविधिः ।

**बृहन्नारदीये,**

प्रणम्य दण्डवद्भूमौ नमस्कारेण योऽर्चयेत् ।
स यां गतिमवाप्नोति न तां क्रतुशतैरपि ॥

**भविष्यपुराणे,**

जानुभ्यां चैव पाणिभ्यां शिरसा च विचक्षणः ।
कृत्वा प्रणामं देवेशे सर्वान् कामानवाप्नुयात् ॥
तीर्थकोटिसहस्राणि तीर्थकोटिशतानि च ।
महादेवप्रणामस्य कलां नार्हन्ति षोडशीम् ॥

**स्कन्दपुराण,**

कृते पापेऽनुतापो वै यस्य पुंसः प्रजायते ।
प्रायश्चित्तं तु तस्यैकं शिवसंस्मरणं परम् ॥
तत्र मन्त्राः—

प्रणमामि जगन्नाथं प्रणतार्त्तिप्रणाशनम् ॥
प्रणवागोचरं देवमीशानं प्रणवात्मकम्।
जगद्रूपमयोनिं तं सृष्टिस्थित्यन्तकारिणम् ॥
ऊर्ध्वरूपं विरूपाक्षं विश्वरूपं नमाम्यहम्।
आदिमध्यान्तरहितमनन्तमजमव्ययम् ॥
यमामनन्ति योगीन्द्रास्तं वन्दे पुष्टिवर्द्धनम्।
नमोऽस्तु लोकनाथाय वञ्चते परिवञ्चते ॥
नमोऽस्तु नीलकण्ठाय पशूनां पतये नमः॥
नमः कल्मषनाथाय नमो मीढुष्टमाय च।
नमो रुद्राय देवाय कद्रुद्राय प्रचेतसे ॥
नमः पिनाकहस्ताय शूलहस्ताय ते नमः।
नमश्चैतन्यरूपाय पुष्टानां पतये नमः ॥
नमस्ते सर्वभूताय घण्टाहस्ताय ते नमः।
नमः पञ्चास्यदेवाय क्षेत्राणां पतये नमः ॥
नमः कपालहस्ताय पाशमुद्गरपणये।
नमः समस्तपापानां मुष्णतां पतये नमः ॥
नमो गुणाधिदेवाय निर्गुणाय गुणात्मने।
नमो गणाधिदेवाय गणानां पतये नमः ॥
नमो हिरण्यगर्भाय हिरण्यपतये नमः।
हिरण्यरेतसे तुभ्यं विश्वरूपाय वै नमः ॥
नमो ध्यानस्वरूपाय नमस्ते ध्यानसाक्षिणे।
नमस्ते ध्यानसंस्थाय अहिर्बुध्न्याय ते नमः ॥
येनेदं विश्वमखिलं चराचरविराजितम्।
प्रधानपुरुषं चैवमभ्राद्वृष्टिरिवाजनि ॥
स्वप्रकाशं महात्मानं परं ज्योतिः सनातनम्।

यमामनन्ति तत्त्वज्ञाः सवितारं नृचक्षसे ॥
उमाकान्त विरूपाक्ष नीलकण्ठ सदाशिव ।
मृत्युञ्जय महाभाग यद्भद्रं तन्न आसुव ॥
कपर्दिने नमस्तुभ्यं नीलग्रीवाय ते नमः ।
कृशानुरेतसे तुभ्यं शिवो नः सुमना भव ॥
यतः समुद्राः सरितोऽद्रयश्च गन्धर्वयक्षाप्सरासिद्धसङ्घाः ।
यतश्च चेष्टां कुरुते हि जन्तवः स नो देवः शुभमासंविशन्तु ॥
ध्यायन्ति यं योगिजना विशुद्धं सर्वान्तरात्मानमनूपमेयम् ।
स्वतन्त्रमेकं गुणवन्निधानं नमामि भूयः प्रणमामि भूयः ॥
य इदं शङ्करस्तोत्रं सागरेण विनिर्मितम् ।
सर्वान् कामानवाप्नोति त्रिसन्ध्यं यः पठेन्नरः ॥

इति नमस्कारविधिः ।

इति सदाशिवपूजा ।

## अथ सूर्यपूजा

सा च पञ्चायतनादिपूजायामादौ

तथाच कालिकापुराणे,

शिवं भास्करमग्निं च केशवं कौशिकीमपि ।
मनसाऽनर्चयन् याति देवलोकादधोगतिम् ॥
वरं प्राणपरित्यागः शिरसो वाऽपि कर्तनम् ।
न त्वसम्पूज्य भुञ्जीत कौशिकीं केशवं शिवम् ॥

अपि, मनसा योजनीयस्तेन मनसापि अनर्चयन् देवलोकादधोगतिं याति । पूजासामग्र्यभावे मानसमपि पूजनं कार्यमिति तात्पर्यम् । अत्र पाठक्रमो न विवक्षितः । वचनान्तरेण सूर्यपूजायाः प्राथमिकत्वाभिधानात् । अत्र केचित् अग्निशब्दे-

न गणेश इति वदन्ति तत्र मूलं मृग्यम् । वक्ष्यमाणवाक्ये गणेशस्योक्तत्वादग्निगणेशयोर्विकल्प इति केचित् । वस्तुतस्तु एतस्य वाक्यस्य पञ्चायतनपूजोपक्रमेऽनभिधानादेतासां देवतानां पूज्यत्वं वरं प्राणपरित्याग इत्यस्मिन् श्लोके पठितदेवतावत् । अत्र ब्राह्मे,

अपूज्य प्रथमं सूर्यमपरान् यः प्रपूजयेत् ।
न तद्भूतकृतं पाद्यं संप्रतीच्छन्ति देवताः ॥

पद्मपुराणेपि,

आदित्यं गणनाथं च देवीं रुद्रं यथाक्रमम् ।
दुर्गां सरस्वतीं लक्ष्मीमन्ते च कुलदेवताः ॥

तथा,

रविर्विनायकश्चण्डी ईशो विष्णुस्तु पञ्चमः ।
अनुक्रमेण पूज्यन्ते व्युत्क्रमेण महद्भयम् ॥

अत्र स्थाननियमप्रमाणं पठन्ति

शम्भौ मध्यगते हरीनहरभूदेव्यो हरौ शङ्करे-
भास्येनागसुता रवौ हरगणेशाजाम्बिकाः स्थापिताः ।
देव्यां विष्णुहरैकदन्तरवयो लम्बोदरेऽजेश्वरे—
नार्याः शङ्करभागतोऽतिसुखदा व्यस्तास्तु ते हानिदाः ॥

लम्बोदरेऽजेश्वरेनार्या इत्यत्र पाठान्तरं गौरीसुते शङ्करेनार्याविष्णव इति कुत्रचित् । गौरीसुते केशवेशार्याभानव इति वा ।

गौतमीतन्त्रे,

पञ्चात्मिकायां दीक्षायां गणेशादिक्रमाद्यजेत् ।
यदा मध्ये तु गोविन्दं नैर्ऋत्यां गणनायकम् ॥
आग्नेय्यां हंसमभ्यर्च्य ऐशान्यां शिवमर्चयेत् ।
वायव्यामर्चयेद्देवीं भोगमोक्षकुलाप्तये ॥

एवं विरोधे विकल्पो द्रष्टव्यः। एवं स्थाननियमे सत्यपि सूर्यपूजां कृत्वेतरदेवपूजनं च कृत्वान्ते इष्टदेवपूजनं कुलदेवतापूजनं च कार्यम्। शम्भौ मध्यगतस्यार्थः। शम्भौ मध्यगते हरीनहरभूदेव्यः शङ्करभागतः। मध्ये शम्भौ सति ईशानकोणे हरिः, आग्नेये इनः सूर्यः, नैर्ऋत्ये गणेशः, वायव्ये दुर्गेति क्रमः। हरौ मध्यगते सति ईशाने शङ्करः, आग्नेये गणेशः, नैर्ऋत्ये सूर्यः, वायव्ये दुर्गेति क्रमः। रवौ मध्यगते सति ईशाने शङ्करः, आग्नेये गणेशः, नैर्ऋत्ये विष्णुः, वायव्ये दुर्गेति क्रमः। देव्यां मध्यगतायां सत्यां ईशाने विष्णुः, आग्नेये हरः, नैर्ऋत्ये गणेशः, वायव्ये सूर्यः। लम्बोदरे मध्यगते सति ईशाने विष्णुः, आग्नेये हरः, नैर्ऋत्ये सूर्यः, वायव्ये दुर्गेति क्रमः। अत्रैशान्यादिकल्पनायां पूज्यपूजकान्तरालरूपा प्राची द्रष्टव्या।

पूज्यपूजकयोर्मध्ये प्राची प्रोक्ता विचक्षणैः।
प्राच्येव प्राची सोद्दिष्टा मुक्त्वा वै देवपूजनम्॥

अथ सूर्यपूजायाः कालाः फलानि च।

अग्निहोत्राणि वेदाश्च यज्ञाश्च बहुदक्षिणाः।
सूर्यस्यार्चार्चनस्यैते कोट्यंशेनाऽपि नो समाः।

भविष्यपुराणे,

यः सूर्यं पूजयेन्नित्यं प्रणमेद्वापि भक्तितः।
तस्य योगं च मोक्षं च ब्रध्नस्तुष्टः प्रयच्छति॥

योगोऽलब्धस्वर्गादिलाभः। ब्रध्नः सूर्यः।

प्रातरुत्थाय यो भानुं भक्त्या संपूजयेन्नरः।
कपिलानां शते दत्ते यत्पुण्यं तदवाप्नुयात्॥
ब्रह्मचारी शुचिर्भूत्वा त्रिसन्ध्यमर्चयेद्रविम्।
सप्तपौरुषमुद्धृत्य कुलं सूर्यगृहं नयेत्॥

तथा,

यः कुर्यादर्चनं मासमेकाहारो जितेन्द्रियः ।
स यत्फलमवाप्नोति न तत्सर्वैर्महामखैः ॥
नैरन्तर्य्येणेत्यत्रानुषज्यते ।
मासार्द्धमपि योऽर्कं वै नैरन्तर्येण पूजयेत् ।
पुरुषो न स विज्ञेयो नैरन्तर्यं हि दुष्करम् ॥
यः सूर्यमर्द्धरात्रे तु शुचिर्भूत्वा प्रपूजयेत् ।
सम्यागिष्टफलं तेन क्रतूनां लब्धमादिशेत् ॥
एकरात्रं द्विरात्रं च त्रिरात्रमथवा हरे ।
उपवासी चापि यस्तु भक्त्या ध्यायति मानवः ॥
तन्नामजापी तत्कर्मरतिस्तद्गतमानसः ।
निष्कामः पूजयेद्देवं परं ब्रह्माधिगच्छति ॥
यं च काममभिध्यायन् भास्करान्वितमानसः ।
उपोष्य तमवाप्नोति प्रसन्ने कमलध्वजे ॥

तथा,

यजेदर्कं सहस्रांशुं मोक्षकामो न संशयः ।
मेरुमन्दरमात्रोऽपि राशिः पापस्य कर्मणः ॥
आसाद्य भास्करं मर्त्यस्तन्नाशयति तत्क्षणात् ।
यः कुर्याद्दर्शनं मासमनाहारो जितेन्द्रियः ॥
स यत्फलमवाप्नोति न तत्सर्वैर्महामखैः ।
व्रतोपवासनियमैः पूजाजागरभोजनैः ॥
महास्नानादिविधिना सूर्यं पर्वसु पूजयेत् ।
यावत्पर्वाणि विधिवत् सङ्ख्यया पूजयेद्रविम् ॥
तावद्वर्षसहस्राणि सूर्यलोके महीयते ।
पर्वाणि तु विष्णुपुराणोक्तानि—

चतुर्दश्यष्टमी चैव अमावास्याऽथ पूर्णिमा ।
पर्वाण्येतानि राजेन्द्र रविसङ्क्रान्तिरेव च ॥ इति ।
तस्मात्सर्वप्रयत्नेन यथाविभवविस्तरैः ।
पूजनीयो रविर्नित्यं महापुण्याजिगीषया ॥
नैरन्तर्येण यो मासं विधिना पूजयेद्रविम् ।
पुण्यं तदेव सकलं लभेद्विषुवदर्चनात् ॥
एवमेव च विज्ञेयं ग्रहणे चोत्तरायणे ।
एवमेव पूर्वोक्तफलम् ।
सङ्क्रान्तिदिनच्छिद्रेषु षडशीतिमुखेषु च ।
यद्यद्बहु भवेत्पुण्यं विधिना पूजिते खगे ॥
तत्कार्त्तिक्यां भवेत्पुण्यं समाराध्य तु भास्करम् ।
सङ्क्रान्तिपदं षडशीत्यातिरिक्तसङ्क्रान्तिपरम् । षडशीतिपदेन मिथुनकन्याधनुर्मीनसङ्क्रान्तयः ।
पुण्यमेव च फाल्गुन्यामाषाढ्यामेवमेव च ।
चातुर्मास्यार्चने ह्येतन्महापुण्यफलप्रदम् ॥
माघमासे सदोद्युक्तस्त्रिसन्ध्यमर्चयेद्रविम् ।
लभेत्षाण्मासिकं पुण्यं मासेनैव न संशयः ॥
षाण्मासिकं पुण्यं षण्मासरविपूजाजन्यफलसमफलम् ।
यथा माघे तथाऽऽषाढे मासमेकं च कार्त्तिके ।
त्रिषु पुण्यं समं ज्ञेयं मासश्रेष्ठेषु यत्कृतम् ॥
चातुर्मास्यकृतं पुण्यं पुष्यमासार्चनाल्लभेत् ।
चैत्रफाल्गुनयोः पुण्यं द्विमासजनितं लभेत् ॥
पुष्यमासः पौषः । द्विमासजनितं मासद्वयार्चनजनितम् । चैत्रफाल्गुनयोः, चैत्रे फाल्गुने चेति ज्ञेयम् ।
चतुर्दश्याममावास्यां लभेद्वै पाक्षिकं फलम् ।

पुण्यमष्टगुणं प्रोक्तं सप्तम्यां योऽर्चयेद्रविम् ॥

पाक्षिकं फलं पक्षार्चनफलसमं फलम् । अष्टगुणत्वं पूर्वोक्तपाक्षिकपूजाफलापेक्षया।

सप्तम्यामथवा षष्ठ्यामष्टम्यां देवसत्तमम्।
स्नापयित्वाऽम्भसा भानुं सर्वयज्ञफलं लभेत् ॥
कृष्णपक्षे तु षष्ठ्यां वै उपोष्य परमेश्वरम्।
प्रातर्मध्याह्नयोः पूजां सप्तम्यां तु समाचरेत् ॥
पञ्चपूतात्मकं पीत्वा भुक्त्वा हव्यं च वाग्यतः।
दशानां वाजिमेधानां फलं विन्दति मानवः ॥

पञ्चपूतात्मकं पञ्चगव्यम्। हव्यं हविष्यं यवादि।

उपोष्य कृष्णषष्ठ्यां तु अर्चयित्वा तु भास्करम्।
प्राप्नोति परमं स्थानं यत्र देवो दिवाकरः ॥

पूर्वदिने कृतोपवासः षष्ठ्यां पूजयेदित्यर्थः । उपवासपूजयोराधिकरणं षष्ठ्येवेति केचित्।

एकाहारो नरो भूत्वा षष्ठ्यां योऽर्चयते रविम्।
सप्तम्यां च महाबाहो सूर्यलोकं स गच्छति ॥

**तथा,**

अहोरात्रोपवासी च पूजयेद्यस्तु भास्करम्।
सप्तम्यामथवा षष्ठ्यां स गच्छेत्परमां गतिम् ॥

अत्रोपवासपूजयोरुभयोरप्याधिकरणं सप्तमी षष्ठी च कर्तृविशेषणत्वेन प्रयोगाङ्गत्वात्, अतीतत्वेनोपवासस्याश्रुतत्वाच्च।

**तथा,**

कृष्णपक्षस्य सप्तम्यां सोपवासो जितेन्द्रियः।
सर्वरक्तोपहारेण पूजयेद्यस्तु भास्करम् ॥
पङ्कजैः करवीरैश्च कुसुम्भोदकसंयुतैः।

मोदकैश्च द्विजश्रेष्ठ सूर्यलोकं स गच्छति ॥
पूजारत्नाकरे सर्वरत्नोपहारेणेति पाठः ।
शुक्लपक्षस्य सप्तम्यामुपवासपरः सदा ।
सर्वशुक्लोपहारेण पूजयेद्यस्तु भास्करम् ॥
जातीकुरबकैश्चैव श्वेतोत्पलकदम्बकैः ।
पायसं च तथा देयं सुवर्णेनार्चयेद्रविम् ॥
सर्वपापविनिर्मुक्तो विधुकान्त्या समप्रभः ।
हंसयुक्तेन यानेन हंसलोकमवाप्नुयात् ॥
हंसः सूर्यः ।

**ब्रह्मपुराणे,**

एकाहारो नरो भूत्वा षष्ठ्यां योऽर्चयते रविम् ।
नियमव्रतचारी च रवेर्भक्तिसमन्वितः ॥
सप्तम्यां वा महाभागाः सोऽश्वमेधफलं लभेत् ।
अहोरात्रोपवासेन पूजयेद्यस्तु भास्करम् ॥
सप्तम्यामथवा षष्ठ्यां स याति परमां गतिम् ।

**तथा,**

चित्रभानुं विचित्रैस्तु कुसुमैस्तु सुगन्धिभिः ।
पूजयेत्सोपवासो यः स कामानीप्सिताँल्लभेत् ॥
चित्रभानुः सूर्यः ।

**तथा,**

अयने तूत्तरे सूर्यमथवा दक्षिणायने ।
पूजयित्वा विशेषेण सर्वपापैः प्रमुच्यते ॥
विषुवेषूपरागेषु षडशीतिमुखेषु च ।
पूजयित्वा विशेषेण सर्वपापैः प्रमुच्यते ॥
एवं वेलासु सर्वासु अवेलासु च मानवः ।

भक्त्या पूजयते योऽर्कं सूर्यलोके महीयते ॥
इति सूर्यपूजायाः फलानि कालाश्च ।

**अथ संमार्जनादिफलानि ।**

**भविष्यपुराणे,**

पश्यन् परिहरन् जन्तून् मार्जन्या मृदुसूक्ष्मया ।
शनैः संमार्जनं कृत्वा चान्द्रायणफलं लभेत् ॥
यावत्यः पांशुकणिका मार्ज्यन्ते भास्करालये ।
दिनानि दिवि तावन्ति स तिष्ठत्यमलो नरः ॥
अहन्यहनि यत्पापं कुरुते गणनायक ।
गोचर्ममात्रं संमार्ज्य हन्ति तद्भास्करालये ॥
नात्यर्थं देहजीर्णाया वन्ध्यायास्तु विशेषतः ।
रोगार्तनवसूताया न गोर्गोमयमाहरेत् ॥
गृहीत्वा गोमयं स्वस्थं स्थाने वा पतितं शुभे ।
उपर्यधश्च सन्त्यज्य प्रत्यग्रं जन्तुवर्जितम् ॥
प्रत्यग्रं नवम् ।
वस्त्रपूततोयेन यः कुर्यादुपलेपनम् ।
पश्यन् परिहरन् जन्तून् चान्द्रायणफलं लभेत् ॥
मृदा धातुविकारैर्वा वर्णकैर्गोमयेन वा ।
उपलेपनकृद्याति तत्पुरं यानमाश्रितः ॥
उदकात्प्रोक्षणं भानोर्यः करोति तथा गृहे ।
सोऽपि गच्छति यत्रास्ते भगवान् यादसांपतिः ॥
यादसांपतिर्वरुणः ।
यः कुर्यात् कुट्टिमां भूमिं दर्पणोदरसन्निभाम् ।
नानावर्णविचित्रां च विचित्रकुसुमोज्ज्वलाम् ॥
क्वचित् कलशविन्यस्तां पङ्कजैरुपशोभिताम् ।

रम्यां मनोरमां सौम्यामर्कायतनमन्दिरे ॥
यावद्दण्डा भवेद्भूमिः समन्ताद्धस्तसङ्ख्यया ।
तावद्युगसहस्राणि सूर्यलोके महीयते ॥

कलशविन्यस्तां विन्यस्तकलशाम् । मन्दिरं गर्भगृहम् । तद्बहिरायतनम् ।

भविष्ये,

यस्त्वेकमपि वर्षं वै ब्रह्मस्नानं प्रयच्छति ।
स मुक्तः सर्वपापैस्तु सूर्यलोके महीयते ॥
कपिलापञ्चगव्येन कुशवारियुतेन च ।
स्नापयेद्ब्रह्मपूतेन ब्रह्मस्नानं हि तत् स्मृतम् ॥

तथा,

कापिलापञ्चगव्येन दधिक्षीरयुतेन च ।
स्नानं दशगुणं प्रोक्तमितरेभ्यो न संशयः ॥

पञ्चगव्यं याज्ञवल्क्योक्तम्—

गायत्र्यामृज्य गोमूत्रं गन्धद्वारेति गोमयम् ।
आप्यायस्वेति च क्षीरं दधिक्राव्णऋचा दधि ॥
तेजोसीति घृतं ग्राह्यं देवस्य त्वा कुशोदकम् । इति ।
आह्लादं निर्वृतिं स्वास्थ्यमारोग्यं चारुरूपताम् ।
सप्तजन्मान्यवाप्नोति क्षीरस्नानपरो रवेः ॥
सकृदाढकेन पयसा भानुं संस्नापयेन्नरः ।
राजतेन विमानेन सूर्यलोके महीयते ॥
आढकश्चतुःषष्टिपलानि ।
सप्तम्यामथवा षष्ठ्यां गव्येन पयसा रवेः ।
स्नपनं भरतश्रेष्ठ महापातकनाशनम् ॥
स्नाप्य दध्ना सकृद्भानुं विष्णुलोके महीयते ।

वर्षकोटिसहस्रेण यत्पापं समुपार्जितम् ।
घृताभ्यङ्गेन सूर्यस्य दहेत्सर्वं न संशयः ॥
वर्षकोटिसहस्रेण यत्पापं समुपार्जितम् ।
घृतस्नानेन तत्सर्वं दहत्यग्निरिवेन्धनम् ॥
सप्तम्यां तु घृतस्नानं कृत्वा सूर्ये सकृन्नरः ।
कुलान्युद्धृत्य सप्तेह सूर्यलोके महीयते ॥
प्रतिमासमसिताष्टम्यां घृतेन जगतीपतेः ।
स्नापयित्वा समस्तानां पापानां कृष्ण मुच्यते ॥

कृष्णेति सम्बोधनम् । तृतीयार्थे षष्ठी ।

दशापराधांस्तोयेन क्षीरेण तु शतं क्षमेत् ।
सहस्रं क्षमते दध्ना घृतेनाप्ययुतं क्षमेत् ॥

अपराधोऽयं सौरदीक्षादीक्षितानाम् ।

नैरन्तर्येण यो मासं घृतस्नानं समाचरेत् ।
एकादशकुलानीह नयेत्सूर्यस्य मन्दिरम् ॥
ज्ञानतोऽज्ञानतो वापि यत्पापं कुरुते नरः ।
तत् क्षालयति सन्ध्यायां घृतेन स्नपनं रवेः ॥
घृतेन स्नपनं कृत्वा एकाहमुदये रवेः ।
गवां शतसहस्रस्य दत्तस्य फलमश्नुते ॥

उदये, मण्डलस्य किञ्चिद्दर्शनयोग्यकालादारभ्य सम्पूर्णमण्डलदर्शनयोग्ये काले ।

घृताभिषेकं यः कुर्यादहोरात्रं च भास्करे ।
कुम्भैर्नानाविधैर्द्रव्यैः पुष्यमासं समुद्यतः ॥
गीतनृत्योपहारेण शङ्खवादित्रनिःस्वनैः ।
कुर्याज्जागरणं देवे प्रदीपोद्योतशोभितः ॥
सर्वपापविनिर्मुक्तः समस्तकुलसंयुतः ।

समस्तकालसम्पूर्णः समस्तगुणसंयुतः ।
ज्वलद्भिः सुमहायानैरसङ्ख्येयैरनौपमैः ॥
वृतः सूर्यपुरे नित्यं मोदते सूर्यवत्सुखी ।
ग्रहणे विषुवे चैव पुण्येषु दिवसेषु च ॥
घृताभिषेकं यः कुर्यान्महापुण्यमवाप्नुयात् ।

**तथा,**

घृताभिषेकं यः कुर्यादासमाप्तेरुपोषितः ।
विधूय सर्वपापानि सूर्यलोकं स गच्छति ॥
स्नाप्य मध्वा सकृद्भानुं सप्तम्यां समुपोषितः ।
स कुलान्येकविंशतिमुत्तार्य दिवमाव्रजेत् ॥

मध्वा मधुनेत्यर्थः ।

श्रीखण्डवारिणा स्नाप्य सकृद्भानुं नराधिप ।
विकाशनिर्मले श्रीमान् वसेदात्रेयमण्डले ॥

आत्रेयश्चन्द्रः ।

वस्त्रपूतेन तोयेन यस्त्वर्कं स्नापयेत् सकृत् ।
स सर्वकामतृप्तात्मा कान्त्याधिकपुरं व्रजेत् ॥

कान्त्याधिकश्चन्द्रः ।

आपोहिष्ठेतिजप्तेन शङ्खतोयेन भारत ।
गैरिकेण विमानेन ब्रह्मलोके महीयते ॥

सूर्यं स्नापयित्वेति सम्बध्यते । अत्र न शूद्रोऽधिकारी ।

कर्पूरागुरुतोयेन योऽर्कं स्नापयते सकृत् ।
सर्वपापविनिर्मुक्तः सूर्यलोके महीयते ॥
मन्त्राष्टशतजप्तेन विमलेनाम्भसा रविम् ।
स्नापयित्वा सकृद्भक्त्या सूर्यलोके महीयते ॥

मन्त्रोऽत्र आपोहिष्ठेति । सौर इति कश्चित् । अष्टशतं अष्टो-

त्तरशतम् ।

सप्तम्यामथवा षष्ठ्यामष्टम्यां देवसत्तमम् ।
स्नापयित्वाऽम्भसा भानुं सर्वयज्ञफलं लभेत् ॥
पुण्यैस्तीर्थोदकैर्गन्धैर्मधुना सर्पिषा तथा ।
क्षीरेण स्नापयेद्भानुं ग्रहेशं गोपतिं खगम् ॥
दधिक्षीरह्रदान् याति स्वर्गलोकान् मधुच्युतान् ।
प्रयास्यति यदुश्रेष्ठ निर्वृतिं वापि शाश्वतीम् ॥

तथा,

पितॄनुद्दिश्य यो भानुं स्नापयेच्छीतवारिणा ।
तृप्ताः स्वर्गं प्रयान्त्याशु पितरो नरकादपि ॥

स्नापनत्रयफलमाह—

भानुं शीताम्बुना स्नाप्य धारोष्णपयसा ततः ।
स्नाप्य पश्चाद्घृतेनैवमग्निलोके महीयते ॥
एतत् स्नानत्रयं कृत्वा पूजयित्वा च भास्करम् ।
अश्वमेधसहस्रस्य फलं विन्दति मानवः ॥

तथा,

रसेन स्नपनं कृत्वा अश्वमेधफलं लभेत् ।

रसेन इक्षुरसेन ।

स्नाप्यमानं रविं भक्त्या ये पश्यन्ति वृषध्वज ।
लभन्ते ते फलं शिष्टं राजसूयाश्वमेधयोः ॥

शिष्टं विध्युक्तम् ।

यथा न लङ्घयेत्कश्चित् स्नपनं भास्करस्य तु ।
तथा कार्यं प्रयत्नेन लङ्घितं चाशुभावहम् ॥
तामिस्रं नरकं गन्ता लङ्घयेद्यः स रौरवम् ।

तथा,

मृत्कुम्भात्ताम्रजैः कुम्भैः स्नानं दशगुणोत्तरम् ।
रौप्यैर्लक्षोत्तरं पुण्यं हैमैः कोटिगुणोत्तरम् ॥

मृत्कुम्भात् मृत्कुम्भजन्यस्नपनपुण्यात् ।

अन्यच्च,

सूर्यस्य दर्शनं पुण्यं दर्शनात् स्पर्शनं वरम् ।
स्पर्शनादर्चनं श्रेष्ठं घृतस्नानमतः परम् ॥

तथा,

भास्करस्य मह राज भानोरमिततेजसः ।
स्नानकाले प्रकुर्वीत गीतवादित्रमङ्गलम् ॥
पद्मस्वस्तिकशङ्खं तु श्रीवत्सं ध्वजमुत्तमम् ।
हेमरूप्यादिपात्रेषु कल्पितैर्गोमयादिभिः ॥
नानावर्णकसंयुक्तैरक्षतैस्तिलतण्डुलैः ।
सिक्तैश्च दधिसंमिश्रैर्यथाशोभं प्रपूरितैः ॥

कल्पितैः कृतैः । अक्षतैः सम्पूर्णैर्यवैर्वा । सिक्तैरोदनैः । प्रपूरितैः पात्रैः ।

भक्त्या पिष्टप्रदीपाद्यैश्चूताश्वत्थादिपल्लवैः ।
ओषधीभिश्च मेध्याभिः सर्वबीजैर्यवादिभिः ॥
सप्तम्यादिषु सर्वेषु दिवसेपूत्सवेषु च ।
पर्वकालेषु सर्वेषु सप्तम्यां च विशेषतः ॥
कुर्यान्नीराजनं चार्के शङ्खवाद्यादिमङ्गलैः ।
यावन्नीराजनं कुर्यात्पर्वाणि विधिवद्रवेः ॥
तावद्युगसहस्राणि सूर्यलोके महीयते ।

यावत् पर्वाणि यावन्ति पर्वाणीति योज्यम् । ओषधीभिः विष्णुपुराणपठिताभिः ।

व्रीहयः सयवा माषा गोधूमा अणवास्तिलाः ।

प्रियङ्गुसप्तमा ह्येते अष्टमास्तु कुलित्थकाः ॥
तथा वेणुयवाः प्रोक्तास्तथा मर्कटका मुने ।
ग्राम्यारण्याः स्मृता ह्येते ओषध्यश्च चतुर्दश ॥
सर्वबीजैर्वायुपुराणोक्तधान्यैः । तानि—

यथा,

व्रीहयश्च यवाश्चैव गोधूमा अणवस्तिलाः ।
प्रियङ्गुकोविदाराश्च कोरदूषाः सचीनकाः ॥
माषा मुद्गा मसूराश्च निष्पावाः सकुलित्थकाः ।
आढक्यश्चणकाश्चैव शाणः सप्तदश स्मृताः ॥

सर्वबीजपदेन यवप्राप्तेः पुनरुपादानमत्यन्तप्राशस्त्यार्थम् । ध्वजमुत्तममित्यन्तं कुर्वीतेत्यनेनान्वेति।पद्मादीनि हेमरूप्यादिपात्रेषु निधाय तत्स्थितैश्चन्दनादिभिर्नीराजना कार्येत्यन्ये ।

अन्यच्च,

स्नानकाले त्रिसन्ध्यं तु यः कुर्याद्गीतवादनम् ।
इतिहासपुराणाभ्यां तथा श्रवणमुत्तमम् ॥
यावद्दिनं प्रकुरुते पुण्यपुस्तकवाचनम् ।
तावद्युगसहस्राणि सूर्यलोके महीयते ॥

अथार्घः ।

भविष्ये,

अर्घं पुष्पजलोपेतं यस्त्वर्काय निवेदयेत् ।
स पूज्यः सर्वलोकेषु अर्कवन्मोदते दिवि ॥
गन्धतोयेन संमिश्रमौदकाद्धि विशिष्यते ।
औदकात् केवलोदककृतादर्घात् ।
पञ्चगव्यसमायुक्तमर्घं दशगुणं स्मृतम् ॥
चन्दनोदकमिश्रैस्तु दत्त्वार्घं कुसुमं रवेः ।

सपुत्रपौत्रपत्नीकः स्वर्गलोके महीयते ॥
सहिरण्येन चार्घेण रत्नोदकयुतेन च ।
कोटिं शतं च वर्षाणां स्वर्गलोके महीयते ॥
योऽष्टाङ्गमर्घमापूर्य भानोर्मूर्द्धिन निवेदयेत् ।
दशवर्षसहस्राणि वसेदर्कस्य मन्दिरे ॥
आपः क्षीरं कुशाग्राणि घृतं दधि तथा मधु ।
रत्नानि करवीराणि तथा वै रक्तचन्दनम् ॥
अष्टाङ्ग अर्घ एषो वै ब्रह्मणा परिकीर्त्तितः ।
सततं प्रीतिजननो भास्करस्य नराधिप ॥
दारवेणार्घपात्रेण दत्त्वाऽर्घं यत्फलं लभेत् ।
तस्माच्छतगुणं प्रोक्तं मृत्पात्रेण नराधिप ॥
ताम्रपात्रार्घदानेन पुण्यं दशगुणं स्मृतम् ।
पलाशपद्मपत्राभ्यां ताम्रपात्रसमं भवेत् ॥
रौप्यपात्रेण विज्ञेयं लक्षार्घ्यं नात्र संशयः ।
सुवर्णपात्रविन्यस्तमर्घं कोटिगुणोत्तरम् ॥
एवं स्नानेऽथ नैवेद्ये बलिधूपादिषु क्रमात् ।
पात्रान्तरविशेषेण तत्फलं तूत्तरोत्तरम् ॥
तुल्यमेव फलं प्रोक्तं सर्वेणाढ्यदरिद्रयोः ।

सर्वेण पात्रेण। आढ्यदरिद्रयोः, आढ्यस्य सुवर्णादिमयेन पात्रेण यत्फलं तद्दरिद्रस्य निकृष्टेन मृन्मयादिपात्रेण फलमित्यर्थः।

विभवे सति यो मोहान्न कुर्याद्विधिविस्तरम् ।
नैव तत्फलमाप्नोति प्रलोभाक्रान्तमानसः ॥

तथा,

रक्तचन्दनसंमिश्रै रत्नपुष्पैः शुचिर्नरः ।
उदयेऽर्घं सदा दत्त्वा सिद्धिं संवत्सराल्लभेत् ॥

उदयात्परिवृत्तश्च यावदस्तमये स्थितः ।
जपन्नभिमुखः किञ्चिन्मन्त्रं स्तोत्रमथापि वा ॥
आदित्यव्रतमेतत्तु महापातकनाशनम् ।
अर्घेण सहितां चैव सवत्सां गां प्रदापयेत् ॥
उदये श्रद्धया युक्तः सर्वपापैः प्रमुच्यते ।
सुवर्णधेन्वनड्वाहं वसुधावस्त्रसंयुतम् ॥
अर्घप्रदाता लभते सप्तजन्मानुकीर्त्तनम् ।

अनुकीर्त्तनं ख्यातिः । ख्यातिमान् भवतीत्यर्थः । यद्वा गुरोरनुकीर्त्तनमुच्चारणं यस्य स वेदः तं लभते वेदवेत्ता भवतीत्यर्थः ।

अग्नौ तोयेऽन्तरिक्षे च शुचौ भूम्यां तथैव च ।
प्रतिमायां तथा पिण्ड्यां देयश्चार्घः प्रयत्नतः ॥
नापसव्यं न सव्यं च दद्यादभिमुखं सदा ।

पद्मपुराणे,

आचम्य विधिवत्सम्यक् विलिखेत् पद्ममग्रतः ।
अक्षताद्भिः सुपुष्पाभिः सतिलारुणचन्दनैः ॥
अर्घं पात्रेण ध्यानेन सूर्यनामानुकीर्त्तनम् ।
नमस्ते विष्णुरूपाय नमस्ते ब्रह्मरूपिणे ॥
सहस्ररश्मये नित्यं नमस्ते सर्वरूपिणे ।
नमस्ते रुद्रवपुषे नमस्ते भक्तिवत्सल ॥
पद्मनाभ नमस्तेऽस्तु कुण्डलाङ्गदभूषण ।
नमस्ते सर्वलोकेश सुप्तानामपि बुध्यसे ॥
सुकृतं दुष्कृतं चैव सर्वं पश्यसि सर्वदा ।
सत्यदेव नमस्तेऽस्तु प्रसीद मम भास्कर ॥
दिवाकर नमस्तेऽस्तु प्रभाकर नमोऽस्तु ते ।
एवं सूर्यं नमस्कृत्य त्रिः कृत्वा तु प्रदक्षिणम् ॥

द्विजं गां काञ्चनं दत्त्वा ततो निजगृहं व्रजेत् ।
आशयस्थं ततः पूज्य प्रतिमां चापि पूजयेत् ॥

अक्षताश्चात्र तण्डुलाः। अर्घान्तरे तथा दर्शनात्। अर्घपात्रेण, देयमिति शेषः । आशयस्थं जलस्थम् । इदमर्घान्तरम् ।

## अथ गन्धाः

**भविष्यपुराणे,**

चन्दनागुरुकर्पूरकुङ्कुमोशीरपद्मकैः ।
अनुलिप्तो नरैर्भक्त्या ददाति मनसेप्सितम् ॥

पद्मकं पद्मकाष्ठम् । अनुलिप्तः सूर्यः, प्रकरणात् ।

**तथा,**

कालेयकं तुरुष्कं च रक्तचन्दनमेव च ।
यान्यात्मनः सदेष्टानि तानि शस्तान्युपाकुरु ॥

कालेयकं कृष्णागुरुः । तुरुष्कं सिह्लकम् ।

सूर्यानुलेपनं कृत्वा दिव्यैर्गन्धैः सुगन्धिभिः ।
वर्षकोटिशतं दिव्यं सूर्यलोके महीयते ॥
चन्दनाच्चागुरोर्ज्ञेयं पुण्यमष्टगुणं नृप ।
कृष्णागुरोर्विशेषेण द्विगुणं फलमाप्नुयात् ॥
तस्माच्छतगुणं पुण्यं कुङ्कुमस्य विधीयते ।
यः समालभते सूर्यं चन्दनागुरुकुङ्कुमैः ॥
कर्पूरव्यतिमिश्रैस्तु तथा कस्तूरिकान्वितैः ।
स्वमेकानां कोटिशतं विहृत्य त्रिदिवालये ॥
पुनः सञ्जायते भूमौ राजराजो न संशयः ।

स्वमेकानां वर्षाणाम् ।

चन्दनागुरुकर्पूरैः सूक्ष्मपिष्टैः सकुङ्कुमैः ।
भानोरर्चां समालभ्य कल्पकोटिं वसेद्दिवि ॥

अर्चां प्रतिमाम् ।

संवीज्य तालवृन्तेन शुभगन्धैः प्रलेपितम् ।
दशवर्षसहस्राणि वीर मित्रपुरे वसेत् ॥

मित्रः सूर्यः ।

**ब्रह्मपुराणे,**

यः समालभते नित्यं चन्दनागुरुकुङ्कुमैः ।
स पूज्यते नरः प्रेत्य धनेन यशसा श्रिया ॥

इति गन्धाः ।

## अथ पुष्पाणि ।

**भविष्यपुराणे,**

पुष्पैररण्यसम्भूतैः पत्रैर्वा गिरिसम्भवैः ।
अपर्युषितनिश्छिद्रैः प्रोक्षितैर्जन्तुवर्जितैः ॥
आत्मारामोद्भवैर्वापि भक्त्या सम्पूजयेद्रविम् ।
पुष्पजातिविशेषेण लभेत्पुण्यं ततोऽधिकम् ॥

अत्र विकल्पग्रहणेऽपि फलविशेषार्थितया समुच्चयोऽपि द्रष्टव्यः । पुष्पैरिति बहुत्वश्रवणात् । पूजास्वरूपं एकपत्रपुष्पजात्यापि सिद्ध्यति तथापि तत्तद्वचनकल्पिततत्तत्फलार्थितया समुच्चयो न विरुद्धः । अत्र बहुवचनस्य कपिञ्जलाधिकरणन्यायेन त्रित्वपरत्वेऽप्यधिकफलार्थितया अधिकदानमप्यविरुद्धम् ।

करवीरे नृपैकास्मिन्नर्काय विनिवेदिते ।
दत्त्वा दशसुवर्णस्य निष्कस्य लभते फलम् ॥
भक्त्या पूजयते योऽर्कमर्कपुष्पैः सितासितैः ।
तेजसा सोऽर्कसङ्काशो ह्यर्कलोके महीयते ॥
जपापुष्पसहस्रेभ्यः करवीरं विशिष्यते ।
करवीरसहस्रेभ्यः बिल्वपत्रं विशिष्यते ॥

बिल्वपत्रसहस्रेभ्यः पद्ममेकं विशिष्यते ।

पद्मं श्वेतेतरपद्मम् । अग्रे सितपद्मस्य करवीरसमत्वप्रतिपादनात् ।

वीर पद्मसहस्रेभ्यो बकपुष्पं विशिष्यते ।

वीरेति राजसम्बोधनम् ।

बकपुष्पसहस्रेभ्यः कुशपुष्पं विशिष्यते ॥

कुशपुष्पसहस्रेभ्यः शमीपुष्पं विशिष्यते ।

शमीपुष्पसहस्रेभ्यो नृप नीलोत्परं वरम् ॥

सर्वासां पुष्पजातीनां प्रवरं नीलमुत्पलम् ।

रक्तोत्पलसहस्रेण नीलोत्पलशतेन च ॥

रक्तैश्च करवीरैश्च यस्तु पूजयते रविम् ।

कल्पकोटिसहस्राणि कल्पकोटिशतानि च ॥

वसेदर्कपुरे श्रीमान् सूर्यतुल्यपराक्रमः ।

चकारात् समुच्चयः । रक्तमत्र कुङ्कुमपुष्पम् ।

शमीपुष्पं बृहत्याश्च कुसुमं तुल्यमुच्यते ।

करवीरसमा ज्ञेया जातीवकुलपाटलाः ।

श्वेतमन्दारकुसुमं सितपद्मं च तत्समम् ॥

नागचम्पकपुन्नागमुकुराश्च समाः स्मृताः ।

नागो नागकेसरः ।

'प्रहरं तिष्ठते जाती करवीरमहर्निशम्' ।

इति अवचयोत्तरं जातीपुष्पं प्रहरपर्यन्तं पूजार्हम् । एवमुत्तरत्रापि । यद्वा तिष्ठते न निर्माल्यतां यातीत्यर्थः ।

कीटकेशापविद्धानि शीर्णपर्युषितानि च ॥

स्वयम्पतितपुष्पाणि त्यजेदुपहतानि च ।

उपहतानि उक्तेतराशुचिसंसर्गेण । अयं निषेधःपत्रादिष्वपि ।

र्नार्चयेद्भानुमपक्कं न निवेदयेत् ।
फलं च कृमिविद्धं यत्प्रयत्नात्तद्विवर्जयेत् ॥
यत्नपक्कमपि ग्राह्यं कदलीफलमुत्तमम् ।
अलाभेन तु पुष्पाणां पत्राण्यपि निवेदयेत् ॥
पत्राणामप्यलाभे तु फलान्यपि निवेदयेत् ।
फलानामप्यलाभे तु तृणगुल्मौषधीरपि ॥
औषधीनामलाभे तु भक्त्या भवति पूजितः ।

तृणगुल्मौषधीरित्यत्र पूर्वालाभे उत्तरोत्तरविधिः । अत-एवाग्रे औषधीनामलाभे त्विति दर्शितवान् ।

प्रत्येकमुक्तपुष्पेण दशसौवर्णिकं फलम् ।
स्रग्भिश्च नृपशार्दूल तदेव द्विगुणं भवेत् ॥
मुकुराणि कदम्बानि रात्रौ देयानि भानवे ।
दिवा शेषाणि पुष्पाणि दिवारात्रौ च मल्लिका ॥
गन्धवन्त्यपवित्राणि कुसुमानि विवर्जयेत् ।
गन्धहीनमपि ग्राह्यं पवित्रं यत्कुशादिकम् ॥
मल्लिका मालती चैव दूर्वा काशोऽतिमुक्तकः ।
पाटला करवीरश्च जया यावन्विरेव च ॥
अतिमुक्तो माधवीलता ।
कुब्जकस्तगरश्चैव कर्णिकारः कुरण्टकः ।
चम्पको रोलकः कुन्दो बाणो बर्बरमल्लिकाः ॥
अशोकस्तिलको लोध्रस्तथा चैवाटरूषकम् ।
शतपत्राणि चान्यानि बकाह्वं च विशेषतः ॥
अगस्तिकिंशुकौ तद्वत्पूजायां भास्करस्य च ।
बिल्वपत्रं शमीपत्रं पत्रं भृङ्गरजस्य च ॥
तमालपत्रं च हरे सदैव तपनाप्रियम् ।

तुलसी कालतुलसी तथा रक्तं च चन्दनम् ॥
केतकी पद्मपत्रं च सद्यस्तुष्टिकरं रवेः ।
कृष्णलोन्मत्तकं काञ्ची तथा च गिरिकर्णिका ॥
न कण्टकारिपुष्पं च तथाऽन्यद्गन्धवर्जितम् ।
कृष्णलं करञ्जनी । गुञ्जेति कश्चित् ।
शिवे विवर्जयेत्कुन्दमुन्मत्तं च हरेस्तथा ॥
देवीनामर्कमन्दारौ सूर्यस्य तगरं तथा ।
न चाम्रातकजैः पुष्पैरर्चनीयो दिवाकरः ॥
येषां न प्रतिषेधोऽस्ति गन्धवर्णान्वितानि च ।
तानि पुष्पाणि देयानि भानवे लोकभानवे ॥
सूर्यस्योपरि यः कुर्याच्छोभितं पुष्पमण्डलम् ।
शोभितैःपुष्पस्रग्दामैरापीठान्तप्रलम्बितम् ॥
सर्वेषामुपरिष्टात्स वसेदर्कपुरे सुखी ।
स्वयमुत्पाद्य पुष्पाणि यः सूर्यं पूजयेत्स्वयम् ।
तानि साक्षाच्च गृह्णाति तद्भक्त्या सततं रविः ॥
त्रुटिमात्रं तु यो दद्यादाग्नेयकृतपङ्कजम् ।
भास्करस्योत्तमाङ्गे तु तस्य पुण्यफलं शृणु ॥
आग्नेयं सुवर्णम् ।
इन्द्रस्यार्द्धासने तिष्ठेद्यावदिन्द्राश्चतुर्दश ।
एवं वित्तानुसारेण फलं ज्ञेयं समासतः ॥
अन्यारामोद्भवानि निषिद्धानि । तदुक्तम्—
**नारदीये राक्षसीशपथे,**
पारक्यारामजातैस्तु कुसुमैरर्चयेत्सुरान् ।
तेन पापेन लिप्येऽहं यदेतदनृतं भवेत् ॥
**तथा,**

देहोपरि धृतं यच्च वामहस्ते च यद्धृतम् ।
अधोवस्त्रे धृतं यच्च जलान्तःक्षालितं च यत् ॥
तद्वर्ज्यमिति शेषः । देहोपरिधृतं मस्तकोपरि धृतम् ।
**विष्णुधर्मोत्तरे,**
धर्मार्जितधनक्रीतैर्यः कुर्याद्देवतार्चनम् ।
उद्धरिष्यत्यसन्देहस्सप्त पूर्वांस्तथाऽपरान ॥
एवंसति नित्यपूजापि क्रीतपुष्पादिना कार्या ।

## अथ धूपाः ।

**भविष्यपुराणे,**
गन्धाश्चापि शुभा ये च धूपा ये विजयादयः ।
दिवाकरस्य धर्मज्ञैर्निवेद्याः सर्वथाऽच्युत ॥
**तथा,**
कर्पूरागुरुधूपेन राजसूयफलं लभेत् ।
पक्षं तु गुग्गुलुं दग्ध्वा मुच्यते ब्रह्महत्यया ॥
गुग्गुलुं सघृतम् । पक्षं, पक्षं व्याप्येत्यर्थः ।
तस्यार्द्धपक्षदानेन सूर्यलोके महीयते ।
तस्य गुग्गुलोः ।
संवत्सरेण लभते सोऽश्वमेधफलं नृप ॥
तिग्मांशौ कृष्णसप्तम्यां यः साज्यं गुग्गुलं दहेत् ।
स वसेत्सूर्यमासाद्य वर्षाणां दशतीर्दश ॥
तिग्मांशौ सूर्यमुद्दिश्य । दशतीर्दश सहस्रमित्यर्थः ।
द्वे सहस्रे पलानां तु माहिषाक्षस्य गुग्गुलोः ।
दग्ध्वाऽऽज्येन विमिश्रेण सूर्यतुल्यः प्रजायते ॥
सौरः सूर्यगृहं गन्धैः सुगन्धैश्च प्रधूपयेत् ।
सौरः सूर्यभक्तिमान् ।

कपाटद्वारकुड्यादि तिर्यगूर्ध्वं समन्ततः ।
तस्य पुण्यफलं भुङ्क्ते सूर्यसद्मानि कृत्स्नशः ॥
सूर्यसद्मनि सूर्यलोके ।

ब्रह्मपुराणे,

सघृतं गुग्गुलं वापि दहेद्भक्तिसमन्वितः ।
तत्क्षणात्सर्वपापेभ्यो मुच्यते नात्र संशयः ॥
श्रीवासं तु तुरुष्कं तु देवदारुं तथैव च ।
कर्पूरागुरुधूपानि दग्ध्वा वै स्वर्गगामिनः ॥
तुरुष्कः सिह्लकः ।

इति धूपाः ।

अथ दीपाः ।

तत्र–

भविष्यपुराणे ब्रह्मवाक्यं शिवविष्णू प्रति,

घृतेन दीपं प्रज्वाल्य तिलतैलेन वा पुनः ।
प्रयाति सूर्यलोकं स दीपकोटिशतैर्वृतः ॥
दीपवृक्षं समुद्बोध्य भास्करस्यालये तथा ।
सर्वलोकमये वीरौ वीरलोके महीयते ।
वीरलोके सूर्यलोके ।
शिरसा धारयेद्दीपं भास्करस्याग्रतो निशि ।
आप्रभातं तु यो वीर श्रद्धाभक्तिसमन्वितः ॥
ललाटे चैव हस्ताभ्यां संप्रयुक्तं तथोरसि ।
भास्करायुतसङ्काशो विमानैरर्कसन्निभैः ॥
कल्पायुतशतं देवौ सूर्यलोके महीयते ।
देवाविति सम्बोधनम् ।
यः कुर्यात् कार्त्तिके मासि शोभनां दीपमालिकाम् ।

सप्तम्यामथवा षष्ठ्याममावास्यामथापि वा ॥
भास्करायुतसङ्काशस्तेजसा भासयन् दिशः ।
दिव्याभरणसम्पन्नः कुलमुद्धृत्य कृत्स्नशः ॥
यावत्प्रदीपसङ्ख्यानं घृतेनापूर्य बोधितम् ।
तावद्वर्षसहस्राणि सूर्यलोके महीयते ॥
तथा,
दिने दिने जपन्नाम भास्करस्य समाहितः ।
ददाति कार्त्तिके यस्तु सूर्यायतनदीपकम् ॥
जातिस्मरत्वं प्रज्ञां च प्राकाश्यं सर्ववस्तुषु ।
अव्याहतेन्द्रियत्वं च स प्राप्नोति न संशयः ॥
षष्ठीं वा सप्तमीं वापि प्रतिपक्षं च यो नरः ।
दीपं ददाति देवाय फलं तस्य निबोध मे ॥
कार्पूरं मणिमुक्ताढ्यं मनोज्ञमातिशोभनम् ।
दीपमालाज्वलद्दिव्यं विमानमधिरोहति ॥
कार्पूरं सौवर्णम् ।
दीपान् दत्त्वा न हिंसेत न च तैलविवर्जितान् ।
कुर्वीत दीपहर्त्ता च मूषिकोऽन्धश्च जायते ॥
ब्रह्मपुराणे,
घृतेन दीपं प्रज्वाल्य तिलतैलेन वा पुनः ।
शतायुषा समायुक्तश्चक्षुषा च न हीयते ॥
दीपदानपरो नित्यं ज्ञानवद्दीप्यते सदा ।
तथा,
हविर्भिः प्रथमः कल्पो द्वितीयस्त्वौषधीरसैः ।
वसामेदोस्थिनिर्यासैर्न तु देयः कथञ्चन ॥

अथ नैवेद्यम् ।

भविष्ये,

शालितण्डुलप्रस्थस्य कुर्यादन्नं सुसंस्कृतम् ।
सूर्याय चरुकं दद्यात् सप्तम्यां च विशेषतः ॥

प्रस्थः षोडशपलानि । सुसंस्कृतं प्रसाधितम् । चरुकमिति प्रशंसायां कन् ।

तथा,

संयावकृशरापूपपायसं यावकं तथा ।
दध्योदनं रसालां च मोदकान् गुडपूपकान् ॥

रसाला शिखरिणी । सा च यथा,

अर्द्धाढकं क्वथितपर्युषितस्य दध्नः
खण्डस्य षोडशपलानि शशिप्रभस्य ।
सर्पिः पलं मधु पलं मरिचं द्विकर्षं
शुण्ठ्याः पलार्द्धमपि वार्द्धपलं चतुर्णाम् ॥
सूक्ष्मे पटे ललनया मृदुपाणिघृष्टा
कर्पूरधूलिधवलीकृतभाण्डसंस्था ।
एषा वृकोदरकृता सरसा रसाला
आस्वादिता भगवता पुरुषोत्तमेन ॥ इति ।
यावन्तस्तण्डुलास्तस्मिन्नैवेद्ये परिसङ्ख्यया ।
तावद्वर्षसहस्राणि सूर्यलोके महीयते ॥
गुडखण्डकृतानां च भक्ष्याणां च निवेदने ।
घृतेन पाचितानां च दत्त्वा शतगुणं भवेत् ॥

शतगुणमनन्तं फलं भवतीत्यर्थः । अथवा घृतापेक्षया ।

रसानां पानकादीनां भक्ष्याणां फलमिष्यते ।
तदर्द्धं सलिलस्यापि वासितस्य निवेदने ॥
घृतपूपं घृतं सिक्तं पुण्यं दशगुणोत्तरम् ।

घृतपूपं घृतसाधितमपूपम् । सिक्तं ओदनम् । दत्त्वेत्यनुषज्यते।
उपदंश्यादिनैवेद्ये विज्ञेयमयुतोत्तरम् । (?) *
सुगन्धिशालिः कर्पूरधूलिप्रभृतिः ।
रक्तशालिषु नैवेद्ये फलं स्यात्त्रयुताधिकम् ।
तथा कलमशाल्यग्रे दशलक्षाधिकं फलम् ॥
एवं शालिविशेषाणां फलं स्यादुत्तरोत्तरम् ।
क्षीरभक्तेन नैवेद्यं दशकोटिगुणोत्तरम् ॥
दधिशर्करया युक्ते तत्पुण्यं स्याद्दशाधिकम् ।
रसालां सघनां स्वेतां कर्बुरां सुरभीकृताम् ॥
निवेद्य पुण्यमाप्नोति दशकोटिगुणोत्तरम् ।
सघनां सकर्पूराम् । कर्बुरां नानावर्णाम् ।
पानानां तु सुगन्धीनां तुल्यं फलं रसालया ॥
मांसप्रकारैर्विविधैर्मधुरैर्घृतपाचितैः ।
कोटिकोटिगुणं प्रोक्तं सूर्याग्निगुरुतर्पणैः ॥
घृतभक्तेन विज्ञेयं मांसतुल्यं फलं बुधैः ।
शर्कराखण्डयुक्तेन मांसादप्यधिकं फलम् ॥
यथा यथा हि स्वादूनि स्निग्धानि मधुराणि च ।
भक्ष्यान्नपानमांसानि तत्फलानि तथा तथा ॥
मातुलुङ्गफलान्येवं सुपक्वानि निवेदयेत् ।
तथाऽन्यदपि यच्छ्रेष्ठं भक्ष्याणि विविधानि च ॥
निवेद्यार्काय परमं स्थानमाप्नोति पूजितम् ।
मधुमांसासवैश्चापि प्रीयतेऽतीव भास्करः ॥
घृतेन तर्पणं कृत्वा सदा स्निग्धो भवेन्नरः ।
यस्त्वपूपं रवेर्भक्त्या सर्वरत्नसमन्वितम् ॥

* अत्र किञ्चित् त्रुटितमिति भाति ।

निवेदयति मन्त्रेण स यात्यमरलोकताम् ॥
मन्त्रेण सूर्यमन्त्रेण ।
अर्कपत्रपुटं पूर्णं मधुपर्कसमन्वितम् ।
यो निवेदयतेऽर्काय सोऽश्वमेधफलं लभेत् ॥

**ब्रह्मपुराणे,**

कृशरैः पायसैः पूपैः फलमूलघृतौदनैः ।
बलिं तु दत्त्वा सूर्याय सर्वान् कामानवाप्नुयात् ॥
क्षीरेण तर्पणं कृत्वा मनस्तापैर्न युज्यते ।
दध्ना तु तर्पणं कृत्वा कार्यसिद्धिं लभेन्नरः ॥

**अथ देयद्रव्याणि ।**

**भविष्यपुराणे,**

वासोभिः पूजयेद्भानुं यान्येवात्मप्रियाणि च ।
तथान्यैश्च शुभैर्द्रव्यैरर्चयेद्वनमालिनम् ॥

आत्मप्रियाणि वासांस्येव । तथाऽन्यैरिति प्रयोगान्तरम् । उभयत्र विश्वजिन्न्यायेन स्वर्गः फलम् । वनमालिनं वनमालायुक्तमादित्यमेव ।

वासांसि सुविचित्राणि सारवन्ति मृदूनि च ।
धूपितानि रवौ दद्याद्विकेशानि नवानि च ॥
यावद्धि वस्त्रतन्तूनां परिमाणं प्रचक्षते ।
तावद्वर्षसहस्राणि सूर्यलोके महीयते ॥
त्रिवृच्छुक्लं सुपीतं वा पट्टसूत्रादिनिर्मितम् ।
दत्त्वोपवीतं सूर्याय भवेद्वेदाङ्गपारगः ॥
श्वेतं महाध्वजं देवौ कृत्वा वा पञ्चरङ्गिकम् ।
किङ्किणीजालनिर्घोषं मायूरच्छत्रभूषितम् ॥
यस्त्वर्काय नरो दद्याच्छ्रद्धया परयाऽन्वितः ।

मन्वन्तरशतं दिव्यं मोदते दिवि देववत् ॥
ध्वजमालाकुलं कृत्वा यो भक्त्या भास्करालयम् ।
महाघण्टाष्टकं वापि दिक्षु दिक्षु निवेदयेत् ॥
कल्पायुतशतं चापि मोदते दिवि देववत् ।
शरच्चन्द्रांशुविमलं मुक्तादामोपशोभितम् ॥
मणिदण्डमयं छत्रं दद्याद्वा काञ्चनादिकम् ।
मोदते सूर्यलोके तु विमानवरमण्डितः ॥
मणिदण्डमयं रत्नघटितदण्डवत् । सुवर्णघटितं छत्रम् ।
यः शृङ्खलासमायुक्तां महाघण्टां महास्वनाम् ।
कांस्यलोहमयीं वापि बध्नीयाच्च सुरालये ॥
कांस्यमयीं लोहमयीं वेति विकल्पः । सुरालये सूर्यमन्दिरे, प्रकृतत्वात् ।
सोऽरुणानुगतः श्रीमान् ब्रध्नस्यातीववल्लभः ।
सूर्यच्छत्रतले भूत्वा सूर्यलोके महीयते ॥
महामहास्वनं दत्त्वा शङ्खं ब्रध्नालये शुभे ।
युगकोटिशतं दिव्यं ब्रह्मलोके महीयते ॥
तथा,
वितानं बहुवर्णाभं मध्ये पङ्कजशोभितम् ।
विचित्रमेकवर्णं वा नववस्त्रसुशोभितम् ॥
किङ्किणीजालसम्पन्नं वर्णकैरुपशोभितम् ।
स्रग्दामभिः प्रलम्बाभिर्घण्टाचामरभूषितम् ॥
ब्रध्नस्योपरि यो दद्यात् सर्वरत्नोपशोभितम् ।
दुकूलपट्टदेवाङ्गैर्वस्त्रैर्वा वर्णकान्वितैः ।
पट्टादिवस्त्रतन्तूनां परिसङ्ख्या तु या भवेत् ॥
तावद्युगसहस्राणि सूर्यलोके महीयते ।

भाजनं घृतसम्पूर्णं मधुना च समन्वितम् ॥
दद्यात् कृष्णतिलानां च प्रस्थमेकं च मागधम् ।
मागधं मगधदेशभवम् ।
तथा च गोपथब्राह्मणम्,
पञ्चकृष्णलको माषस्तैश्चतुःषाष्टिभिः पलम् ।
द्वात्रिंशद्भिः पलैः प्रस्थो मगधेषु प्रकीर्त्तितः ॥,
त्रिगुणं च तिलानां च पृथक् प्रस्थं प्रकल्पयेत् ।
त्रिगुणं पूर्वतिलप्रस्थापेक्षया ।
गन्धैः पुष्पैस्तथा धूपैर्नानावाद्यैर्विशेषतः ।
सर्वभक्ष्यान्नपानैश्च बलिं सूर्याय योजयेत् ॥
अनेन विधिना पूज्य रविं षष्ठ्यां विशेषतः ।
एवं सम्पूजयेत्सूर्यं नानावाद्यसमन्वितम् ॥
पूजयेच्च ततो व्योम बलिं दिक्षु प्रपूजयेत् ।
व्योम्नि देवगृहं चैव सर्वभूतानि योजयेत् ॥
एवं यः कुरुते षष्ठ्यां सन्ध्याकाले बलिं रवेः ।
स सूर्यलोकमासाद्य मोदते शाश्वतीः समाः ॥
सूर्यमाल्यापनयनं पूजान्ते च प्रमार्जनम् ।
एकैकं स्यात्सदा तुल्यं चान्द्रायणफलेन तु ॥
सूर्यमण्डलकं कृत्वा हस्तमात्रं विधानतः ।
अवकीर्याक्षतैः पुष्पैः पत्रैश्च विविधैः फलैः ॥
सुरूपः सुभगः श्रीमान् तेजस्वी देववत् सुखी ।
एवं स्वस्तिकपद्माद्यैः सुशोभां सूर्यमन्दिरे ॥
कृत्वा वर्णकापिष्टाद्यैर्लभेच्छतगुणं फलम् ।
तथा,
सूर्ययज्ञोपकरणं स्वल्पं वा यदिवा बहु ।

दत्त्वा वित्तानुसारेण सूर्यलोके महीयते ॥
भास्करायतनाभ्यासे सूर्यक्षेत्रं समन्ततः ।
देहिनां तत्र पञ्चत्वं सूर्यसायुज्यकारणम् ॥
मनुजैः स्थापिते सूर्ये क्षेत्रमानमिदं स्मृतम् ।
क्रोशार्द्धं कल्पयेद्राजन् तदर्द्धार्द्धमथापि वा ॥
तस्मादावसथं कुर्यात् सूर्यक्षेत्रे समाश्रितम् ।
भानोरायतनाभ्यासे यत्तोयं पुरतः स्थितम् ॥
सूर्यगङ्गेति तत्तोयं तत्र स्नात्वा दिवं व्रजेत् ।
यः कुर्याद्दीर्घिकां वापि तडागं भास्करालये ॥
स तारयेत्कुलशतं सूर्यलोके महीयते ।

भास्करालये इति सामीप्ये सप्तमी । तेन भस्करालयसमीपे इत्यर्थः ।

भूमिदानस्य यत्पुण्यं कन्यादानैश्च यत्फलम् ।
तत्सर्वं प्राप्यते पुण्यमम्बुजस्य प्रवादनात् ॥

अम्बुजस्य शङ्खस्य ।

तदेव पुण्यं गीतस्य नृत्यस्य च विशेषतः ।
जयशब्दस्य चाप्युक्तं हस्ततालस्य चैवहि ॥
विनीतामथवा दासीं भृतकं च निवेदयेत् ।
नरमेधस्य यज्ञस्य फलं विन्दति मानवः ॥
कृत्वा प्रेक्षणकं भानोर्दिव्यमायतने शुभे ।
अक्षयं सर्वकामीयं राजसूयफलं लभेत् ॥

प्रेक्षणकं गीतनृत्यादि ।

वेश्याकदम्बकं यस्तु दद्यात्सूर्याय भक्तितः ।
स गच्छति परं स्थानं यत्र तिष्ठति भानुमान् ॥
भेर्यादीनि तु वाद्यानि शङ्खवेण्वादिकानि च ।

ये प्रयच्छन्ति सूर्याय यान्ति ते हंसमन्दिरम् ॥

हंसः सूर्यः। वाद्यानि वाद्यभाण्डानि।

गावो वा महिषीर्वापि गजानश्वांश्च शोभनान्।

गावो गाः।

यः प्रयच्छति सूर्याय तस्य पुण्यफलं शृणु ॥

अक्षयं सर्वकामीयमश्वमेधफलं लभेत्।

गौरीं सूर्याय यो दद्यात् तरुणीं च पयस्विनीम् ॥

तेन दत्तं भवेत्सर्वं जगत्स्थावरजङ्गमम्।

गौरीं गाम्।

स्नानार्थमर्कमुद्दिश्य सुरूपां च पयस्विनीम्।

कुलीनां कापिलां दद्याद्दत्तं भवति गोशतम् ॥

कुलीनां उत्तमबहुदुग्धवतीजातम्। षण्डपरिणीतवत्सतर्या तस्मादेव षण्डात् वृषाज्जाता कुलीनेत्यन्ये।

गोवृषं परिपूर्णाङ्गमुदाराङ्गं बृहच्छतम्। (?)

गोपतिं वत्सकं वापि यथेष्टं विनिवेदयेत् ॥

गोवृषं महावृषम्। गोपतिं तरुणम्। वत्सकं प्रशस्तम्।

यावन्ति देहरोमाणि तत्प्रसूतिकुलेषु वै।

तावद्युगसहस्रेषु सूर्यलोके महीयते ॥

यो दद्यादुभयमुखीं सौरभेयीं दिवाकरे।

सप्तद्वीपां धरां दत्त्वा यत्फलं तदवाप्नुयात् ॥

सवृषं गोशतं दत्त्वा भास्कराय नराधिप।

त्रिःसप्तकुलजैः सार्द्धं शृणु यत्फलमाप्नुयात् ॥

मोहकञ्चुकमुत्सृज्य विशत्यादित्यमण्डलम्।

---

१ षण्डो गर्भाधानसमर्थः स्वेच्छाचारी वृषः। आर्षभ्यः षण्डतायोग्यः षण्डो गोपतिरिट्चरः। इत्यमरकोशात्।

अश्वमेधफलं तस्य सहस्रं यः प्रयच्छति ॥
सहस्रं गोसहस्रम् ।
गोयुक्तमश्वयुक्तं वा यो ददाति रथं रवेः ।
काञ्चनं वापि रौप्यं वा मणिरत्नार्चितं शुभम् ॥
स्वर्गलोकमितो गत्वा क्रीडते च भगाङ्गणे ।
भगः सूर्यः ।
यस्तु दारुमयं कुर्याद्रवे रथमनुत्तमम् ।
स यातिसूर्यवर्णेन विमानेनार्कमण्डलम् ॥
निवेदयति यो भक्त्या गजं घण्टाविभूषितम् ।
सूर्याय पर्वदिवसे तस्य पुण्यफलं शृणु ॥
पर्वाणि पूर्वोक्तानि ।
युगकोटिसहस्राणि युगकोटिशतानि च ।
सूर्यलोकगतश्चान्ते भवेदिन्द्रः सुराधिपः ॥
यः सूर्याय जलोपेतां सर्वसस्यप्ररोहिणीम् ।
महीं महीपतिर्दद्यात्तस्य पुण्यफलं शृणु ॥
भुवः पांसूनि यावन्ति भूतले भान्ति सत्तम ।
तावद्युगसहस्राणि सूर्यलोके महीयते ॥
एवं सर्वत्र विज्ञेयं फलं भूरेणुमानतः ।
ग्रामखेटपुरक्षेत्रविषयादिनिवेदनात् ॥
यस्त्वारामं रवेः कुर्यादाम्रबिल्वादिशोभितम् ।
जातीजम्बीरनारङ्गकरवीरैः सकुब्जकैः ॥
पुन्नागनागबकुलतिलकाशोकचम्पकैः ।
अगस्तिकदलीखण्डैस्तस्य पुण्यफलं शृणु ॥
यावद्धि पत्रं कुसुमं वीर भूरिफलानि च ।
तावद्वर्षसहस्राणि सूर्यलोके महीयते ॥

भानोरायतने यस्तु प्रपां कुर्याद्गणाधिप ।
स याति परमं स्थानं दिव्यं भौमं न संशयः ॥
शीतकालेन्धनं दत्त्वा नराणां शीतनाशनम् ।
भानोरायतने चैवमश्वमेधफलं लभेत् ॥
इकारलोप आर्षः ।
घृतं मधु पयः स्नानं तथेक्षुरसमुत्तमम् ।
स्नापनार्थं तु देवस्य ये यच्छन्ति हि मानवाः ॥
सर्वान् कामानवाप्येह ते यान्ति परमां गतिम् ।
स्नानं स्नानयोग्यम् ।
तिलतैलप्रदानेन न याति नरकं नरः ।
दीपतैलतिलाश्चैव महापातकनाशनाः ॥
दयितं भूषणं चैव रक्ते चैव तु वाससी ।
प्रयच्छ तानि देवेन्द्र भवेथाश्चैव तन्मनाः ॥
धनं धान्यं हिरण्यं वै वासांसि विविधानि च ।
ये प्रयच्छन्ति सूर्याय ते यान्ति परमां गतिम् ॥
पुस्तकं भानवे दत्त्वा भारतस्य गणाधिप ।
सर्वपापविनिर्मुक्तो विष्णुलोके महीयते ॥
रामायणस्य दत्त्वा तु पुस्तकं त्रिपुरान्तक ।
वाजपेयफलं प्राप्य गोपतेः पुरमाव्रजेत् ॥
गोपतेः सूर्यस्य ।
भविष्यच्छास्त्रसंज्ञं तु दत्त्वा सूर्याय पुस्तकम् ।
राजसूयाश्वमेधाभ्यां फलं प्राप्नोति मानवः ॥
इतिहासपुराणाभ्यां पुण्यपुस्तकवाचनम् ।
यस्तु कारयते देव भानोरायतने नरः ॥
सर्वान् कामानवाप्येह याति सूर्यसलोकताम् ।

शृण्वन्ति तानि ये नित्यं भक्त्या श्रद्धासमन्विताः ॥
दत्त्वा तु वाचके वृत्तिं गच्छन्ति परमां गतिम् ।
सुवर्णमणिमुक्तादि रजतं च तथोत्तमम् ॥
वस्त्राणि विविधानीह यच्चान्यदपि वल्लभम् ।
तत्तद्देवाधिदेवाय भास्कराय निवेदयेत् ॥
पुष्पाणि करवीराणि प्रियं रक्तं च चन्दनम् ।
गुग्गुलं चापि धूपानां नैवेद्ये मोदकाः प्रियाः ॥
पूजाकरो भोजकश्च घृतदीपस्तथा प्रियः ।
दानं प्रियं खगश्रेष्ठ वाचके यत्प्रदीयते ॥
ये त्वकामा नराः सम्यक् गेयं कुर्वन्ति शोभनम् ।
तेषां ददाति विश्वेशो भगवान् भक्तिमीश्वरः ॥
पौर्णमास्याममायां च दर्शनं पुण्यदं स्मृतम् ।
सप्तम्यामथवा षष्ठ्यां दिवसेऽथ रवेः सदा ॥
यात्रां कुर्वन्ति ये भानोर्नराः संवत्सरादपि ।
षण्मासाद्वा गणश्रेष्ठ तेषां धर्मफलं शृणु ॥
ध्यानिनो योगिनश्चैव प्राप्नुवन्ति हि यां गतिम् ।
तामेव प्रतिपद्यन्ते न पुनर्मारगामिनः ॥
मरणं मारस्तं न प्राप्नुवन्ति, अपुनर्भवा इत्यर्थः ।
तथा,
अयं विनैव मन्त्रेण पुण्यराशिः प्रवर्त्तते ।
स्यादयं मन्त्रयुक्तश्चेत्पुण्यं शतगुणोत्तरम् ॥
तस्मान्मन्त्रेण सूर्याय स्नानं गन्धफलादिकम् ।
गावश्च बहुरूपाणि हेमाद्यं च निवेदयेत् ॥
खखोल्कायेति विज्ञेयो मन्त्रः सर्वार्थसाधकः ।
सर्वत्रैवाधिकश्चायं प्रणवद्वयमध्यगः ॥

ॐ खखोल्काय शान्ताय कारणत्रयहेतवे ।
निवेदयामि चात्मानं नमस्ते ज्ञानरूपिणे ॥
खखोल्काय नमस्कृत्य सर्वैः पापैः प्रमुच्यते ।
सर्वार्थसाधकं मन्त्रं सूर्यमन्त्रं षडक्षरम् ॥
कीर्तितं मे पुरा देवौ पशुपाशविमोचनम् ।
तस्मादनेन मन्त्रेण प्रकुर्वीतार्चनं रवेः ॥
पशुपाशः संसारबन्धस्तस्य विमोचनम् । सूर्यपूजाप्रकारमाह-
यमः,
समे प्रदेशे भूमिं तु गोमयेनोपलेपयेत् ।
गोमयेनोपालिप्तां तु मृदा भूयोऽपि लेपयेत् ॥
तत्राष्टपत्रं कमलं वर्णकैः कारयेच्छुभम् ।
आदित्यमण्डलं तस्य कर्णिकायां तु कारयेत् ॥
गन्धमाल्योपहारेण तत्रादित्यं समर्चयेत् ।
धूपदीपाग्निपूजाभिर्ब्राह्मणानां च तर्पणैः ॥
तेन तुष्यति धर्मात्मा धर्मराजो न संशयः ।
अग्निपूजा होमः ।
**भविष्यपुराणे,**
अथार्चनविधिं वक्ष्ये धर्मकेतोरनुत्तमम् ।
सर्वकामप्रदं पुण्यं विघ्नघ्नं दुरितापहम् ॥
सूर्यमन्त्रैः पुरा स्नात्वा यजेत्तेनैव भास्करम् ।
ततस्तत्र प्रवक्ष्यामि स्नानमादौ समासतः ॥
आचान्तस्तनुमालभ्य मृदा च सुविशुद्धया ।
कृत्वा नीराजनं पुत्र संशोध्य च जलं ततः ॥
स्नात्वा हृदयपूतेन वारिणा मत्कुलोद्भव ।
हृदयं हृदयमन्त्रः खं स्वाहेति ।

उत्थायाऽऽचम्य तेनैव वाससी परिधाय च ॥
द्विराचम्याथ सम्प्रोक्ष्य तनुं सप्ताक्षरेण तु ।
सप्ताक्षरः ॐखखोल्काय नमः ।
उपस्थानं च तेनैव रवेः कृत्वार्घमेव च ॥
दत्त्वा तेनैव जप्त्वाऽथ मन्त्रं ध्यात्वाऽर्कवद् हृदि ।
गत्वाऽप्यायतनं शुद्धमार्कमर्कतनुं यजेत् ॥
पूरकं कुम्भकं कृत्वा रेचकं च समाहितः ।
कृत्वोङ्कारेण दोषांस्तु हन्यात्कायादिसम्भवान् ॥
आदिपदेन वाङ्मनसयोरुपादानम् ।
वायव्याग्नेयमाहेन्द्रवारुणीभिर्यथाक्रमम् ।
किल्बिषं धारणाभिश्च हन्याद् बुद्ध्यनुसारतः ॥
शोषणे दहने स्तम्भे प्लावने च यथाक्रमम् ।
वाय्वग्नीन्द्रजलाख्याभिर्धारणाभिः कृते सति ॥
ध्यायेद्विशुद्धमात्मानं प्रणवेनार्कवत् स्थितम् ।
देहं तेनैव सञ्चिन्त्य पञ्चभूतमयं परम् ॥
तेनैव प्रणवेनैव । सञ्चिन्त्य सम्पाद्य ।
स्थूलं सूक्ष्मं तथाऽङ्गानि स्वस्वस्थाने प्रकल्प्य च ।
विन्यस्याङ्गानि खादीनि हृदाद्यानि हृदादिषु ॥
खं स्वाहा हृदयं भानोः खो नमश्च शिरः परम् ।
ल्का स्वाहा शिखाऽर्कस्य य हुं कवचमेव च ॥
फडस्त्रं च दिशां भाग आदितः प्रणवः स्मृतः ।
सपूर्वप्रणवस्यास्य मन्त्रकर्मप्रसिद्धये ॥
प्रथमोङ्कारसाहितस्य ।
एभिर्जलं त्रिधा जप्त्वा स्थानं द्रव्याणि तेन च ।
सम्प्रोक्ष्य पूजयेत्सूर्यं पुष्पगन्धादिभिः शुभैः ॥

दिवा मूर्त्तिषु सर्वासु रात्रावग्निं प्रपूजयेत् ।

मूर्त्तिषु सूर्यप्रतिमादिषु । अग्निं सूर्यरूपतया ।

प्राक्पश्चिमोदगास्यश्च दिवासन्ध्यानिशासु च ।

कृत्वाऽक्षरेण षट्पत्रं ध्यात्वा पद्मं सकर्णिकम् ॥

आदित्यं मण्डलान्तःस्थं तत्र देवं प्रकल्पयेत् ।

खादिषडक्षरबद्धमोङ्कारकर्णिकं पद्मं कृत्वा ध्यात्वा च तत्र पद्मे देवं भावयेदित्यर्थः ।

प्रभामण्डलमध्यस्थं देवं ध्यात्वा यथा पुरा ।

सर्वलक्षणसम्पूर्णं सहस्रकिरणोज्ज्वलम् ॥

रक्तैर्गन्धैश्च पुष्पैश्च चरुभिर्बलिभिस्तथा ।

रक्तचन्दनमिश्रैश्च वस्त्राभरणैः शुभैः ॥

आवाहनादिकर्माणि रक्षां तु हृदयेन च ।

आदिशब्देन सन्निधापनतत्सन्निवेदनाभिमुखीकरणप्रसादनानि । हृदयेन मनसा ।

तच्चित्तेन सदा कुर्याज्ज्ञातकर्मक्रमं बुधः ।

कृत्वा चावाहनं प्राणौ देहस्य स्थापनं तथा ॥

यावद्यागावसानं तु सान्निध्यं परिकल्प्य च ।

दत्त्वा पाद्यादिकां पूजां शक्त्या चान्नं निवेदयेत् ॥

जप्त्वा च विधिवद्ध्यात्वा ततो देवं विसर्जयेत् ।

एष कर्मक्रमः प्रोक्तः सर्वेषां यजनक्रमे ॥

अथावरणपूजा ।

प्रवक्ष्यामि यथास्थानं पद्मे सावरणे तथा ।

आदित्यं कर्णिकास्थं तु दलेष्वङ्गानि सर्वशः ॥

सोमादीन् केतुपर्यन्तान् ग्रहांश्चैवोदगादितः ॥

उदगादितः उत्तरादिवायव्यान्तम् ।

भक्तिमान् लोकपालांश्च क्रमादावरणेष्वथ ।
तदस्त्राणि च रक्षार्थं स्वमन्त्रैः पूजयेत् क्रमात् ॥
प्रणवैः स्वाभिधानैश्च चतुर्थ्यन्तैर्नियोजिताः ।
सर्वेषां कथिता मन्त्रा मुद्राश्च कथयाम्यतः ॥
प्रणवैरिति । यथा, ॐसोमाय नमः ॐइन्द्राय नम इत्यादि ।
व्योममुद्रा नतिः पद्मा महाश्वेताऽस्त्रमेव च ।
पञ्च मुद्राः समाख्याताः सर्वकर्मप्रसिद्धये ॥
उत्तानौ तु करौ कृत्वा अङ्गुल्यो ग्रन्थिताः क्रमात् ।
उत्तानमेव जानुस्थौ समेनाधोमुखौ स्थितौ ॥
तर्जन्यौ मध्यमस्थे तु ज्येष्ठाग्रेवाऽनुजोपरि ।
मुद्रेयं सर्वमुद्राणां व्योममुद्रेति कीर्त्तिता ॥
सर्वकर्मसु योज्येयं यथास्थानं प्रकल्पयेत् ।
यथार्थं च प्रयोक्तव्या यज्ञयोगजपादिषु ॥
संयोज्योर्ध्वमुखौ हस्तौ नमस्कुर्यान्निरन्तरम् ।
अनया पूजितं सर्वं जप्यं ध्येयं च यत्स्मृतम् ॥
मणिबन्धौ समौ युक्तौ कृत्वाऽङ्गुल्यः शुभावहाः ।
सारिताः ।
अङ्गुष्ठौ मध्यमस्थौ तु पद्मा पद्मासने स्थिता ।
पद्मावत्प्रसृताः सर्वाः महाश्वेता रवेः स्मृता ॥
अत्र सन्निहितो नित्यमादित्यो वरदः स्मृतः ।
हस्तावूर्ध्वमुखौ कृत्वा अनामाङ्गुष्ठयोजने ॥
अङ्गुल्यः प्रसृताः सर्वा अस्त्रमुद्रेति कीर्तिता ।
द्रव्याणां शोधने योज्या रक्षार्थं च विशेषतः ॥
अनया बद्धया सर्वं रक्षितं शोधितं भवेत् ।
अर्घं दत्त्वा प्रयोक्तव्या पूजान्तेषु विशेषतः ॥

जपे ध्यानावसाने च यदीच्छेत्सिद्धिमात्मनः ।
अनेन विधिना योऽब्दं यजेद्भानुमतन्द्रितः ॥
स लभेदीप्सितान् कामानिहामुत्र न संशयः ।
रोगार्त्तो मुच्यते रोगाद्धनहीनो धनं लभेत् ॥
राज्यभ्रष्टो लभेद्राज्यमपुत्रः पुत्रमाप्नुयात् ।
प्रज्ञां मेधां समृद्धिं च चिरं जीवति मानवः ॥
सुरूपां लभते कन्यां कुलीनां पुरुषो ध्रुवम् ।
सौभाग्यं स्त्री कुरूपापि कन्या च पतिमुत्तमम् ॥
अविद्यो लभते विद्यामित्युक्तं भानुना पुरा ।
नित्ययागः स्मृतो ह्येष धर्माध्यक्षः सुखावहः ॥
प्रजापशुविवृद्धिस्तु निष्कामस्यापि जायते ।
नित्ययागयुक्तत्वान्नित्येयं पूजा ।

अथ चक्रपूजा ।

**भविष्यपुराणे**, साम्ब उवाच ।

किंप्रमाणं लिखेच्चक्रं तत्र पद्मं कियद्भवेत् ।
नेमिपत्रारनाभीनां विभागः क्रियते कथम् ॥

श्रीवासुदेव उवाच ।

चतुःषष्ट्यङ्गुलं श्रेष्ठं कृत्वा वृत्तं प्रमाणतः ।
अष्टाङ्गुला भवेन्नेमिर्विस्तारोभयतः सदा ॥
नाभिक्षेत्रं तथैव स्यात्पद्मं तत्त्रिगुणं भवेत् ।
तथैव अष्टाङ्गुलम् । त्रिगुणमष्टाङ्गुलत्रिगुणं चतुर्विंशत्यङ्गुलमित्यर्थः ।

आरक्षेत्रं च पद्मस्थकर्णिकाकेसराणि च ।
क्षेत्रस्य पादपादेन शेषपत्राणि कारयेत् ॥
क्षेत्रस्य नाभिक्षेत्रस्य । पादपादोऽङ्गुलचतुष्कम् ।

पत्रसन्धिश्च पादाङ्कं क्रमात्तत्रापि भिद्यते ।
उन्नतं कमलं तत्तु कुर्यान्नाभ्यन्तरेशयम् ॥
अहीनाः सुविभक्ताश्च कर्त्तव्याश्च यथाक्रमात् ।
अङ्गुलं द्वारमूलं स्यादग्रतस्त्रिगुणं ततः ॥
भूमिः पीता बहिर्ज्ञेया कार्णिका केसराणि च ।
सितं नाभिस्थलं तत्र द्वाराणि परिकल्पयेत् ॥
पूर्वाह्ने चापराह्ने च वरुणं चार्चयेत्सदा ॥
द्वाराण्येतानि संवृत्य यथोक्तविधिना यजेत् ॥
यथोक्तदेवताः सर्वाः स्वमन्त्रैरेव भक्तितः ।
चक्रमेवं समुद्दिष्टं यजनार्थं मया तव ॥
यज्ञेनानेन सम्बन्धो दीक्षितस्यार्कमण्डले ।
इत्थं तु भानुना पूर्वमिदमुक्तं वरानन ॥
साम्ब उवाच ।
के मन्त्राश्चक्रयज्ञेऽस्मिन् देवतानां प्रकीर्तिताः ।
यज्ञक्रमश्च कः प्रोक्तो रूपं किञ्च पृथक् पृथक् ॥
श्रीवासुदेव उवाच ।
खखोल्कहृदयं वत्स पूर्वोक्तकमले यजेत् ।
कार्णिकायां दलेष्वेवमङ्गान्युपहृदा सह ॥
नाममन्त्राश्चतुर्थ्यन्तास्तेषां पूर्वोक्तकोटयः ।
नमस्कारावसानाश्च एष एव विधिः स्मृतः ॥
तेनैवं ॐसूर्याय नमः इत्यादि ।
स्वाहान्ता होमकाले च कर्मस्वन्येषु ते पुनः ।
यथावर्णावसानाश्च प्रयोक्तव्याः समासतः ॥
ॐखखोल्काय विद्महे दिवाकराय धीमहि ।
तन्नः सूर्यः प्रचोदयात् ।

सावित्रीयं महाबाहो चतुर्विंशाक्षरा मता ।
सर्वतत्त्वमयी पुण्या ब्रह्मगोत्रार्कवल्लभा ॥
एवं मन्त्राः प्रयोक्तव्याः स्वकर्मस्थैरतन्द्रितैः ।
अन्यथा विफलं कर्म भवेदिह परत्र च ॥
एतत्सर्वं प्रयत्नेन ज्ञात्वा मन्त्रान् विधिं तथा ।
यथावत् कर्म तत् कृत्वा साधयेदीप्सितं फलम् ॥
अतः परं प्रवक्ष्यामि यथा पूज्यो दिवाकरः ।
स्थण्डिले यदुशार्दूल निश्चितैकाग्रमानसैः ॥
स्थानैरेवाष्टभिः कार्यं चक्रं कालात्मकं शुभम् ।
मध्ये पद्माकृतिं चक्रमारैर्द्वादशभिर्युतम् ॥
तन्मध्ये कमलं प्रोक्तं पत्राष्टकसमन्वितम् ।
अरुणं पूजयेत्प्राज्ञः सदा देवाग्रगं शुभम् ॥
दक्षिणे पूजयेद्देवीं तुषितां भास्करस्य तु ।
रेवन्तं पश्चिमे पार्श्वे उत्तरे पिङ्गलं सदा ॥
सम्पूज्य यदुशार्दूल श्रेयसे सततं बुधः ।
आग्नेय्यां लेखकं वीर नैर्ऋत्यामाश्विनौ तथा ॥
लेखकं चित्रगुप्तम् ।
वायव्यां पूजयेद्देवं मनुं वैवस्वतं विभुम् ।
ऐशान्यां पूजयेद्देवीं यमुनां लोकपावनीम् ॥
द्वितीयावरणे वीर पूर्वतः पूजयेद्यमम् ।
दक्षिणे तपतीं देवीं पश्चिमे गरुडं तथा ॥
उत्तरे नागराजं च पुण्यमैरावतं तथा ।
आग्नेय्यां पूजयेद्धेलिं महेलिं नैर्ऋते तथा ॥
वायव्यामुर्वशीं देवीमीशाने विनतां तथा ।
तृतीयावरणे पूर्वे पूजयेद् गुरुमादरात् ॥

पश्चिमे त्वर्कपुत्रं तु उत्तरे धिषणं तथा ।
ईशाने शिवपुत्रं तु सोममाग्नेयमण्डले ॥
पूजयेद्दक्षिणे कोणे नैर्ऋते राहुमादरात् ।
वायव्यां विकचं वीर पूजयेत्सततं बुधः ॥
चतुर्थावरणे देवं पूजयेल्लेखमादरात् ।
आग्नेये शाण्डिलीपुत्रं दक्षिणे दाक्षिणाधिपम् ॥
विरूपाक्षं नैर्ऋतके जलेशं पश्चिमे तथा ।
वायुदेवं च वायव्ये सततं पूजयेन्नरः ॥
ईशाने देवमीशानं पूजयेत्सततं बुधः ।
उत्तरे यक्षराजं च कुबेरं पूजयेद् बुधः ॥
पञ्चमे पूजयेद्वीर सदा चावरणे बुधः ।
पूर्वतः परमां देवीं महाश्वेतां महाशचीम् ॥
श्रियं बुद्धिं विभूतिं च सन्नतिं चोन्नतिं तथा ।
पृथिवीं यदुशार्दूल महाकीर्त्तिं तथैव च ॥
इन्द्रं विष्णुं तथा सूर्यं भगमर्यमणं तथा ।
विवस्वन्तं तथार्कं च त्वष्टारं किरणोज्ज्वलम् ॥
पूज्या आवरणे षष्ठे एवमेते दिवाकराः ॥
शिरो नेत्रे तथा वर्म अस्त्रं च यदुनन्दन ।
पत्रस्थं यदुशार्दूल सप्तमे पूजयेत्सदा ॥
अथान्यद्यदुशार्दूल सप्तमावरणे बुधः ।
यक्षरक्षांसि गन्धर्वान् मासान् पक्षानहानि च ॥
संवत्सरं तथा पुत्र एतान् सम्पूजयेत्परे ।
ॐ खखोल्काय नमः ।
मूलमन्त्राक्षराणीह चाङ्गानि परिचक्षते ।
अनेन विधिना यस्तु पूजयेत्सततं रविम् ॥

नित्यदोभयसप्तम्यां स गच्छेत्परमां गतिम् ।
इति चक्रपूजा ।

**अथ वैदिकी स्थण्डिलपूजा ।**

भीष्म उवाच ।
वेदोक्तविधिमन्त्रैश्च यथा सम्पूज्यते रविः ।
तथा मे सकलं ब्रूहि वैदिकं विधिमुत्तमम् ॥
ब्रह्मोवाच ।
खखोल्कं विमलं पुण्यं पूजयित्वा विभावसुम् ।
सप्तावरणसंयुक्तमष्टपत्रं सकर्णिकम् ॥
केसरालं त्रिदैवत्यं पञ्चवर्णं महाद्भुतम् ।
परीक्ष्य विधिवद् भूमिं परीक्षाविधिना कृताम् ॥
दीप्तादि पूर्वादारभ्य यावदीशानगोचरम् ।
न्यसेच्छक्त्यष्टकं मन्त्री मध्यतः सर्वतोमुखीम् ॥
दीप्ता सूक्ष्मा जया भद्रा विभूतिर्विमला तथा ।
अमोघा विद्युता चैव नवमी सर्वतोमुखी ॥
ततस्त्वावाहयेद्भानुं स्थापयेत्कर्णिकोपरि ।
उपस्थानं तु वै कृत्वा मन्त्रेणानेन सुव्रत ॥
उदुत्यं जातवेदसमिति मन्त्रः प्रकीर्त्तितः ।
अग्निन्दूतं पुर इति मन्त्रेणावाह्य सुव्रत ॥
आकृष्णेन रजसेति मन्त्रेणानेन चार्चयेत् ।
अपत्येतायवो देवीं दीप्तां तेन प्रपूजयेत् ॥
आशुः शिशान एतेन सूक्ष्मां देवीं सदार्चयेत् ।
तरणिर्विश्वदर्शतो अनेन सततं जयाम् ॥
प्रत्यङ् देवानां विशेति भद्रां देवीं समर्चयेत् ।
विभूतिमर्चयेन्नित्यं येनापावकचक्षसा ॥

विद्यामेषिरजः पृथु अनेन विमलां सदा ।
अमोघां पूजयेन्नित्यं मन्त्रेणानेन भूधरम् ॥
सप्तत्वा हरितोरथ सिद्धिदां सर्वकर्मसु ।
विद्युतां वार्चयेद्देवमयुक्तसप्तशुन्ध्युवः ॥
नवमीं पूजयेद्देवीं सततं सर्वतोमुखीम् ।
मन्त्रेणानेन वै कृष्ण उद्वयन्त मसेति च ॥
उद्यन्नद्यमित्रमह प्रथमं चक्षुषं यजेत् ।
द्वितीयं पूजयेत्कृष्ण शुकेषु हरिमेति च ॥
उदगादयमादित्यो अनेनापि तृतीयकम् ।
तत्सवितुर्वरेण्यमिति चतुर्थं परिकीर्त्तितम् ॥
स हिमहिता इति च पञ्चमं परिकीर्त्तितम् ।
हिरण्यगर्भः समवर्त्ततेति षष्ठं बीजं प्रकीर्त्तितम् ॥
सविता पश्चात्तादिति सप्तमं देवसत्तमम् ।
एवं बीजानि विन्यस्य आदित्यं स्थापयेद्विभो ॥
बीजानि ॐखखोल्काय नमः इतिमन्त्रसप्ताक्षराणि ।
आदित्यं स्थापयित्वा तु पश्चादङ्गानि विन्यसेत् ।
आग्नेय्यां हृदयं न्यस्य ऐशान्यां शिर ईरितम् ॥
नैर्ऋत्यां तु शिखा चेति कवचं वायुगोचरे ।
अस्त्रं दिक्षु च विन्यस्य पूर्वस्याश्चोत्तरानुगम् ॥
नेत्रपश्चिमतो न्यस्य बीजेन स्वेन कर्णिकाम् ।

अस्त्रं पूर्वत आरभ्य चतुर्दिक्षु विन्यसेदित्यर्थः । बीजेन मन्त्राक्षरबीजेन । कर्णिकां कर्णिकायाम् ।

आत्मासि प्रणेतेति अनेन हृदयं यजेत् ।
शिरस्तु पूजयेत्कृष्ण आयुष्यं वर्चसेति वै ॥
गायत्र्या तु शिखा पूज्या नैर्ऋत्यां तु व्यवस्थिता ।

जीमूतस्येव भवति प्रतीकं कवचं यजेत् ।
धन्वनागा धन्वनेति तस्यां चास्त्रं प्रपूजयेत् ॥
नेत्रं तु पूजयेद्विप्र अश्मनस्तेजोसीति वै ।
बाह्यतः पूर्वतः सोमं दक्षिणेन बुधं तथा ॥
पश्चिमेन गुरुं न्यस्य उत्तरेण तु भार्गवम् ।
आग्नेय्यां मङ्गलं न्यस्य नैर्ऋत्यां तु शनैश्चरम् ।
वायव्यां तु न्यसेद्राहुं केतुमीशानगोचरे ।
उद्बुध्यस्व महाबाहो केतुमेवं सदा यजेत् ॥
बृहस्पते अति मन्त्रेण पूजयेत्सततं गुरुम् ।
शुक्रः शुशुक्वानिति भार्गवं कृष्ण पूजयेत् ॥
अग्निर्मूर्द्धेति मन्त्रेण सदा मङ्गलमर्चयेत् ।
शमाग्निरग्निरित्येव पूजयेद्भास्करात्मजम् ॥
कयानश्चित्र मन्त्रेण कृष्ण राहुं समर्चयेत् ।
केतुं कृण्वन्नकेतवेइति तं पूजयेद् बुधः ॥
बाह्यतः पूर्वतः शक्रं दक्षिणेन यमं तथा ।
वरुणं पश्चिमे भागे उत्तरे धनदं तथा ॥
ईशाने ईश्वरं पूज्य आग्नेय्यामग्निरर्च्यते ।
नैर्ऋते तु विरूपाक्षं पवनं वायुगोचरे ॥
महां इन्द्र इत्यनेन मन्त्रेणेन्द्रं समर्चयेत् ।
उदीरतामवरेति सदा वैवस्वतं यजेत् ॥
वरुणस्योत्तम्भनेति वरुणं कृष्ण पूजयेत् ।
इन्द्रं सामेति मन्त्रेण अनेन धनदं यजेत् ॥
येनेदं भूतमिति च अनेनेशं सदाऽर्चयेत् ।
पावकं पूजयेत्कृष्ण अग्निमीळे पुरोहितम् ॥
रक्षोहणं वाजिनेति विरूपाक्षं सदा यजेत् ।

यथाक्रमं चायुधानि सर्वेषां पूजयेद् बुधः ॥
बाह्यतो देवशार्दूल इन्द्रादीनां समन्ततः ।

अथ सूर्यध्यानम् ।

रक्तवर्णं तथा तेजःसितपद्मोपरिस्थितम् ।
सर्वलक्षणसम्पन्नं सर्वाभरणभूषितम् ॥
द्विभुजं त्वेकवक्त्रं च सौम्यं सपङ्कजं करे ।
वर्त्तुले तेजसो बिम्बे मध्यस्थं रक्तवाससम् ॥
आदित्यस्य इदं रूपं सर्वलोकेषु पूजितम् ।
ध्यात्वा सम्पूजयेन्नित्यं स्थण्डिले मण्डलाश्रयम् ॥

इति स्थाण्डिलपूजा ।

अथ वैदिकविधानेन रवेर्मूर्त्तिपूजा ।

ब्रह्मोवाच ।
शृणुष्वैकमनाः सूर्यो मूर्त्तिस्थो येन पूज्यते ।
इषेत्वा इति मन्त्रेण उत्तमाङ्गं सदाऽर्चयेत् ॥
अग्निमीळेति मन्त्रेण पूजयेद्दक्षिणं करम् ।
अग्नआयाहि मन्त्रेण करं वाममथार्चयेत् ॥
शन्नो देवीति मन्त्रेण पादौ देवस्य पूजयेत् ।
आजिघ्र इति मन्त्रेण क्षालयेद्विधिवद्रविम् ॥
सिनीवालीतिमन्त्रेण स्नापयेच्छङ्खवारिणा ।
यज्ञायज्ञेति मन्त्रेण कषायैश्च विरूक्षयेत् ॥
स्नापयेत्पयसा कृष्ण आप्यायस्वेति मन्त्रतः ।
दधिक्राव्ण इति दध्ना स्नापयेद्विधिवद्रविम् ॥
तेजोऽसि शुक्रमित्येतत् घृतेन स्नपनं चरेत् ।
याओषधीति मन्त्रेण स्नानमोषधिभिः स्मृतम् ॥
उद्वर्त्तयेत्ततो भानुं द्रुपदेति सुराधिप ।

मानस्तोकेति मन्त्रेण युगपत् स्नपनं चरेत् ॥
युगपत् स्नानीयद्रव्याणां संवलनेन ।
विष्णोरराटमन्त्रेण स्नापयेद्गन्धवारिणा ।
जातवेदसमुच्चार्य वस्त्रपूतेन वारिणा ॥
सौवर्णेन तु पात्रेण आदौ पाद्यं निवेदयेत् ।
इदंविष्णुर्विचक्रमे मन्त्रेणार्घं प्रदापयेत् ॥
धूरसीति मन्त्रेण धूपं दद्यात्सगुग्गुलम् ।
समिद्धोअञ्जन्मन्त्रेण अञ्जनं तु प्रदापयेत् ॥
आरार्तिकं वै दद्याच्चदीर्घायुष्ट्वाय वर्चसे ।
सहस्रशीर्षापुरुषो रविं शिरसि पूजयेत् ।

इति वैदिकी मूर्त्तिपूजा ।

अथ व्योमपूजा ।

**भविष्यपुराणे,**

ब्रह्मोवाच ।

एवं विश्वमयं व्योम सर्वग्रहमयं तथा ।
तस्माद्योऽर्चयते व्योम तेन सर्वेऽर्चिताः सुराः ॥
तस्मात्सर्वप्रयत्नेन शुभार्थी व्योम अर्चयेत् ।
यस्त्वर्चयेत् सदा व्योम भक्त्या श्रद्धासमन्वितः ॥
वृषध्वजसदो राजन् स गच्छेन्नात्र संशयः ।

**तथा,**

यः कृत्वा पार्थिवं व्योम अर्चयेत् शुभवेदिकम् ।
इहैव बलवान् श्रीमान् सोऽन्ते अर्कत्वमाप्नुयात् ॥
त्रिसन्ध्यं योऽर्चयेद्व्योम कृत्वा बिम्बं तु पार्थिवम् ।
समैकादशकं यावत्तस्य पुण्यफलं शृणु ॥
अनेनैव स देहेन भानुः संस्तिष्ठते भुवि ।

पापहा सर्वमर्त्यानां दर्शनात्स्पर्शनादपि ॥
उद्धृत्य दिवि संस्थाप्य कुलानामेकविंशतिम् ।
गीर्वाणैः सहितो नित्यं मोदते दिवि सूर्यवत् ॥
योऽपि पिष्टमयं व्योम सर्वगन्धोपशोभितम् ।
कुसुमैस्तु सुगन्धैश्च फलैश्च विविधैर्नृप ॥
भक्ष्यभोज्यरसैश्चैव घृतदीपैरलङ्कृतम् ।
नानावर्णसमायुक्तं नानागन्धसमन्वितम् ॥
तस्य दक्षिणपार्श्वे तु विन्यसेदगुरुं विभो ।
दद्याद्वै पश्चिमे भागे श्रीखण्डं चन्दनं शुभम् ॥
उत्तरे चन्दनं दद्यात् रक्तं दद्याच्च पूर्वतः ।
रक्तं कुङ्कुमम् ।
एवं वित्तानुसारेण कृत्वा विभवविस्तरम् ।
कृष्णपक्षे तु सप्तम्यां भास्कराय निवेदयेत् ॥
सकृदेव तु यः कुर्याद्व्योम भरतसत्तम ।
यत्फलं तु भवेत्तस्य तन्मे निगदतः शृणु ॥
सर्वपापविनिर्मुक्तः सर्वदुःखविवर्जितः ।
निष्कलः सर्वगो भूत्वा प्रविशेत् परमं पदम् ॥
तेजसा हरिसङ्काशः प्रभयाऽर्कसमप्रभः ।
हेलया क्रीडमानोऽपि यः कुर्याद्व्योमपूजनम् ॥
स राजा जायते राजन् पर्वतेषु समन्ततः ।
सितचन्दनतोयेन व्योम कृत्वा विलिप्य च ॥
सितचन्दनतोयेन विलिप्येत्यर्थः ।
श्वेतैर्विकसितैः पद्मैः सम्पूज्य प्रणिपत्य च ।
पङ्कजे विमले सौम्ये निश्छिद्रे पुष्पिते सति ॥
मध्ये केसरजालस्य व्योम स्थाप्यं सुशोभनम् ।

अङ्गुष्ठपर्वमात्रं तु सर्वगन्धसमन्वितम् ॥
अग्रे च स्थापयेत्तत्र भास्करस्य नरोत्तम ।
पूजयेत्करवीरैश्च तथा रक्तैश्च चन्दनैः ॥
सघृतं गुग्गुलं दग्ध्वा प्रणम्य शिरसा तथा ।
कुङ्कुमं पूर्वपार्श्वे तु दद्याद्व्योम्नः समाहितः ॥
दक्षिणे चागुरुं दग्ध्वा पश्चिमे चन्दनं सितम् ।
चतुःसमं चोत्तरेण दद्याद्व्योम्नि विचक्षणः ॥
दद्यान्मध्ये तु सम्पूर्णे रक्तचन्दनमादरात् ।
पूजयेद्विविधैः पुष्पैस्तथा चागुरुचन्दनैः ॥
धूपं कृष्णागरुभवं सघृतं चाथ गुग्गुलम् ।
वासांसि च सुपुष्पाणि विकेशानि निवेदयेत् ॥
पायसं घृतसंयुक्तं घृतदीपांश्च दापयेत् ।
सर्वं निवेद्य मन्त्रेण सूर्यायामिततेजसे ॥
एवं योऽर्चयते व्योम स्वस्त्रगन्धमयं कृतम् ।
सर्वपापविनिर्मुक्तः स याति परमां गतिम् ॥

इति व्योमपूजा ।

अथ रूपदानम् ।

भविष्यपुराणे,

रूपं[1] पिष्टमयं कृत्वा बहुरत्नविभूषितम् ।
युक्तोपवीतसंयुक्तमव्यङ्गं नरसत्तम ॥
रूपं रवेरेव ।
मुक्ताफलानि दन्तेषु विद्रुमौ चौष्ठयोर्न्यसेत् ।
वज्रद्वयं तु नेत्राभ्यां वैदूर्यं चाथ सम्भवे ॥
हेमरूप्यं च हस्ताभ्यां ताम्रं पादेषु कल्पयेत् ।

---

१ प्रतिकृतिम् ।

अण्डजानण्डजैर्वस्त्रैः पवित्रैर्वेष्टयेद्रविम् ॥
अण्डजानण्डजैरिति कौशेयकार्पासजैः ।
शुभगन्धान्वितैर्गन्धैः सुपुष्पैश्चापि भूषयेत् ।
भक्ष्यैः पेयैश्च विविधैर्बलिं तत्रोपकल्पयेत् ॥
भोजयेत् सूर्यभक्तांश्च विप्रान् भक्त्या च दक्षयेत् ।
दक्षयेत् तोषयेत् ।
प्रीयतां मे रविर्नित्यमित्युक्त्वा स्थापयेद्द्विजान् ।
कृष्णपक्षे तु सप्तम्यां भास्कराय निवेदयेत् ॥ इति ।
अत्र रविप्रीतिः फलम् ।
मूर्त्तिजप्योपहारेण पूजया च विवस्वतः ।
उपवासेन षष्ठ्यां वै सर्वपापैः प्रमुच्यते ॥
प्रणिधाय शिरो भूम्यां नमस्कारं करोति यः ।
तत्क्षणात् सर्वपापेभ्यो मुच्यते नात्र संशयः ॥
भक्तियुक्तो नरो योऽसौ रवेः कुर्यात्प्रदक्षिणम् ।
प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा ॥
सूर्यं मनसि यः कृत्वा कुर्यात् व्योमप्रदक्षिणम् ।
प्रदक्षिणीकृतास्तेन सर्वे देवा भवन्ति वै ॥
अग्निहोत्राश्च वेदाश्च यज्ञाश्च बहुदक्षिणाः ।
भानोर्भक्तिनमस्कारकलां नार्हन्ति षोडशीम् ॥
तीर्थानां च परं तीर्थं मङ्गलानां च मङ्गलम् ।
पवित्राणां पवित्रं च प्रपद्यध्वं दिवाकरम् ॥
शक्राद्यैः संस्तुतं देवैर्ये नमस्यन्ति भास्करम् ।
सर्वकिल्बिषनिर्मुक्ताः सूर्यलोकं व्रजन्ति ते ॥
भविष्यपुराणे,
कृत्वा प्रदक्षिणं यस्तु नमस्कारं प्रयोजयेत् ।

राजसूयाश्वमेधानां सकलं विन्दते फलम् ॥
त्रिवृत्प्रदक्षिणं कृत्वा यो नमस्कुरुते रविम् ।
भूमौ गतेन शिरसा स याति परमां गतिम् ॥
प्रणम्य दण्डवद्भूमौ नमस्कारेण योऽर्चयेत् ।
स यां गतिमवाप्नोति न तां क्रतुशतैरपि ॥
सूर्यगत्या जगत्सर्वं दृश्यते सचराचरम् ।
अग्नेरात्मा ब्रध्न एव न त्वस्यात्मा च पावकः ॥
यस्त्वग्निकार्यं विधिवत् कुर्याद्ब्रध्नस्य चालये ।
ब्रध्नमुद्दिश्य देवेन्द्र स याति परमां गतिम् ॥
सौरं सन्ध्याबलिं कृत्वा दिनान्ते सततं शुभम् ।
वर्षायुतशतं पुण्ये सूर्यलोके महीयते ॥
दध्योदनमयं व्योम गैरिकं पात्रमाश्रितम् ।
पुष्पधूपार्चितं देवौ वितानोपरिशोभितम् ॥
शिरसा धारयेत्पात्रीं शनैर्गच्छेत् प्रदक्षिणम् ।
सूर्यायतनपर्यन्तं शङ्खभेर्यादिनिस्वनैः ॥
दर्पणध्वजमालाभिर्गेयनृत्योपशोभितम् ।
छत्रचामरधूपाद्यैर्यष्टिधूपादिभिस्तथा ॥
यच्छेषं दधिभक्तस्य भोजकः पुरतः स्थितम् ।
पुष्पाक्षतविमिश्रं तत्सर्वं दिक्षु बलिं हरेत् ॥
भोजको बलिं हरेदित्यन्वयः ।

मन्त्रस्तु,

महाश्वेता मातरश्च सृष्टिर्देवो भवस्तथा ।
अनन्तश्च विरूपाक्षो वरुणो धनदस्तथा ॥
रेवन्तो गरुडश्चैव सर्वदेवगणास्तथा ।
शान्तिं यच्छन्तु सुप्रीताः सौरेण बलिनाऽमुना ॥

प्रयच्छन्तु सदा लोके सौख्यं शुभमनुत्तमम् ।

## अथ सौरस्नानम् ।

भविष्यपुराणे,

भीष्म उवाच ।

सौरस्नानविधिं ब्रूहि ममाहृत्य महामुने ।
येन स्नातोऽर्हतां याति नरः पूजयितुं रविम् ॥

व्यास उवाच ।

शुभे मनोहरे स्थाने संगृह्यास्त्रेण मृत्तिकाम् ।
सविसर्गो विकारस्तु हरेफास्त्रसमन्वितः ॥
अनेनास्त्रेण सम्पूज्य ततः स्नानं समाचरेत् ।
मलस्नानं तदर्द्धेन कृत्वा चास्त्रेण मन्त्रवित् ॥
विधिस्नानं ततः पश्चात् शेषार्द्धेन तु कारयेत् ।
भागत्रयं सुशुद्धं तु तृणपाषाणवर्जितम् ॥

भागत्रयं शेषमृत्तिकार्द्धस्य । सुशुद्धं केशादिरहितम् ।

एकमस्त्रेण चालभ्य तथाऽन्यं भास्करेण तु ।
अङ्गैश्चैव तृतीयं तु अभिमन्त्र्य सकृत् सकृत् ॥

एकं भागम् । अस्त्रेण अस्त्रमन्त्रेण । अन्यं द्वितीयभागम् । भास्करेण सौरमन्त्रेण । तृतीयम् अङ्गमन्त्रैः । आलभ्य स्पृष्ट्वेत्यर्थः ।

जप्त्वाऽस्त्रेण क्षिपेद्दिक्षु निर्विघ्नं तु जले भवेत् ।
सूर्यतीर्थं द्वितीयेन तृतीयेन सकृत् सकृत् ॥
शोधयित्वा ततः स्नात्वा रवितीर्थेन मानवः ।
तूर्यशङ्खनिनादेन ध्यात्वा देवं दिवाकरम् ॥
स्नात्वा राजोपचारेण पुनराचम्य यत्नतः ।
स्नानं कृत्वा ततो भीष्ममन्त्रराजेन सुव्रतः ॥
हरेफो बिन्दुकर्णश्च तथाऽन्यो दीर्घया सह ।

मात्रया रेफसंयुक्तो हकारो बिन्दुना सह ॥
सकारः सविसर्गश्च मन्त्रराजोऽयमुच्यते ।
अत्रोद्धारः । हुं ह्रीं सः ।
ततस्तु तर्पयेन्मन्त्रान् सर्वांस्तांश्च कराग्रजैः ।
कराग्रजैः कराङ्गुल्यग्रपर्वभिः ।
तुलनादूर्ध्वतो देवान् सव्येन मुनयस्तथा ॥
पितरश्चापसव्येन हृद्बीजेन तु तर्पयेत् ।

तुलनादूर्ध्वत इति ऊर्ध्वं क्षिप्त्वेत्यर्थः । मुनयः पितरश्चेति द्वितीयार्थे प्रथमा । हृद्बीजेन ह्रीमित्यनेन । बीजलक्षणमप्याह,

यद् ह्रीति प्रवरं लोके अक्षराणां मनीषिभिः ।
तद्बिन्दुसहितं प्रोक्तं हृद्बीजं नात्र संशयः ॥
कृत्वैवापो वामकरे हस्तमात्रेण मार्जनम् ।
व्यापिनीं तु परां ज्योत्स्नां ध्यात्वा प्राज्ञो विधानवित् ॥
एवं ध्यात्वा विधानेन संध्यां वन्देद्विधानतः ।
ततो विद्वान् क्षिपेत्पश्चात् भास्करायोदकाञ्जलिम् ॥
जपेच्च त्र्यक्षरं मन्त्रं षण्मुखं वा यदृच्छया ।
मन्त्रराजेति यः पूर्वं तवाख्यातो मया नृप ॥
षण्मुखं खखोल्कम् ।
पश्चात्तीर्थेषु मन्त्रांस्तु संहृत्य हृदये न्यसेत् ।
मन्त्रैरात्मसहैकत्वं कृत्वा चार्घं प्रकल्पयेत् ॥

आत्मना सह देवताया ऐक्यं कृत्वा मन्त्रैरर्घं प्रकल्पयेदित्यन्वयः ।

रक्तचन्दनगन्धैस्तु शुचिः स्नातो महीतले ।
कृत्वा मण्डलकं वृत्तमेकचित्तो व्यवस्थितः ॥
गृहीत्वा करवीराणि स्थापयेत्ताम्रभाजने ।

तिलतण्डुलसंयुक्तं कुशगन्धोदकेन च ॥
रक्तचन्दनधूपेन युक्तमर्घोदशोभितम्।
कृत्वा शिरसि तत्पात्रं जानुभ्यां धरणीं गतः ॥
अर्घोदशोभितम् अर्घजलसहितम्।
मूलमन्त्रेण संयुक्तमर्घं दद्यात् तु भानवे।
मुच्यते सर्वपापैस्तु यो ह्येवं विनिवेदयेत् ॥
गवां शतसहस्रेण यत्फलं ज्येष्ठपुष्करे।
दत्ते कुरुकुलश्रेष्ठ तदर्घे तु फलं लभेत् ॥
नासौ सम्भवते भूमौ स लयं याति भास्करे।
एष स्नानविधिः प्रोक्तः सौरः सङ्क्षेपतस्तव ॥ इति।
व्यास उवाच।
हन्त तेऽहं प्रवक्ष्यामि विधिना नित्यपूजनम्।
विविक्तो विजने स्थाने सुप्रसन्ने सुशोभने ॥
पूजयेद्भास्करं मन्त्रैः सरलीकृतविग्रहः।
भद्रासनसमारूढः प्राङ्मुखः साधयेत्करौ ॥
अस्त्रबीजेन मन्त्रज्ञः पश्चादङ्गानि विन्यसेत्।
अङ्गुष्ठमादितः कृत्वा कनीयस्यौ च पश्चिमे ॥
हृदयादि तथाऽस्त्रान्तं विन्यसेत् क्रमशस्तथा।
नेत्रं पाणितले न्यस्य वीर सव्यादिमन्त्रवित् ॥
नेत्रं नेत्रबीजं बुं इति।
पवर्गादिचतुर्थं तु कर्णबिन्दुसमन्वितम्।
नेत्रबीजमिति प्रोक्तं ज्योतीरूपं न संशयः ॥
पश्चात्तु त्र्यक्षरं सूर्यं करयोर्विन्यसेत् बुधः।
कथितं तन्मया वीर मन्त्रराजेति पृष्ठतः ॥
प्राणायामं ततः कुर्यात् प्रथमम्बीजमुच्चरन्।

शेषं क्रमेण तूच्चार्य द्वे बीजे भीष्मशक्तितः ॥
त्रिभिरेव तथोच्चारैरात्मशुद्धिः कृता भवेत् ।
इति संशोध्य चात्मानं सूर्यं साङ्गं करे न्यसेत् ॥
कं समारभ्य मेधावी ततो ह्यङ्गानि विन्यसेत् ।
कं शिरः ।
हृदयं हृदये न्यस्य शिरः शिरसि विन्यसेत् ॥
एकोनविंशमात्राया अक्षरं यत् प्रकीर्त्तितम् ।
हृद्बीजमिति विख्यातं ब्रह्मस्थानमनौपमम् ॥
शिखायां तु शिखां न्यस्य शरीरे कवचं न्यसेत् ।
विन्यसेन्नेत्रयोर्नेत्रं करयोरस्त्रमेव च ॥
महाव्याहृतयो राजन् तथोर्ध्वा ध्वजिनी शिखा ।
हकारश्च वकारश्च जकारो बिन्दुना सह ॥
एतेषां समवायेन कवचं परिकथ्यते ।
एवमेतानि विन्यस्य न स शोकेन बाध्यते ॥
आत्मानं भास्करं ध्यात्वा यथोक्तं तत्त्वदर्शनात् ।
ततस्तु पूजयेद्भानुं स्थण्डिले विधिवत् पुनः ॥
कृत्वा तु दक्षिणे पार्श्वे दिव्यं पुष्पकरण्डकम् ।
कृत्वा वर्धनिकां वामे तां श्रीपूर्णां तु वारिणा ॥
अस्त्रेण क्षालितां पूर्णां शेषमन्त्रैर्जलं तथा ।
अभिमन्त्र्याथ संस्थाप्य कवचेनावगुण्ठयेत् ॥
स्थण्डिले चैव द्रव्याणि पूजार्थं कथितानि तु ।
सर्वाणि प्रोक्षयेद्विद्वान् अर्घपात्रजलेन तु ॥
तथाऽऽदित्यं यजेत्पश्चादेकचित्तस्तु मन्त्रवित्

इति सौरस्नानम् ।

अथ रथयात्रा ।

भविष्यपुराणे,

ब्रह्मोवाच।

देवस्य रथयात्रैषा भास्करस्य महात्मनः।
इन्द्रोत्सवस्तथा रुद्रमहो ह्येतौ समाहितौ॥
मर्त्त्यलोके शान्तिहेतू लोकानां लोकपूजितौ।
प्रवर्त्तेते इमौ ह्यस्मिन् लोके देवमहोत्सवौ॥
न तत्रोपद्रवाः सन्ति राजतस्करसम्भवाः।
तस्मात्कार्याविमौ भक्त्या दुर्भिक्षस्य च शान्तये॥
शुक्लपक्षे तु सप्तम्यां मासि मार्गे महेश्वर।
घृतेनाभ्यञ्जयेद्देवं पञ्चभूताङ्गजेन वै॥

पञ्च भूतानि जातानि गोमूत्रादीनि यस्याः सा पञ्चभूता गौः तदङ्गजेन तत्सम्भवेन घृतेनेत्यर्थः।

अभ्यञ्जयेद्ग्रहेशं यः सर्पिषा श्रद्धयान्वितः।
दिने दिने जगन्नाथं प्रविष्टं वर्णके रविम्॥
स गच्छेद्यानमारूढो गैरिकं किङ्किणीवृतम्।
वैश्वानरपुरं दिव्यं गन्धर्वाप्सरसान्वितम्॥

वर्णके नानावर्णचित्रितगृहे। दिने दिने इति मार्गशीर्षसप्तमीमारभ्य पौषशुक्लसप्तमीपर्यन्तम्।

शाल्योदनं खण्डमिश्रं बहुवर्णसमन्वितम्।
वर्णभक्तं प्रयच्छेद्यो भास्कराय दिनेदिने॥
आरूढः स विमानं तु ध्वजमालाकुलं शुभम्।
स गच्छेन्मत्पुरं देव स्तूयमानो महर्षिभिः॥
घृतपूर्णाः खण्डवेष्टयाः कासारान्मोदकांस्तथा।
दध्योदनं पायसं च संयावगुडपूपकान्॥
ये प्रयच्छन्ति देवस्य भास्करस्येह वर्णके।

ते गच्छन्ति न सन्देहो नरा वै मम मन्दिरम् ॥
अहन्यहनि यो भक्त्या भास्कराय प्रयच्छति ।
अभ्यङ्गाय घृतं देव स याति परमां गतिम् ॥
चूर्णमुद्वर्त्तनायैव यः प्रयच्छेच्छुभं रवेः ।
स याति परमं स्थानं यत्र देवो दिवाकरः ॥
ततस्तं स्नापयेद्देवं पौषे मासि विधानतः ।
सप्तम्यां शुक्लपक्षस्य शृणुष्वैकमना यथा ॥
तीर्थोदकमुपानीय अन्यद्वाऽथ शुभं जलम् ।
वेदोक्तेन विधानेन प्रतिमां स्थापयेद्बुधः ॥
जपेद्धि तीर्थनामानि मनसा संस्मरन् बुधः ।
प्रयागं पुष्करं चैव कुरुक्षेत्रं सनैमिषम् ॥
पृथूदकं भद्रवटीशानगोकर्णमेव च ।
ब्रह्मावर्त्तं कुशावर्त्तं बिल्वकं नीलपर्वतम् ॥
गङ्गाद्वारं तथा पुण्यं गङ्गासागरमेव च ।
कालप्रियं मित्रपदं शुण्डीरं स्वामिनं तथा ॥
चक्रतीर्थं महापुण्यं रामतीर्थं महाशिवम् ।
गङ्गा सरस्वती सिन्धुश्चन्द्रभागा च नर्मदा ॥
विपाशा यमुना तापी शिवा वेत्रवती तथा ।
गोदावरी पयोष्णी च कृष्णा वेणा तथा नदी ॥
शतद्रूः पुष्करिणी च कौशिकी सरयूस्तथा ।
तथाऽन्ये सागराश्चैव सान्निध्यं कल्पयन्त्विह ॥
तथाऽऽश्रमाः पुण्यतमा दिव्यान्यायतनानिच ।
एवं स्नानविधिं कृत्वा अर्चयित्वा प्रणम्य च ॥
धूपमर्घं च दत्त्वाऽथ प्रतिमामधिवासयेत् ।
त्रिरात्रं सप्तरात्रं वा मासार्द्धं मासमेव च ॥

स्थितं स्नानगृहे देवं पूजयेद्भक्तिमान्नरः ।
ततस्त्वारोपयेद्वेदिं चतुरस्रां सुवेष्टिताम् ॥
चतुर्दिशं श्वेतकुम्भैर्विमानवरशोभिताम् ।
कृष्णपक्षे तु माघस्य सप्तम्यां त्रिपुरान्तक ॥
कृत्वाऽग्निकार्यं विधिवत् कृत्वा ब्राह्मणभोजनम् ।
शङ्खभेरीनिनादैस्तु ब्रह्मघोषैस्तु पुष्कलैः ॥
ततोऽस्य कारयेद्यात्रां शान्तिहेतोर्जनस्य च ।
रथेन दर्शनीयेन किङ्किणीजालमालिना ॥
शुक्लपक्षे तु माघस्य रथमारोपयेद्रविम् ।
कृत्वाऽग्निकार्यं विधिवत् तथा ब्राह्मणभोजनम् ॥
अयाचितं च पञ्चम्यां नक्तं षष्ठ्यां प्रकीर्त्तितम् ।
सप्तम्यामुपवासं तु अष्टम्यां रोपयेद्रविम् ॥
अग्निकार्यं च वै कृत्वा रथस्य पुरतः स्थितः ।
षष्ठ्यां तु रात्रौ भूतेश रथस्येहाधिवासनम् ॥
ब्राह्मणान् भोजयित्वेह दिव्यान् भौमान् सवाचकान् ।
रथमारोपयेदेवं सप्तम्यां भूतभावनम् ॥
सितायां माघमासस्य देव देवालयाग्रतः ।
ततस्तस्यैव देवस्य कुर्याद्रात्रौ प्रजागरम् ॥
अत्र सप्तम्यष्टम्योरारोपणे विकल्पः ।
नानाविधैः प्रेक्षणकैर्दीपवृक्षोपशोभितैः ।
शङ्खतूर्यनिनादैश्च ब्रह्मघोषैश्च पुष्कलैः ॥
कुर्यात्प्रजागरं भक्त्या देवस्य पुरतो निशि ।
ततोऽष्टम्यामायतनादेवं रथगतं नयेत् ॥
नगरस्योत्तरं द्वारं शङ्खभेरीनिनादितम् ।
ततः पूर्वं दक्षिणं च द्वारं चापि ततः परम् ॥

एवं हि क्रियमाणायां यात्रायां वत्सरावधौ ।
मानवाः सुखमेधन्ते राजा जयति चाहितान् ॥
नीरुजश्च जनाः सर्वे गवां शान्तिर्भवेत्ततः ।
कर्त्तारश्चापि यात्रायाः स्वर्गभाजो भवन्ति हि ॥
वोढारश्च तथा रुद्र स्वर्गलोकं व्रजन्ति ते ।
पूर्वमेव सहस्रांशोर्यानार्थं च महात्मनः ॥
संवत्सरस्यावयवैः कल्पितोऽस्य रथो मया ।
अतश्च रथयानेन चलनं विहितं रवेः ॥
तस्मान्न चालने दोषः सवितुश्चल एव सः ।
अन्येषां चालनं नष्टं देवानां पार्वतीप्रिय ॥
ब्रह्मविष्णुशिवादीनां स्थापितानां विधानतः ।

प्रयोगान्तरमाह ।

काञ्चनोवाऽथ रौप्यो वा बृहद्दारुमयोऽपि वा ।
दृढाक्ष एकचक्रश्च रथः कार्यः सुयन्त्रितः ॥
अस्मिन् रथवरे रम्ये कल्पिते सुमनोहरे ।
आरोप्य प्रतिमां यन्ता योजयेद्वाजिनः शुभान् ॥
हरीन् लक्षणसंयुक्तान् सुमुखान् वशवर्त्तिनः ।
कुङ्कुमेन समालब्धान् चामरस्रग्विभूषितान् ॥

हरीन् हरितवर्णान् वाजिनः । लक्षणसंयुक्तान् शालिहोत्रोक्तावर्त्तादिसम्पन्नान् । सुमुखान् ।

सदश्वान् योजयित्वाऽथ रथस्यार्घं प्रकल्पयेत् ।
विधिवत् पूजयित्वा तु गन्धमाल्यानुलेपनैः ॥
आहारैर्विविधैश्चापि भोजयित्वा द्विजोत्तमान् ।
दीनान्धकृपणांश्चैव सर्वान् सन्तर्प्य भक्तितः ॥
न कांश्चिद्विमुखान् कुर्यादुत्तमाधममध्यमान् ।

सूर्यक्रतौ तु वितते एवमाहुर्मनीषिणः ॥
यच्चिन्तयति भग्नाशः क्षुधाऽतीव प्रपीडितः ।
कर्त्तुर्मातृपितॄंश्चैव स्वर्गस्थानपि पातयेत् ॥
यज्ञश्च दक्षिणाहीनः सवितुर्न प्रशस्यते ।
तस्मान्नानाविधैर्भक्त्या लेह्यपेयसमन्वितैः ॥
प्रीणयित्वा जनं सर्वमिममुच्चारयेद्विधिम् ।
बलिं गृह्णन्तु ये देवा आदित्या वसवस्तथा ॥
मरुतोऽश्विनौ च रुद्राश्च सुपर्णाः पन्नगा ग्रहाः ।
असुरा यातुधानाश्च रथस्था याश्च देवताः ॥
दिक्पाला लोकपालाश्च ये च विघ्नविनायकाः ।
जगतः स्वस्ति कुर्वन्तु ये च वेद्या महर्षयः ॥
मा विघ्नो मा च मे पापं मा च मे परिपन्थिनः ।
सौम्या भवन्तु तृप्ताश्च देवतानां गणास्तथा ॥
वामदेव्यैः पवित्रैश्च मानस्तोकै रथन्तरैः ।
आकृष्णेन रजसा ऋचमेतामुदीरयेत् ॥
साहित्ये तृतीया ।
ततः पुण्याहशब्देन कृतवादित्रनिःस्वनैः ।
रथस्य क्रमणं कृत्वा धर्मेणानुगमेन तु ॥
पुरुषैश्चापि वोढव्यः सूर्यभक्तिसमन्वितैः ।
सुकृतैः स्वगृहैर्दीर्घैर्बलीवर्दैरथापि वा ॥
अत्र वाजिवृषभपुरुषाणां विकल्पः ।
यथा पर्यसनं न स्यात् विषमे पथि गच्छतः ।
पर्यसनं रथाङ्गभङ्गाद्रथिविपर्यसनम् ।
उपवासस्थितैर्विप्रैर्दिव्यैर्भौमैश्च सुव्रतैः ॥
वितस्त्या षोडशभिर्वापि प्रतिमां भास्करस्य तु ।

स्थानात् प्रचाल्य तां रुद्र रथमारोपयेच्छनैः ॥

वितस्तिमितां षोडशाङ्गुलपरिमितां वा सूर्यस्य प्रतिमां स्वस्थानतः चालयित्वा तां प्रतिमां रथमारोपयेत् । रुद्रेति सम्बोधनम् ।

राज्ञी च निक्षुभा चैव भार्ये तस्य महात्मनः ।
शनैरारोपयेत्तत्र उभयोः पार्श्वयो रवेः ॥
निक्षुभां दक्षिणे चैव राज्ञीं चाप्युत्तरे तथा ।
द्वावेव ब्राह्मणौ तस्मिन् दिव्यौ भौमौ च पार्श्वयोः ॥
ब्रह्मकल्पस्तथा भौमः कूवरस्योत्तरो रवेः ।

कूबरो युगन्धरः ।

अग्रतः पृष्ठतश्चास्य बहुमानं प्रकल्पयेत् ।
आतपत्रं तथा श्वेतं स्वर्णदण्डं मनोहरम् ॥
सुवर्णबिन्दुभिश्चित्रं मणिमुक्ताफलोज्ज्वलम् ।
ततस्त्विन्द्रधनुः प्रख्यं स्वर्णदण्डं तथाऽपरम् ॥
ध्वजं प्रकल्पयेत्तस्य पताकाभिरलङ्कृतम् ।
नानाबिन्दुविचित्राभिः समाभिः कमलासनम् ॥
ध्वजोपरि वरं व्योम अरुणाधिष्ठितं भवेत् ।
रथतुण्डगतो विप्रो नयेद्रथवरं रवेः ॥
सारथ्यं रुद्र कार्यं वै श्रेयोऽर्थे आत्मनः सदा ।
न चारोहेद्रथं शूद्रो य इच्छेच्छ्रेय आत्मनः ॥
रथभारहृततस्तस्य क्षयं गच्छति सन्ततिः ।
स रथो देवदेवस्य वोढव्यो ब्राह्मणैः सदा ॥
क्षत्रियैश्चैव वैश्यैश्च न तु शूद्रैः कथञ्चन ।
ये त्वन्यदेवताभक्ता ये च मद्यप्रवर्त्तकाः ॥
न तैः शूद्रैश्च वोढव्य इतरैश्च सदोद्यतैः ।

इतरैश्चातुर्वर्ण्यतरैः ।
उपवासव्रतोपेतैर्वोढव्यः पार्वतीप्रियः ।
स्वस्थानाच्चलितो रुद्र पूर्वद्वारं व्रजेत्तु वै ॥
दिनमेकं वसेत्तत्र पूज्यमानो नृपेण तु ।
नानाविधैः प्रेक्षणकैः पुराणश्रवणेन तु ॥
नानाविधैर्भक्ष्यभोज्यैर्ब्राह्मणानां च तर्पणैः ।
स्थित्वा तु अष्टमीं तत्र नवम्यां चालयेत्पुन. ॥
व्रजेत्स दक्षिणद्वारं नगरस्य त्रिलोचन ।
तत्रापि दिनमेकं तु तिष्ठेतान्धकसूदन ॥
क्षत्रेतरैः पूज्यमानो यथा राजा तथैव ते ।
तस्मादपि चलेद्रुद्र द्वारं पश्चात् तथोत्तरम् ॥
तत्रापि पूज्यः शूद्रैस्तु विधिना प्रियदर्शन ।
तस्मादपि चलेद्रुद्र व्रजेन्मध्यं पुरस्य तु ॥
तत्र तं पूजयन्ति स्म ब्राह्मणाः श्रद्धयाऽन्विताः ।
शङ्खवादित्रनिर्घोषैस्तथा प्रेक्षणकैर्वरैः ॥
ब्रह्मघोषैश्च विविधैः समन्ताद्दीपवृक्षकैः ।
नानाविधैर्वित्तदानैर्ब्राह्मणानां च तर्पणैः ॥
दीनान्धकृपणानां च तर्पणैस्त्रिपुरान्तक ।
पुरमध्याद्वै चलितास्तिष्ठेत्प्राप्य स्वमन्दिरम् ॥
इत्थं प्रापय्य तं देवं पुरतो मन्दिरस्य तु ।
तत्र स्थितः पूजनीयो भवेत् पौरेण कृत्स्नशः ॥
पूज्यमानस्त्वहोरात्रं रथारूढस्तु तिष्ठति ।
परे दिने व्रजेत्स्थानं तच्चिरन्तनमादरात् ॥
त्रयोदश्यामतीतायां चतुर्दश्यां त्रिलोचन ।
सदैवं भ्रामयेद्देवं ग्रहेशं दुरितापहम् ॥

परिवारवृतं रुद्र सानुगं परमेश्वरम् ।
रुद्र उवाच ।
कथं प्रचालयेद् ब्रह्मन् रथस्थं तमनाशनम् ।
तमनाशनं तमोनाशनं सूर्यम् ।
अनुगाश्च कथं चास्य केच तेऽप्यनुगाः क्रमात् ॥
ब्रह्मोवाच ।
प्रतीहाररथं पूर्वं नयेन्मार्गविशुद्धये ।
तस्मादनन्तरं रुद्र दण्डनायकमादरात् ॥
पिङ्गलं च ततस्तस्य पृष्ठगं चादरान्नयेत् ।
रक्षकद्वारकौ तस्माद्रथारूढौ तु तिष्ठतः ॥
रथारूढस्तथा दण्डी देवस्य पुरतः स्थितः ।
तस्मादपि तथा रुद्र लेखको भास्करप्रियः ॥
शनैः शनैर्नयेद्रुद्र रथं देवस्य यत्नतः ।
युगाक्षरथभङ्गो वा यथा न स्यात्त्रिलोचन ॥
ईशाभङ्गे द्विजभयं भग्नेऽक्षे क्षत्रियक्षयः ।
तुलाभङ्गे तु वैश्यानां शय्या शूद्रभयं भवेत् ॥
शय्या शय्याभङ्गे ।
ध्वजभङ्गे त्वनावृष्टिः पीठभङ्गे प्रजाक्षयः ।
परचक्रागमं विद्याच्चक्रभङ्गे रथस्य तु ॥
ध्वजस्य पतने रुद्र नृपभीतिं विनिर्दिशेत् ।
प्रतिमायां व्यङ्गितायां राज्ञो मरणमादिशेत् ॥
छत्रभङ्गाद्भयं रुद्र युवराजस्य निर्दिशेत् ।
उत्पन्नेष्वेवमाद्येषु उत्पातेष्वशुभेषु च ॥
बलिकर्म पुनः कुर्याच्छान्तिं होमं तथैव च ।
ब्राह्मणान वरयेद्रुद्र दद्याद्दानानि चैव हि ॥

पूर्वोत्तरे च दिग्भागे रथस्याग्निं प्रकल्पयेत् ।
समिद्भिः सुघृताक्ताभिर्होमयेज्जातवेदसम् ॥
स्वाहाकारं वदेत्सम्यक् देवताभ्य अनुक्रमात् ।
ग्रहेभ्यश्च प्रजाभ्यश्च नामान्युद्दिश्य होमयेत् ॥
प्रथमं चाग्नये स्वाहा स्वाहा सोमाय चैव हि ।
स्यात्प्रजापतये चैव दद्यादाहुतयः क्रमात् ॥
स्वस्त्यस्त्विह द्विजातिभ्यः स्वस्ति राज्ञे तथैव च ।
गोभ्यः स्वस्ति प्रजाभ्यश्च जगतः शान्तिरस्तु वै ॥
शन्नोऽस्तु द्विपदे नित्यं शान्तिरस्तु चतुष्पदे ।
शं प्रजाभ्यस्तथैवास्तु शं सदात्मनि चास्तु वै ॥
भूः शान्तिरस्तु देवेश भुवः शान्तिस्तथाऽस्तु वै ।
स्वश्चैवास्तु तथा शान्तिः सर्वत्रास्तु तथा रवे ॥
त्वं देव जगतः स्रष्टा गोप्ता चान्तस्त्वमेव हि ।
प्रजापालग्रहेशानां शान्तिं कुरु दिवस्पते ॥
इदमन्यत् प्रवक्ष्यामि शान्तेः परमकारणम् ।
यात्रा कारणभूतस्य पुरुषस्य स्वजन्मनः ॥
दुष्टान् ग्रहान् परिज्ञाय ग्रहशान्तिं समाचरेत् ।
यथा पूज्या ग्रहाः सर्वे उत्पातेषु त्रिलोचन ॥
रथदेवास्तथा पूज्या ये देवा रथमाश्रिताः ।
क्षीरं यवागूं संयावं परमान्नं महेश्वर ॥
फलानि कार्त्तिकेयस्य दद्याद् भूतेशतुष्टये ।
विवस्वते मधुर्मांसे तथा मद्यं च सुव्रत ॥
पुरुहूताय भक्ष्याणि सानुगाय निवेदयेत् ।
हविष्यमग्नये दद्याद्यवान्नं विष्णवे सदा ॥
राक्षसेभ्यः समैरेयं दद्यान्मांसौदनं हर ।

मैरेयं मद्यम् ।
संस्कृतं पिशितान्नं तु रेवन्ताय निवेदयेत् ।
तिलान्नं पितृराजाय दद्यात्त्रिपुरसूदन ॥
अश्विभ्यां च तथाऽपूपान् वसुभ्यो मांसमोदनम् ।
पितृभ्यः पायसं दद्यात् घृताक्तं मधुना सह ॥
कात्यायन्यै यवागूं च श्रिये दद्यात् तथा दधि ।
सरस्वत्यै त्रिमधुरं वरुणाय रसौदनम् ॥
रसौदनम् इक्षुरसौदनम् ।
षाडवान्नं धनपतौ तव मित्रे त्रिलोचन ।
तव मित्रे इति धनपतिविशेषणम् । धनपतिः कुबेरः ।
सस्नेहेन तु तक्रेण मरुद्भ्यस्तर्पणं स्मृतम् ।
माषान् भक्तासवापूपान् मातृभ्यो विनिवेदयेत् ॥
उल्लोपिकाश्च भूतेभ्यो जलं सूर्यायवै हर ।
दद्याद्गणपतौ दिव्यान् मोदकांस्त्रिपुरान्तक ॥
शष्कुली नैर्ऋतेन्द्राय देया स्याद्गणनायक ।
सर्वभक्ष्याणि विश्वेभ्यो दातव्यानि समन्ततः ॥
क्षीरौदनमृषिभ्यश्च क्षीरं नागेभ्य एव च ।
सूर्यरथाय च बालिं दद्याद्वै सार्वभौतिकम् ॥
तत्तन्मांसं च ससुरं तद्वाहेभ्यश्च शङ्कर ।
पूष्णे सर्जरसं दद्यात्तथा रुद्र तिलानपि ॥
स्वाहासुताय लाजाश्च दातव्यास्त्रिपुरान्तक ।
भास्कराय सदा दद्यात्तथा रुद्र तिलौदनम् ॥
वृक्षराजं सुरेन्द्राय हविष्यं पावकाय च ।
चाक्रिणे सप्तधान्यं च गरुडे मत्स्यजूषणम् ॥
जूषणं पाकोत्तरास्थितजलम् ।

यक्षेभ्यो विविधान् गन्धान् निर्यासं रेतसोभुजे ।
वैकङ्कत्यः स्रजो रुद्र यमाय परिकीर्त्तिताः ॥
देयः स्यात्कार्णिकावर्ण अश्विभ्यां वृषभध्वज ।
श्रिये पद्मानि देयानि चण्डिकायै तु चन्दनम् ॥
नवनीतं सरस्वत्यै विनतायै तथाऽऽमिषम् ।
पुष्पाण्यप्सरसे रुद्र मालतीसम्भवानि च ॥
वरुणायाग्र्यमण्डं तु फलमूलं च निर्ऋतेः ।
बिम्बं दद्यात् कुबेराय कपित्थं मरुतां तथा ॥
गन्धर्वेभ्यः सारसन्धिं प्रदद्यात् त्रिपुरान्तक ।
वसुभ्यश्चापि कर्पूरमगुरुं च गणाधिपे ॥
पितृभ्यः पिण्डमूलानि भूतेभ्यश्च बिभीतकम् ।
गोभ्यो दद्याद्यवान्नं वै मातृभ्यश्चाक्षतान् हर ॥
गुग्गुलं विघ्नपतये विश्वेभ्यो देयमोदनम् ।
ऋषिभ्यो ब्रह्मवृक्षं तु नागेभ्यो विषमुत्तमम् ॥
भास्करस्येह देयानि कन्दरूणि गणाधिप ।
मधु सर्पिस्तथाऽक्तानि गैरिकाणि त्रिलोचन ॥
न्यग्रोधं च तथा वायोर्भक्ष्यं रुद्र निवेदयेत् ।
सायं प्रातश्च मध्याह्ने सदैवोग्रमनोहर ॥
सर्वेषां शक्तितो भक्त्या दहेद् धूपं विचक्षणः ।
मन्त्रतो देवशार्दूल ये यस्येह प्रकीर्तिताः ॥
शान्त्यर्थं ब्राह्मणेभ्यस्तु तिलान् दद्यात् विचक्षणः ।
जुहुयाच्च यवान् वह्नौ घृतेन मतिमान्नरः ॥
इत्थं देवान् ग्रहांश्चैव पूजयित्वा प्रयत्नतः ।
अवतार्य रथाच्चैनं स्थापनं मण्डपे बुधः ॥
कृत्वा चारार्तिकं यत्नात् दीपतोयैस्तथाऽक्षतैः ।

कार्पासबीजलवणतुषैर्दुष्टप्रशान्तये ॥
वेदीमारोपयेत्पश्चात् पत्नीभ्यां सह सुव्रत ।
तत्रस्थं पूजयेद्देवं चतुर्थेऽह्नि कृतेन वै ॥
चतुर्थेऽहनि कर्त्तव्यं कृत्वा विश्रमणं रवेः ।
अभ्यङ्गभोजनाद्यैश्च पूजासंस्कारभोजनैः ॥
अनेन विधिना पूज्य दशाहानि दिवाकरम् ।
ततो नयेत्परं स्थानं यत्र पूज्यमनाचलम् ॥
ब्रह्मोवाच ।
अनेन विधिना यस्तु कुर्याद्वा कारयेत्तथा ।
यात्रां भगवतो भक्त्या भास्करस्यामितौजसः ॥
स परार्द्धं च वर्षाणां सूर्यलोके महीयते ।
कुले न जायते तस्य दरिद्रो व्याधितोऽथवा ॥
तीर्थोदकं च यो दद्याद्गङ्गायाश्च तथोदकम् ।
स्नानार्थमानयेद्यस्तु भास्करस्य त्रिलोचन ॥
सम्प्राप्येहाखिलान् कामान् प्राप्नुयाद्वरुणालयम् ।
भक्तं वर्षासु यो दद्याद्धविष्यान्नं गुडौदनम् ॥
स गच्छेत्प्रवरं रुद्र यत्र देवः प्रजापतिः ।
तर्पयेद्यस्तु वै भक्त्या भास्करं पूजयेत्तथा ॥
स गच्छेत्प्रीतिमान् रुद्र सूर्यलोकं न संशयः ।
रथमारोपयेद्यस्तु रथमार्गं प्रमार्जति ॥
प्रयाति वायुसालोक्यं वायुतुल्यपराक्रमः ।
रथस्यागच्छतो यस्तु मार्गे कुर्यात्तु मण्डपम् ॥
मल्लोकं प्राप्नुयात्सर्वं मारुतानां न संशयः ।
सूर्यस्यागच्छतो भक्त्या यः कुर्यान्मार्गमादरात् ॥
पुष्पप्रकरशोभाढ्यं शोभातोरणमण्डितम् ।

शङ्खतूर्यनिनादाढ्यं तथा प्रेक्षणकार्चितम् ॥
स याति परमं स्थानं यत्र देवो दिवाकरः ।
देवेन सहितो यस्तु नृत्यन् गायंस्तथाऽर्चयन् ॥
कुर्यान्महोत्सवं भक्त्या स याति परमं पदम् ॥
प्रजागरं तु यः कुर्याद्देवे रथगते रवौ ।
स सुखी पुत्रवान्नित्यं मोदते शाश्वतीः समाः ॥
भक्तं दशाहिकासंज्ञं यो ददाति रवेर्नरः ।
स प्राप्येहाखिलान् कामान् सूर्यलोकमवाप्नुयात् ॥
रथारूढस्य सूर्यस्य दर्शनं भ्रमतो हर ।
दुर्लभं देवशार्दूल विशेषादुत्तरां व्रजन् ॥
उत्तराभिमुखं यान्तं तथा वै दक्षिणामुखम् ।
धन्याः पश्यन्ति देवेशं भास्करं भक्तवत्सलम् ॥
अथ संवत्सरे प्राप्ते भानोर्यत्र दिने दिने ।
रथप्रक्रमणं तत्र न च किञ्चिद्भयं भवेत् ॥
ततस्तु द्वादशे वर्षे कर्त्तव्यं भूतिमिच्छता ।
इन्द्रध्वजस्य वाप्येवं यदि नोन्नमनं कृतम् ॥
ततो द्वादशके वर्षे कर्त्तव्यं नान्तरा पुनः ॥
यात्रायाश्चैव ये भङ्गं कुर्वन्ति वृषभध्वज ।
मन्देहा नाम ते ज्ञेया राक्षसा नात्र संशयः ॥
ये कुर्वन्ति तथा यात्रां नरा धर्मध्वजस्य च ।
इन्द्रादिदेवास्ते ज्ञेया गताश्च परमं पदम् ॥
पुनर्यात्राविधिं चेमं समासात्कथयामि ते ।
यं श्रुत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः ॥
वर्त्तमाने चैत्ररथे देवदेवगणाश्रिते ।
स तस्मिन् देवमनसा स्थापनीयो रथोऽपरः ॥

सद्यौर्मही च मूर्त्तिस्थे यथा पूर्वं प्रतिष्ठिते ।
तथैव राज्ञी द्यौर्ज्ञेया निक्षुभा पृथिवी स्मृता ॥
एताभ्यामपि देवीभ्यां यथैव सवितुस्तथा ।
दिण्ड्यादिमङ्गलादीनां पृथक्कार्यो रथक्रमः ॥
मनसा चिन्तयेदन्या यथास्थानेषु देवताः ।
दिक्पालान् लोकपालांश्च कल्पयेन्मनसैव तु ॥
देवो देवमयश्चायं सर्वदेवमयस्तथा ।
मण्डले धारयेच्चैव छन्दांस्यश्वाः प्रकीर्तिताः ॥
गायत्री चैव त्रिष्टुप् च जगत्यनुष्टुभौ तथा ।
पंक्तिश्च बृहती चैव उष्णिगेव च सप्तमी ॥
ततो देवमयत्वाच्च तरणिर्लोकपूजितः ।
ततो धूपोपहारैश्च पूजयेत्प्रथमं रविम् ॥
दिग्देवानुचरांश्चैव पूजयेत्पूजितः श्रिया ।
अपूज्य प्रथमं सूर्यमपरान् यस्तु पूजयेत् ॥
न तद्भूतकृतं पापं सम्प्रतीच्छन्ति देवताः ।
यात्राकाले च सम्प्राप्ते सवितुर्दीक्षितां तनुम् ॥
ये द्रक्ष्यन्ति नरा भक्त्या ते भविष्यन्त्यकल्मषाः ।
पूर्णिमायाममावास्यां दर्शनं पुण्यदं स्मृतम् ॥
सप्तम्यां च तथा षष्ठ्यां दिवसेऽथ रवेस्तथा ।
आषाढी कार्त्तिकी माघी तिथयः पुण्यदाः स्मृताः ॥
महाभाग्यं महापुण्यं यथा शास्त्रेषु गीयते ।
कार्तिक्यां तु विशेषेण महाकीर्त्तिप्रदाः स्मृताः ॥
एवं कालसमायोगाद्यात्राकाले विशिष्यते ।
दर्शनात्सुमहत्पुण्यं सर्वपापहरं भवेत् ॥
उपवासपरो यस्तु तस्मिन् काले यतव्रतः ।

पूजयेत्तु रविं भक्त्या स गच्छेत्परमां गतिम् ॥
देवोऽयं यज्ञपुरुषो लोकानुग्रहकाङ्क्षया ।
प्रतिमासु स्थितो भूत्वा पूजां गृह्णात्यनुग्रहात् ॥
स्नानाद्दानाज्जपात् होमात् संयोगाच्चैव कर्मणः ।
कचानां वपनाच्चैव दीक्षितः पुरुषो भवेत् ॥
कचानां वपनं कार्य्यं सूर्य्यभक्तैः सदा नरैः ।
सूर्य्यक्रतौ ततस्त्वेवं दीक्षितः पुरुषो भवेत् ॥
चतुर्णामिह वर्णानां भक्त्या सूर्य्यस्य नित्यदा ।
एवं यत्नात् करिष्यन्ति ते नरा नित्यदीक्षिताः ॥
चीर्णव्रता महात्मानस्ते यान्ति परमां गतिम् ।

इति रथयात्रा समाप्ता ।

## अथ सौरधर्माः ।

तत्र भविष्यपुराणे, सुमन्तुरुवाच ।
सूर्य्यधर्मो बुधैः सेव्यः सर्व्वपापभयापहः ।
सर्व्वेषामेव वर्णानां सूर्य्यधर्मो विशिष्यते ॥
त्रिसन्ध्यमर्च्चयेद्भानुमग्निकार्य्यं स्वशक्तितः ।
कुर्य्याद्यागमहाहोमं सुखमावृत्य यत्नतः ॥
त्रिसन्ध्यमेककालं वा पूजयेच्छ्रद्धया रविम् ।
असम्पूज्य रविं मोहान्न भुञ्जीत कदाचन ॥
सूर्य्यार्च्चाग्निपरो नित्यं तद्भक्त्याऽतिथिपूजकः ।
पर्व्वमैथुनवर्ज्जी स्यात् श्रीमान् सूर्य्यगृहाश्रमी ॥
अह्नस्तृतीयभागे तु न कुर्य्यादर्च्चनं रवेः ।
धनार्जनं तदर्द्धेन यतोऽनित्यं हि जीवितम् ॥
तदर्द्धेन दिनार्द्धेन ।
ब्रह्मार्थे ब्रह्मचारी यः सूर्य्यपूजाग्नितत्परः ।

भवेज्जितेन्द्रियः शान्तो नैष्ठिको भौतिकोऽपि वा ॥

ब्रध्नार्थे सूर्यार्थे। नैष्ठिको यावज्जीवं ब्रह्मचर्यवान्। भौतिकः भूत्यै प्रजायै प्रवर्तते स भौतिकः सन्तानकामः।

सर्वबन्धविनिर्मुक्तः कन्दमूलफलाशनः।
सौरवैखानसो ज्ञेयः सूर्यपूजाग्नितत्परः ॥
निवृत्य सर्वसङ्गेभ्यः सूर्यध्यानरतः सदा।
ज्ञेयः सौरयतीन्द्रोऽयं पूजानिष्ठो जितेन्द्रियः ॥

कालिकापुराणे,

सूर्य उवाच।

मद्भक्तो न हि भुञ्जीत भाजने परिमण्डले।

परिगतं मण्डलं गोमयादिना कृतम्।

उष्णीषं वर्जयेच्छत्रं शाकं सौवर्चलं तथा।
रक्तमाल्यं न सेवेत तथा रक्तविलेपनम् ॥
गोमयं मूषकोत्कृष्टं तथा कृष्टाश्च मृत्तिकाः।

कृष्टाः फालकृष्टाः।

वर्जयेदनुलेपार्थं धूपो देयो न पाणिना ॥
प्रलिप्तं मण्डलं कृत्वा नमस्येन्न तु लङ्घयेत्।
अदृष्ट्वा मां न भुञ्जीत विण्मूत्रं नैव दर्शयेत् ॥
अहोरात्रोषितो भूत्वा सप्तम्यामर्चयेन्नरः।
केशांश्चावापयेद्भक्त्या रक्तं मुञ्चेन्न मेऽग्रतः ॥
मन्नाम्ना पर्यटन्तं च मद्भक्तं समुपस्थितम्।
मगं भोजकमन्यं वा सर्वं यत्नेन भोजयेत् ॥
मच्छास्त्रं लिखितं किञ्चित् भित्तौ रम्ये शिवस्थले।
सम्यग्ज्ञानोक्तमन्यद्वा न मार्जेत कदाचन ॥
मदर्चाधृतनिर्माल्यं शरीरे न तु धारयेत्।

दशनानां विशुद्ध्यर्थमर्ककाष्ठं न भक्षयेत् ॥
हिरण्यशुक्लकांस्यार्क्यदार्वश्वत्थार्कशिग्रुभिः ।
प्रतिग्रहं पादपीठं पादुके न तु धारयेत् ॥

हिरण्यं सुवर्णम् । शुक्लं रजतम् । आर्क्यं ताम्रम् । दारु देवदारु । शिग्रुः शोभाञ्जनः ।

उदयास्तमये चैव मद्बिम्बं प्रणमेत्सदा ।

बिम्बं मण्डलम् ।

ईदृग्विधानां भक्तानां तुष्याम्येव न संशयः ।

इति सूर्यपूजनं समाप्तम् ।

## अथ दुर्गापूजा ।

**तत्र भविष्यपुराणे,**

अग्निहोत्रादिकर्माणि वेदयज्ञाः सदक्षिणाः ।
चण्डिकार्चार्चनस्यैते लक्षांशेनापि नो समाः ॥
स दाता स मुनिर्यष्टा स तपस्वी स तीर्थगः ।
यः सदा पूजयेत् दुर्गां नानापुष्पोपलेपनैः ॥
यः सदा पूजयेद्देवीं प्रणमेद्वापि भक्तितः ।
स योगी सर्द्धिमांश्चैव तस्य मुक्तिः करे स्थिता ॥

### अथ गृहसंमार्जनादिफलानि ।

देव्या गृहं तु यः शक्र संमार्जयति नित्यशः ।
स भवेद्धनवान् सौख्यसर्वसम्पत्समन्वितः ॥
देव्या गृहं तु यः शक्र गोमयेनोपलेपयेत् ।
स्त्री पुमान् वा यथाशक्ति षण्मासांस्तु निरन्तरम् ॥
स लभेदीप्सितान कामान् देवीलोके महीयते ।

**भविष्यपुराणे,**

स्नानकाले महाराज नानावादित्रमङ्गलैः ।
जयशब्दैस्तु ये दुर्गां स्नाप्यमानां जलादिभिः ॥
पूजयन्ति सदा भक्त्या गन्धपुष्पादिभिस्तथा ।
क्रीडान्ति ते दिवं गत्वा गन्धर्वाप्सरसां गणैः ॥
वक्रैरासक्रशाखैश्च क्षीरवृक्षसमुद्भवैः ।
हेमजैश्चापि कलशैर्जलक्षीरघृतान्वितैः ॥
अनेकवस्त्रसंयुक्तैरक्षतैस्तिलतण्डुलैः ।
यः करोति नरो भक्त्या चन्द्राकारं तु मण्डलम् ॥
चण्डिकायाः पुरो राजन् चण्डिकायाश्च मन्दिरे ।
स दिव्यं यानमारूढो रमते वैष्णवे पुरे ॥
पद्माकृतिं तु यः कुर्यात् मण्डलं चण्डिकापुरे ।
स ब्रह्मणः पुरं गत्वा मोदते ब्रह्मणा सह ॥
शङ्खतूर्यं तु यः कुर्यान्मण्डलं विधिवन्नृपः ।
स दिव्यं यानमारूढो वाराहलोकमाप्नुयात् ॥
नानात्रिशूलसम्पूर्णं कृत्वा मण्डलमुत्तमम् ।
गच्छेन्माहेश्वरं लोकं मोदते शाश्वतीः समाः ॥
वज्राकृतिं वज्रपूर्णं यः कुर्यान्मण्डलं विभो ।
ऐरावतसमारूढ इन्द्राणीलोकमाप्नुयात् ॥
यः करोति नरो भक्त्या मण्डलं स्वस्तिकान्वितम् ।
स भवेतामरैः सार्द्धं यावदाभूतसंप्लवम् ॥
भक्त्या पिष्टप्रदीपाद्यैश्चूताश्वत्थादिपल्लवैः ।
ओषधीभिश्च मेध्याभिः सर्वबीजैर्यवादिभिः ॥
नवम्यां पर्वकाले तु यात्राकाले विशेषतः ।
यः कुर्याच्छ्रद्धया वीर देव्यै नीराजनं नरः ॥
शङ्खभेर्यादिनिर्घोषैर्जयशब्दैश्च पुष्कलैः ।

यावतो दिवसान् वीर देव्यै नीराजनं कृतम् ॥
तावद्वर्षसहस्राणि दुर्गालोके महीयते ।
यस्तु कुर्यात्प्रदीपेन सूर्यलोकं स गच्छति ॥
लवणेनाक्षतैः कृत्वा विष्णुलोके महीयते ।
नीराजनमिति शेषः ।
त्रिकालं यो नरः कुर्यात् दुर्गायाः पुरतो नृप ।
नृत्यं गीतं च वादित्रं तस्य पुण्यफलं शृणु ॥
यावन्त्यहानि कुरुते नृत्यं गीतं च वादितम् ।
तावद्वर्षसहस्राणि ब्रह्मलोके महीयते ॥

अथ स्नपनम् ।

पञ्चगव्येन यो दुर्गां तथा च कुशवारिणा ।
स्नापयेद्विधिवन्मन्त्रैर्ब्रह्मस्नानं हि तत्स्मृतम् ॥

तथाच कुशवारिणा, कुशवारियुक्तेन पञ्चगव्येन । मन्त्रैर्दुर्गाप्रकाशकैः ।

एकाहमपि यो भक्त्या पञ्चगव्येन चाण्डिकाम् ।
स्नापयेन्नृपशार्दूल गच्छेत्सारस्वतं पुरम् ॥
एतेन ब्रह्मस्नान एव फलकथनम् ।
कपिलापञ्चगव्येन दधिक्षीरयुतेन च ।
स्नानं शतगुणं प्रोक्तमितरेभ्यो नराधिप ॥
वर्षपञ्चसहस्रैस्तु यत्पापं समुपार्जितम् ।
तत्सर्वं विलयं याति तोयेन लवणं यथा ॥
घृताभ्यङ्गेन देव्यास्तु कृतेन विधिवन्नृप ।
नवम्यां शुक्लपक्षे तु विधिवच्चण्डिकां नृप ॥
घृतेन स्नापयेद्यस्तु तस्य पुण्यफलं शृणु ।
दश पूर्वान् दश परानात्मानं च विशेषतः ॥

भवार्णवात्समुद्धृत्य दुर्गालोके महीयते ।
स्नापयेद्विधिवद्वीर दध्ना दुर्गां महीपते ॥
राजतेन विमानेन शिवलोके महीयते ।
चण्डिकां स्नापयेद्यस्तु नरश्चेक्षुरसेन च ॥
गैरिकेण विमानेन विष्णुना सह मोदते ।
स्नापयित्वा नरो दुर्गां गन्धचन्दनवारिणा ॥
चन्द्रांशुनिर्मलः श्रीमांश्चन्द्रलोके महीयते ।
सुगन्धिपुष्पतोयेन स्नापयित्वा नरः शिवाम् ॥
नाकलोकं समासाद्य क्रीडते पन्नगैः सह ॥
स्नापयित्वा नरो दुर्गां श्रद्धया हेमवारिणा ॥
सौवर्णयानमारूढो वसुभिः सह मोदते ।
रत्नोदकेन विधिवत् स्नापयेद्यस्तु मानवः ॥
स दिव्यं यानमारूढो रमते हरिणा सह ।
द्रोणपुष्पं बिल्वपत्रं करवीरोत्पलानि च ॥
स्नानकाले प्रयोज्यानि देव्यै प्रीतिकराणि हि ।
एषामेकतमं स्नानं कृत्वा वै श्रद्धयान्वितः ॥
भगवत्यै नरो भक्त्या विष्णुलोके महीयते ।
स्नापयेद्यस्तु वै देवीं नरः कर्पूरवारिणा ॥
स गच्छति परं स्थानं यत्र सा चण्डिका स्थिता ।
चण्डिकां स्नापयित्वा तु श्रद्धयाऽगुरुवारिणा ॥
इन्द्रलोकं समासाद्य क्रीडते किन्नरैः सह ।
पितॄनुद्दिश्य यो दुर्गां मधुना पयसैव च ॥
स्नापयेद्विधिवद्भक्त्या तस्य पुण्यफलं शृणु ।
तृप्ता भवन्ति पितरस्तस्य वर्षशतद्वयम् ॥
एवं यः स्नापयेन्नित्यं स्नानद्रव्यैर्नराधिप ।

युगपद्विधिवद्वीर तस्य पुण्यफलं शृणु ॥
अश्वमेधसहस्रस्य वाजपेयशतस्य च ।
फलं प्राप्य महाबाहो विष्णुलोके महीयते ॥

युगपदिति अत्र पूर्वोक्तस्नपनद्रव्यैर्मिलितैः स्नपनम् । अन्ये तु युगपदेकस्मिन् दिने पृथगेव तत्तद्द्रव्यैः स्नपनमित्याहुः ।

पौर्णमास्यां नवम्यां वा अष्टम्यां वा नराधिप ।
स्नापयित्वा शुभां भद्रां वाजपेयफलं लभेत् ॥
मृत्पात्रैः स्नापयेद्यस्तु दुर्गां देवीं नराधिप ।
अग्निष्टोमस्य यागस्य स फलं विन्दते नरः ॥

पात्रपदं कलशपरम् । अग्रे कलशप्रदर्शनात् ।

स्नापयित्वा नरस्ताम्रैर्वाजपेयफलं लभेत् ।
स्नापयित्वा नरो रौप्यै राजसूयफलं लभेत् ॥
सौवर्णैः स्नापयित्वा तु चण्डिकां कलशैर्नृप ।
अश्वमेधफलं प्राप्य ब्रह्मलोके महीयते ॥
घृतस्नातां घृताभ्यक्तां दुर्गां यत्नात् विरूक्षयेत् ।
यवगोधूमजैश्चूर्णैर्घर्षयेद्वल्कलेन च ॥
घृतेन पयसा दध्ना स्नापयेच्चण्डिकां नृप ।
विल्वपत्रैश्च गन्धाढ्यैर्घर्षयेद्यत्नतस्ततः ॥
गोसहस्रशते दत्ते यत्फलं पुष्करे स्मृतम् ।
तत्फलं लभते वीर देव्या उद्वर्त्तने कृते ॥

उद्वर्त्तने फलसम्बन्धदर्शनात् उद्वर्त्तनमेव प्रधानं, स्नानमत्राङ्गम् । गन्धाढ्यैः सुरभिद्रव्ययुतैः ।

दत्त्वाऽर्घं विधिवद्भक्त्या दुर्गायै पुष्पवारिणा ।
संपूज्यमानो गन्धर्वै रमते दिवि देववत् ॥

दत्त्वा गन्धोदकेनेह गन्धर्वसदने वसेत् ।
पञ्चगव्येन दत्त्वा तु पञ्चचूडालयं व्रजेत् ॥

अर्घमित्यनुषज्यते । पञ्चचूडा अप्सरोविशेषः । पञ्चचूडः शिव इति रत्नाकरः ।

आपः क्षीरं कुशाग्राणि अक्षता दधितण्डुलाः ।
सहसिद्धार्थका दूर्वा कुङ्कुमं रोचना मधु ॥
अर्घोऽयं कुरुशार्दूल द्वादशाङ्ग उदाहृतः ।

अक्षता यवाः । सहः सहदेवौषधिः ।

द्वादशाङ्गेन योऽर्घेण चण्डिकां पूजयेन्नरः ।
दशपञ्चसहस्राणि वर्षाणां मोदते दिवि ॥
अनेन पूजयेद्यस्तु स याति परमं पदम् ।
दारवेणार्घपात्रेण दत्त्वाऽर्घं विधिवन्नृप ॥
देव्यै सदा महाराज अग्निष्टोमफलं लभेत् ।
ताम्रपात्रार्घदानेन पुण्डरीकफलं लभेत् ॥
पलाशपद्मपत्राभ्यां गोसहस्रफलं लभेत् ।
रौप्यपात्रेण दत्त्वा वै विष्णुयागफलं लभेत् ॥
दत्त्वा सौवर्णपात्रेण लभेद्बहुसुवर्णकम् ।

बहुसुवर्णको यज्ञविशेषः ।

एवमुक्तार्घदानेन बलिपूजादिभिः क्रमात् ।
पात्रान्तरविशेषेण फलं स्यादुत्तरोत्तरम् ॥

पात्रादिष्वर्घं दत्त्वेत्यनुयुज्यते ।

## अथ पञ्चोपचाराः ।

तत्र गन्धो भविष्यपुराणे,

चन्दनागरुकर्पूरैर्यस्तु दुर्गां प्रपूजयेत् ।
स स्वमेकशतं दिव्यं शक्रलोके महीयते ॥

स्वमेको वर्षम् । दिव्यं दैवम् ।

गन्धानुलेपनं कृत्वा ज्योतिष्टोमफलं लभेत् ।

कुङ्कुमेन विलिप्यार्या गोसहस्रफलं लभेत् ॥

चन्दनागुरुकर्पूरैः श्लक्ष्णपिष्टेन कुङ्कुमैः ।

दुर्गामालेप्य विधिवत्कल्पकोटिं वसेद्दिवि ॥

विलिप्तां पूजयेद्दुर्गां दिव्यपुष्पादिवासिताम् ।

तालवृन्तेन संवीज्य महासत्रफलं लभेत् ॥

अत्र विलेपनानन्तरं संबीजनम् ।

## अथ पुष्पाणि ।

देवीपुराणे, ब्रह्मोवाच ।

शृणु शक्र प्रवक्ष्यामि पुष्पाध्यायं समासतः ।

ऋतुकालोद्भवैः पुष्पैर्मल्लिकाजातिकुब्जकैः ॥

सितरक्तैस्तथा पद्मैर्नलपद्मैश्च पाण्डरैः ।

पाण्डरैः पद्मैः ।

किंशुकैश्च कुटारैश्च किङ्किरातैः सकुब्जकैः ॥

वकुलैश्चैव मन्दारैः कुन्दपुष्पैस्तिरीटकैः ।

किङ्किरातो बाणः । तिरीटको लोध्रः ।

करवीरार्कपुष्पैश्च शांशपैश्चापराजितैः ।

सितपीतैस्तथा रक्तैः कृष्णैश्चैव चतुर्विधैः ॥

अर्कपुष्पविधानं तु विहितालाभे द्रष्टव्यम् । देवीनामर्कमन्दाराविति निषेधात् । दुर्गातिरिक्तदेवीविषयो निषेध इत्यन्ये। अपराजितैरित्यस्य विशेषणं सितरक्तैरित्यादि ।

धत्तूरकातिरिक्तैश्च बन्धूकागस्तिसम्भवैः ।

मदनैः सिन्दुवारैश्च सुरभीभिर्बकैस्तथा ॥

लताभिर्ब्रह्मवृक्षस्य दूर्वाङ्कुरैः सकोमलैः ।

मञ्जरीभिः कुशानां च बिल्वपत्रैः सुशोभनैः ॥
सुरभी शल्लकी।लताभिर्माधवीप्रभृतिभिः।ब्रह्मवृक्षः पलाशः।
उक्तानुक्तैस्तथा सर्वैर्जलजैः स्थलसम्भवैः ।
पत्रैः पुष्पैर्यथालाभं सर्वोपाधिसमन्वितैः ॥
धान्यानां सर्वपत्रैश्च पुष्पैश्चैव प्रपूजयेत् ।
शुभं वाप्यशुभं वापि फलं पुष्पं निवेदयेत् ॥
भक्त्या निवेदयेत्सर्वं नाशुभं किञ्चिदाप्नुयात् ।
धान्यानां सर्वपत्रैस्सर्वधान्यपत्रैः, पुष्पैर्वा धान्यानामेव ।
तथा,
पुष्पैररण्यसम्भूतैः पत्रैर्वा गिरिसम्भवैः ।
अपर्युषितनिश्छिद्रैः प्रोक्षितैर्जन्तुवर्जितैः ॥
अपर्युषितं न रात्र्यन्तरितम् ।
आत्मारामोद्भवैर्वापि पुष्पैः सम्पूजयेच्छिवाम् ।
पुष्पजातिविशेषेण भवेत् पुण्यं विशेषतः ॥
तपःशीलगुणोपेते पात्रे वेदस्य पारगे ।
दश दत्त्वा सुवर्णानि यत् फलं कुसुमेषु तत् ॥
मातॄणां च सकृद्दत्त्वा लभेत नृपसत्तम ।
तस्मात्पुष्पाणि वक्ष्यामि पत्राणि सुरभीणि च ॥
केतकी चातिमुक्तं च बन्धूकं बकुलान्यपि ।
कर्णिकारः कदम्बश्च सिन्दुवारः समृद्धये ॥
पुन्नागश्चम्पकश्चैव यूथिका बकमल्लिकाः ।
तगरार्जुनमल्ली च बृहती शतपत्रिका ॥
सुरसा बर्वरी भद्रा सुरभी कणमल्लिका ।
कदम्बैरर्चयेद्रात्रौ मल्लिका उभयोः शुभा ॥
दिवा शेषाणि पुष्पाणि यथालाभेन पूजयेत् ॥

उभयोः रात्रौ दिवा च ।

केशकीटापविद्धानि शीर्णपर्युषितानि च ।

स्वयम्पतितपुष्पाणि त्यजेदुपहतानि च ॥

शीर्णं म्लानम् ।

मुकुलैर्नार्चयेद्देवीमपक्कं न निवेदयेत् ।

फलं क्कथितविद्धं च कालापक्कमपि त्यजेत् ॥

मुकुलः कलिका । क्वथितं स्विन्नम् । कालापक्कमसमयपक्कम् ।

भविष्यपुराणे,

अग्निहोत्रपरे विप्रे वेदवेदाङ्गपारगे ।

सुवर्णानां सुवर्णस्य शते दत्ते तु यत्फलम् ॥

तत्फलं लभते राजन् पूजयित्वा तु चण्डिकाम् ।

सुवर्णानां तोलकानाम् । सुवर्णस्य हिरण्यस्य ।

मालया बिल्वपत्राणां नवम्यां गुग्गुलेन च ।

मालाद्वयेन सम्पूज्य दुर्गां देवीं नराधिप ॥

बिल्ववृक्षस्य पत्राणां राजसूयफलं लभेत् ।

गुग्गुलसहितबिल्वपत्रमालया पूजयित्वेत्यन्वयः । गुग्गुलुरत्र धूपार्थ इति केचित् । मालाद्वयेन बिल्ववृक्षस्य पत्राणामित्यन्वयः । पूर्वपूजायामेव मालाद्वयस्य गुणविधिः फलार्थं, लाघवात् प्रत्यभिज्ञानाच्च ।

करवीरस्रजोभिस्तु पूजयेद्यस्तु चण्डिकाम् ।

सोऽग्निष्टोमफलं प्राप्य सूर्यलोके महीयते ॥

द्रोणपुष्पस्रजोभिस्तु पूजयेद्यस्तु चण्डिकाम् ।

राजसूयफलं प्राप्य इन्द्रलोके महीयते ॥

.पूजयेन्नरः ।

१ अतः परं किञ्चित् त्रुटितमस्ति ।

सोऽश्वमेधफलं प्राप्य दुर्गालोके महीयते ।
तैलदीपप्रदानेन पूजयित्वा तु चण्डिकाम् ।
राजसूयफलं प्राप्य मोदते सह किन्नरैः ॥
तैलं तिलस्यैव ।
आत्मदेहवसादीपं चण्डिकापुरतो नृप ।
प्रज्वाल्य विधिवद्वीर मोदते चण्डिकालये ॥
यः कुर्यात्कार्त्तिके मासि शोभनां दीपमालिकाम् ।
चण्डिकायतने भक्त्या स सूर्यालयमाव्रजेत् ॥
घृतेन कुरुशार्दूल अमावास्यां स्वशक्तितः ।
विशेषतो नवम्यां तु भक्त्या श्रद्धासमन्वितः ॥
यावन्तं दीपसङ्घातं घृतेनापूर्य बोधितम् ।
तावद्वर्षसहस्राणि दुर्गालोके महीयते ॥
दीपसङ्ख्यया वर्षसहस्राणामवच्छेदः ।
अश्मसारमयं कृत्वा नानादीपसमन्वितम् ।
दीपवृक्षं समुद्बोध्य दुर्गायाः पुरतः स्थितः ॥
दत्त्वा कल्पशतं साग्रं दुर्गालोके महीयते ।
अश्मसारमयं लोहघटितम् ।
चन्द्रांशुनिर्मलं स्वच्छं दर्पणं मणिभूषितम् ।
पर्यन्तशोभितं कृत्वा नानामाल्योपलेपनैः ॥
दुर्गायाः पुरतो दत्त्वा श्रद्धया परयान्वितः ।
राजसूयफलं प्राप्य हंसलोके महीयते ॥
हंसलोके सूर्यलोके ।

## अथ नैवेद्यम् ।

भविष्यपुराणे,

गुडखण्डाज्यसंमिश्रमन्नं दत्त्वा नराधिप ।

वैष्णवस्य फलं प्राप्य सूर्यलोके महीयते ॥
वैष्णवस्य विष्णुदेवताकयागस्य। विष्णुभक्तस्येति केचित् ।
गुडखण्डकृतानां च तथा शर्करया नृप ।
घृतेन परिपक्वानां प्रदानाद्ब्रह्मणः पदम् ॥
प्राप्नोतीति शेषः ।
शाल्योदनं रसालां च पानं बदरजं तथा ।
यः प्रयच्छति दुर्गायै स गच्छति शिवालयम् ॥
दुर्गामुद्दिश्य पानीयं केतकीशशिवासितम् ।
यः प्रयच्छति राजेन्द्र स गणाधिपतिर्भवेत् ॥
शशिवासितं कर्पूरवासितम् ।
आम्रं च नारिकेलं च खर्जूरं बीजपूरकम् ।
यः प्रयच्छति दुर्गायै स गच्छति परं पदम् ॥

अथ दानानि ।

भविष्यपुराणे,
मयूरपत्रव्यजनं नानावर्णविचित्रितम् ।
भगवत्यै नरो दत्त्वा लभेद्बहुसुवर्णकम् ॥
तालवृन्तं महाबाहो चित्रकर्मोपशोभितम् ।
वायुलोकं समासाद्य क्रीडते वायुना सह ॥
ताम्रदण्डं विचित्रं यो दुर्गायै सम्प्रयच्छति ।
स गच्छति परं स्थानं मातॄणां लोकपूजितम् ॥
ताम्रदण्डं चामरम्, आग्नेयीन्यायेन सन्निधानात् ।
सौवर्णेन तु दण्डेन दत्त्वा चामरमुत्तमम् ।
दुर्गादेव्यै नरश्रेष्ठ ब्रह्मलोके महीयते ॥
आर्यायाश्चामरं दत्त्वा मणिदण्डविभूषितम् ।
सौवर्णरौप्यचित्रं तु दुर्गालोके महीयते ॥

ध्वजमालाकुलं यस्तु कुर्याद्वै चण्डिकालयम् ।
महाध्वजाष्टकं वापि दिशासु विदिशासु च ॥
कल्पानां तु शतं साग्रं दुर्गालोके महीयते ।
शङ्खकुन्देदुसङ्काशं प्रवालमणिभूषितम् ॥
हेमदण्डभवं छत्रं दुर्गायै यः प्रयच्छति ।
स छत्रेण विचित्रेण किङ्किणीजालशोभिना ॥
धार्यमाणेन शिरसि हरलोके महीयते ।
चण्डिकायतने मर्त्यो घण्टानां च कदम्बकम् ॥
कुर्याद्वै शृङ्खलायुक्तं नानानागगणान्वितम् ।
मयूरपत्रसंवर्त्तं स गच्छति सुरालयम् ॥
मयूरपत्रसंवर्त्तं मयूरपत्रवेष्टितम् ।
भेरीमृदङ्गमुरजाडिण्डिमापटहादिकम् ।
वीणावंशशलाकादि देव्यै तूर्यं प्रयच्छति ॥
स गच्छति महाबाहो देवी यत्र व्यवस्थिता ।
डिण्डिमा वाद्यभेदः । आदिपदेन ढक्कादीनां ग्रहणम् ।

तथा,

ताम्रपात्रप्रदानेन यत्फलं वेदपारगे ।
तस्माच्छतगुणं पुण्यं दत्त्वा मृन्मयमादरात् ॥
दुर्गायै प्राप्नुयाद्वीर स्यात्तथा नात्र संशयः ।
हेमपात्राणि यद्दत्त्वा पुण्यं वा वेदपारगे ॥
ताम्रपात्रप्रदानेन देव्यै शतगुणं भवेत् ।
निष्ककोटिं सुवर्णस्य यो दद्याद्वेदपारगे ॥
दुर्गायाः फलमेवं तु राजतस्य ततोऽधिकम् ।

राजतस्य पात्रस्य ।

गैरिकस्य तु पात्राणि दुर्गायै यः प्रयच्छति ।

तस्य पुण्यफलं युक्तं तारागणपदं दिवि ॥
तुल्यमेवफलं प्रोक्तं दुर्गायाढ्यदरिद्रयोः ।
ततस्त्वभ्यधिकं तस्य यस्य शक्तिरनङ्कुशा ॥

गौरिकं सुवर्णम्। दुर्गायाढ्यदरिद्रयोरिति सन्धिश्छान्दसः। तुल्यमिति आढ्यस्योत्कृष्टपात्रप्रदानात् यत्फलं तद्दरिद्रस्यानुत्कृष्टपात्रप्रदानेन फलं भवतीत्यर्थः ।

यो गां पपस्विनीं दद्यात्तरुणीं शीलमण्डिताम् ।
भगवत्यै महाबाहो सोऽश्वमेधफलं लभेत् ॥
स्नपनार्थं तु दुर्गाया यः प्रयच्छति भारत ।
कपिलां गुणसम्पन्नां स प्रयच्छति गोशतम् ॥

भगवत्यै एककपिलादानेन गोशतदानफलं लभत इत्यर्थः ।

वृषभं परिपूर्णाङ्गमुदासीनं शशिप्रभम् ।
यस्तु दद्यान्नरो भक्त्या भगवत्यै सकृन्नरः ॥
यावन्ति नृप रोमाणि वृषदेहस्थितानि च ।
तावद्वर्षसहस्राणि रुद्रलोके महीयते ॥

उदासीनं अहिंस्रम् । शशिप्रभं श्वेतवर्णम् ।

सुविनीतां स्त्रियं दासीं भृतकं वा नराधिप ।
यः प्रयच्छति दुर्गायै एतत्पुण्यफलं शृणु ॥
स हस्तियानमारूढो नानागजगणैर्वृतः ।
क्रीडते गणगन्धर्वैरिन्द्रलोके महीयते ॥
यस्तु दद्याद्रथं भक्त्या ध्वजच्छत्रसमन्वितम् ।
किङ्किणीजालसम्पन्नं घण्टाचामरभूषितम् ॥
दुर्गायाः कुरुशार्दूल स याति परमां गतिम् ।
यो दुर्गायै जलोपेतां सर्वसस्यप्ररोहिणीम् ॥
महीं महीपतिः कुर्यात्स याति परमं पदम् ।

महीपतिः राजा ।
तावत्कल्पसहस्राणि दुर्गालोके महीयते ॥
सकाष्ठतृणपर्यन्तं ससीमं सपरिग्रहम् ।
नानाकुट्टसुसम्बद्धं नगराभ्यासवर्त्तिनम् ॥
यः प्रयच्छति दुर्गायै लिखित्वा ग्राममुत्तमम् ।
सोऽश्वमेधफलं प्राप्य शक्रलोके महीयते ।
लिखित्वा पट्टादौ । सपरिग्रहं सपरीवारम् ।
विपण्यापणसम्पन्नं नानाजलसमाकुलम् ।
पुरं प्रयच्छते यस्तु महर्ल्लोके महीयते ॥
दृढप्राकारपरिखं देवतायतनान्वितम् ।
वीथ्यापणगणाकीर्णं परितो जनसङ्कुलम् ॥
नगरं यच्छते यस्तु भगवत्यै नराधिप ।
सोऽश्वमेधफलं प्राप्य इन्द्रलोके महीयते ॥
लोकान् प्रयच्छते यस्तु श्रद्धया विधिवन्नृप ।
स गत्वा तु तपोलोकं रमेद्वै मुनिभिः सह ॥
नारिकेलाम्रवृक्षैश्च मातुलुङ्गनगावृतम् ।
बहुलाशोकजातीभिः करवीरैः सकुब्जकैः ॥
कदलीकदम्बवृक्षैश्च मुकुरैरावृतं तथा ।
मुकुरो विचिकिलः ।
यस्त्वेवं तु विधिं कृत्वा आरामं पुष्पशोभितम् ।
प्रयच्छति नरो भक्त्या दुर्गायै भरतर्षभ ॥
तस्य पुण्यफलं वच्मि सङ्क्षेपान्न तु विस्तरात् ।
यावन्ति पत्रकुसुमफलानि विविधानि च ॥
तावद्वर्षसहस्राणि दुर्गायानुचरो भवेत् ।
चण्डिकायतनं यस्तु श्रद्धया परयान्वितः ॥

वापीकूपतडागं तु दीर्घिकां यश्च कारयेत् ।
स कुलानां शतं साग्रं तारयित्वा भवार्णवात् ॥
चण्डिकापुरमासाद्य मोदते चण्डिकानुगः ।
तथा,
वस्त्राणि सुविचित्राणि सूक्ष्माणि च मृदूनि च ।
यः प्रयच्छति दुर्गायै स गच्छेच्च शिवालयम् ॥
शिवा दुर्गा ।
यावन्तस्तन्तवो वीर तेषु वस्त्रेषु कीर्त्तिताः ।
तावद्वर्षसहस्राणि मोदते चण्डिकालये ॥
सुवर्णतिलकं यस्तु भगवत्यै प्रयच्छति ।
स गच्छति परं स्थानं यत्र सा परमा कला ॥
परमा कला दुर्गा ।
सौवर्णे अक्षिणी यस्तु चण्डिकायै प्रयच्छति ।
गोसहस्रफलं प्राप्य सूर्यलोके महीते ॥
एवं वित्तानुसारेण फलं ज्ञेयं समासतः ॥
सर्वेषां हेमपत्राणां निष्कादीनां समासतः ।
भक्ष्यभोज्यैरनेकैश्च मद्यमांसैस्समन्वितम् ॥
सन्ध्याकाले नवम्यां यो बलिं कुर्यान्नराधिप ।
चण्डिकायतने भक्त्या महिषाद्यानिपातनैः ॥
स गच्छति परं स्थानं यत्र सा चण्डिका स्थिता

## अथ मूर्त्तिपूजा ।

देवी पुराणे, ब्रह्मोवाच ।
शम्भुः पूजयते देवीं मन्त्रशक्तिमयीं शुभाम् ।
अक्षमालाकरो नित्यं तेनासौ विभवोत्तमः ॥
मन्त्रशक्तिमयीं मन्त्रे यः शक्तिभागस्तद्वर्णात्मिकाम् । मन्त्र-

मयीं शक्तिमयीं चेति कश्चित् । अक्षमालाकरत्वं दृष्टार्थत्वाय जपस्य चात्र विनियोगः । अत्र सर्वोत्कृष्टविभवत्वमेव फलम् । एवमुत्तरत्रापि शैलप्रकृतिदेवीपूजाया ब्रह्मत्वादिरूपफलबोधने तात्पर्यम् ।

अहं शैलमयीं देवीं पूजयामि सुरोत्तम ।
तेन ब्रह्मत्वमेवेदं मया प्राप्तं सुदुर्लभम् ॥
इन्द्रनीलमयीं देवीं विष्णुरर्चयते सदा ।
विष्णुत्वं प्राप्तवांस्तेन अद्भुतैकसनातनम् ॥
देवीं हेममयीं कान्तां धनदोऽर्चयते सदा ।
तेनासौ धनदो देवो धनदत्वमवाप्तवान् ॥
विश्वेदेवा महात्मानो रौप्यदेवीं मनोरमाम् ।
यजन्ते विधिवद्भक्त्या तेन विश्वत्वमागताः ॥
वायुः पूजयते भक्त्या देवीं पित्तलसम्भवाम् ।
वायुत्वं तेन तत्प्राप्तमनौपम्यं गुणावहम् ॥
वसवः कांस्यकीं देवीं पूजयन्ति विधानतः ।
प्राप्तवन्तो महात्मानो वसुत्वं सुमहोदयाः ॥
कांस्यकीं कांस्यमयीम् ।
अश्विनौ पार्थिवीं देवीं पूजयन्तौ विधानतः ।
तेन तावश्विनौ देवौ दिव्यं देहमुपागतौ ॥
देवशरीरं गतावित्यर्थः ।
स्फाटिकीं शोभनां देवीं वरुणोऽर्चयते सदा ।
वारुणत्वं हि सम्प्राप्तं तेन वृद्ध्या समन्वितम् ॥
देवीं रत्नमयीं पुण्यामग्निर्यजति भावितः ।
अग्नित्वं प्राप्तवांस्तेन तेजोरूपसमन्वितम् ॥
ताम्रीं देवीं सदाकालं भक्त्या देवो दिवाकरः ।

अर्चते तेन सम्प्राप्तं सूर्यत्वं शुभमुत्तमम् ॥
मुक्ताफलमयीं देवीं सोमः पूजयते सदा ।
तेन सोमोऽपि सम्प्राप्तः सोमत्वं सततोज्ज्वलम् ॥
सदेति पदोपादानात् यावज्जीवकर्तव्यता ।
प्रवालकमयीं देवीं पूजयन्ति विधानतः ।
तेन ते ग्रहतां प्राप्ता ग्रहाः सूर्यादयो नृप ॥
रीतिजां शोभनां देवीं पूजयन्त्यसुरोत्तमाः ।
राक्षसाश्च महात्मानस्तेन तेऽमितविक्रमाः ॥
रीतिः पित्तलकम् ।
त्रपुसीसमयीं देवीं पिशाचाः पूजयन्ति ताम् ।
तेन सिद्धबलोपेताः प्रयान्ति परमं पदम् ॥
अत्र त्रपुसीसमयोः साहित्यम् । त्रपुमयीं सीसमयीमिति कश्चित् ।
त्रैलोहिकीं सदा देवीं यजन्ते गुह्यकादयः ।
तेन तेऽतिबलोपेताः प्रयान्तीश्वरमन्दिरम् ॥
त्रैलोहिकीं कनकताम्रलोहमयीम् ।
वज्रलोहमयीं देवीं यजन्ते मातरः सदा ।
मातृत्वं तास्ततः प्राप्ताः प्रयान्ति परमं पदम् ॥
तथा त्वमपि देवेन्द्र यदीच्छसि परं पदम् ।
शिवां मणिमयीं पूज्य लप्स्यसे मनसेप्सितम् ॥

अथ शूलपूजा ।

भविष्यपुराणे,
सर्वदेवमयीं देवीं साक्षाच्छूले व्यवस्थिताम् ।
अनुग्रहाय लोकानां तस्मात्तां नित्यमर्चयेत् ॥
यस्तु पूजयते नित्यं चण्डिकां शूलरूपिणीम् ।

धर्मार्थकाममोक्षाणां स नरो भाजनं भवेत् ॥
आलयः सर्वभूतानां त्रिशूलं देवपूजितम् ।
तस्मात्तां पूजयेद्वीर ज्येष्ठे मासि विशेषतः ॥

सुमन्तुरुवाच ।

हन्त ते वच्मि परमं रहस्यं पापनाशनम् ।
धर्म्यं यशस्यमायुष्यं सर्वदेवैरनुष्ठितम् ॥
काष्ठं वा काञ्चनं वापि त्रिशूलं चण्डिकात्मजम् ।
स्नापयित्वा तु तं भक्त्या कुङ्कुमेन विलिप्य च ॥
श्वेतैर्विकसितैः पुष्पैः पूजयित्वा प्रणम्य च ।
गजे रथे हये वापि वृषभे वा नराधिप ॥
आरोप्य तं महाबाहो मणिकाञ्चनभूषितम् ।
नानावादित्रनिर्घोषैर्ब्रह्मघोषैश्च पुष्कलैः ॥
नयेदायतने देव्याः कृतशोभं समन्ततः ।
दुर्गायाः पुरतः स्थाप्य बिल्वपत्रैश्च पूजयेत् ॥
प्रणम्य शिरसा देवीं स्तुत्वा चैव क्षमापयेत् ।
अनेन विधिना देवीं पूजयित्वा तु चण्डिकाम् ॥
ब्रह्मेन्द्रविष्णुरुद्राद्यैः प्राप्तं तु परमं पदम् ।
य एवं पूजयेद्देवीं त्रिशूलाकृतिमादरात् ॥
मुच्यते स नरः पापैर्ब्रह्मलोकं च गच्छति ।
एतद्व्रतं महापुण्यं शूलपूजाख्यमुत्तमम् ॥
भक्तस्य ते मयाख्यातं महापातकनाशनम् ।

तथा,

कृत्वा हेममयं शूलं हेमपात्रादिषु स्थितम् ।
पुष्पमालापरिक्षिप्तं वितानपरिशोभितम् ॥
कृत्वा तु तद्व्रजेद्वीर चण्डिकायतनं परम् ।

धारयेच्छिरसा पात्रं नानावादित्रिभिर्युतम् ॥
कुर्यात्प्रदक्षिणं वापि प्रणम्य शिरसा शिवाम् ।
विन्यसेद्विधिवद्वीर त्रिशूलं पुरतो नृप ॥
स गच्छति परं स्थानं यत्र देवश्चतुर्भुजः ।

अथ कुमारीपूजा ।

देवीपुराणे, ब्रह्मोवाच ।
न तथा तुष्यते शक्र होमदानजपेन तु ।
कुमारीभोजनेनात्र यथा देवी प्रसीदति ॥
पितरो वसवो रुद्रा आदित्या गणनायकाः ।
सर्वे ते पूजितास्तेन कुमार्यो येन पूजिताः ॥
शुक्लाष्टमीचतुर्दश्योर्नवम्यां च विशेषतः ।
कृष्णपक्षे विशेषेण भोजयेत्तु कुमारिकाः ॥
प्रक्षाल्य पादौ सर्वासां कुमारीणां तु वासव ।
सुलिप्ते भूतले रम्ये तत्र स्थाप्यासने स्थिताः ॥
पूजयेद्गन्धपुष्पाद्यैः स्रग्भिश्चापि मनोरमैः ।
पूजयित्वा विधानेन भोजनं तासु दापयेत् ॥
खण्डलड्डुगुडं सर्पिर्दधि क्षीरं समाक्षिकम् ।
तासां देयं कुमारीणां शनैः सम्भोजयेत्ततः ॥
पानीयं याचितं देयमन्नं वा याचितं शुभम् ।
तास्तृप्तास्तु यदा सर्वास्तदा आचमनं ददेत् ॥
आचम्य चाक्षतान् दत्त्वा त्वया क्षन्तव्यमित्युत ।
आचम्येति यजमानस्यैवेदमाचमनम् ।
दातुः शिरसि देयास्तु कन्यकाभिरथाक्षताः ॥
तेनापि प्रणिपातास्तु कर्तव्या भक्तिपूर्वकाः ।
अनेन विधिना शक्र देवी क्षिप्रं प्रसीदति ॥

ददाति विविधान् कामान् मनोऽभीष्टान् सुराधिप ।
राज्यं कृत्वा ततः पश्चात् देवीलोकं स गच्छति ॥

तथा,

न्यायतो यान्युपात्तानि शाकान्यपि नृपोत्तम ।
तानि देव्यै प्रदेयानि कन्याभ्यो योषितासु च ॥
तद्भक्तेषु च विप्रेषु अपरेष्वपि नित्यशः ।
यः पुनर्विधिना वत्स देवीमुद्दिश्य प्रावृषि ॥
विप्रेषु विप्रकन्यासु तिलादीन् सम्प्रयच्छति ।
तस्य सन्तुष्यते देवी अचिरेणैव विट्पते ॥

एतच्च वाक्यत्रयं दानबोधकमपि मूलग्रन्थानुरोधादत्र लिखितम् ।

### अथ मातृपूजा ।

देवीपुराणे,

मातॄणां तु सदा चक्रं हेमराजतताम्रजम् ।
पूजितं विधिना शक्र संवत्सरतमोऽपहम् ॥

मातॄणां चक्रं मेलकम् । अत्र हेमराजतताम्राणां प्रत्येकमन्वयः । तमः पापम् ।

अन्येऽपि ये मुनिश्रेष्ठ द्विजा भूपा विशोऽथवा ।
शूद्रा वा भक्तिमास्थाय पूजयिष्यन्ति मातरः ॥

मातरः मातॄः, विभक्तिविपरिणामात् । मातरमिति कामधेनौ पाठः ।

न तेषां विप्र राष्ट्रेषु भयं किञ्चिद्भविष्यति ।
गावश्च भूरिपयसो द्विजा यज्ञसमाकुलाः ॥
निवृत्तवैरा भूपाला भविष्यन्ति न संशयः ।
सुभिक्षं क्षेममारोग्यं पर्जन्यः कामवृष्टिदः ॥

भवेत्सस्यस्य निष्पत्तिर्मातॄणां पूजनात्सदा ।

सदेति फलेन सम्बध्यते। प्रत्यब्दं पूजनेऽब्दस्यापि फलम् ।

चिरन्तनाश्च या देव्यो गिरिदुर्गेषु संस्थिताः ।

ताः पूजयेत् द्विजश्रेष्ठ नृपराष्ट्रविवृद्धिदाः ॥

प्रयोगान्तरम् ।

अन्यथा मलिना दीना बहिर्माल्यविवार्जिताः ।

ताः सकृत्पूजिता वीर सर्वकामफलप्रदाः ॥

एकाहमपि ये भक्त्या कन्यासंस्थे दिवाकरे ।

पूजयित्वा शिवाचक्रं दीपान् सम्बोधयन्ति च ॥

सम्बोधनमुत्तेजनम् ।

ते लभन्ते भुवो लोकानायुरारोग्यसम्पदः ।

सन्ध्याकाले तु सम्प्राप्ते पूजयित्वा तु मातरः ॥

ये ददन्ति घृतैर्दीपानुत्करं पललान्वितम् ।

उत्करं माषमिश्रभक्तम् । पललं मांसम् ।

न तेषां दुरितं किञ्चित् विद्यते मुनिसत्तम ।

रुद्रो ब्रह्मा तथा विष्णुरीशः स्कन्दस्तथा हरिः ॥

हरिः इन्द्रः ।

परे च विघ्नसहिताः स्त्रीरूपाः सप्त संस्थिताः ।

विघ्नो विघ्ननायकः । एते सप्त विघ्नसहिताः । परे सूर्यादयः स्त्रीरूपाः ।

मातॄणां पूजनाद्विप्र सर्वदेवाश्च पूजिताः ।

निष्कलं सकलं वाथ एकं पञ्चकमेव वा ॥

पूजयेत् तत्र कन्यास्थे क्षणं पूजां न लङ्घयेत् ।

निष्कलं अमावास्यायाम् । सकलं पूर्णिमायाम् । एकं यत् किञ्चिद्दिनपञ्चकम् । कन्यास्थे, रवाविति शेषः । क्षणं पूजां न

लङ्घयेदिति क्षणं विलङ्घ्य विसर्जयेदित्यर्थः ।

मृन्मयीं प्रतिमां कृत्वा बिल्वे वा यस्तु पूजयेत् ।

बिल्वे बिल्वशाखायाम् ।

आमे वित्तानुसारेण लभेद्वै मौलिकं फलम् ॥

मौलिकं साक्षाद्भगवतीपूजाजन्यम् ।

एकं वा यदि वा देवीं देवं वा वल्लकीकरम् ।

वल्लकी वीणा । एकं ब्रह्मविष्णुरुद्रान्यतमं देवम् ।

गजाननयुतांपूजा सर्वकामफलप्रदाम् । (?)

ब्रह्माणीं वैष्णवीं चैव कौमारीं शक्रवह्निजाम् ॥

पूजयेद्यः स आप्नोति यद्यन्मनसि संस्थितम् ।

शक्रजामैन्द्रीम् । वह्निजामाग्नेयीम् ।

वृषारूढां महादेवीं त्रिनेत्रां शूलधारिणीम् ।

पूजयेद्यः स आप्नोति यद्यन्मनसि संस्थितम् ॥

## अथ देवीपूजा ।

देवीपुराणे,

ब्रह्मोवाच ।

देवीरूपो हरो वत्स विष्णुर्देवीमयस्तथा ।

सर्वरूपा महाभागा भूयश्च रिपुनाशिनी ॥

नागराट्रूपिणी देवी गौर्युमा चर्चिका स्मृता ।

मातरो भगवत्यश्च तथा नारायणी मता ॥

महाश्वेता महादेवी त्रिवेदी त्रिपदा मता ।

त्रिकाला त्रिगुणा गौरी त्रिशूला शूलरूपिणी ।

व्यक्ताव्यक्ताकृतिं कृत्वा हेमरूप्यमयीं शिवाम् ॥

त्रिशूले पूजयेद्वत्स स्नाप्य कापोतवारिणा ।

कापोतवारिणा तीर्थजलेन ।

चन्दनागरुगन्धाढ्यां स्रग्धूपैस्तु सुधूपिताम् ।
सकृदिष्ट्वाऽशुभं हन्यात्सप्तजन्मकृतं मुने ॥
तत्ततीर्थभेदात् फलान्तरमाह–
पूर्वोक्तानि च तीर्थानि तेषामन्यतमेऽपि वा ॥
मायापुर्यां तथा काश्यां यस्तु मार्गेऽथ नैमिषे ।
निवसन् पूजयेद्देवीं सर्वान् कामानवाप्नुयात् ॥
तिलाज्याहुतिदानेन देवीकुण्डे शुभानि तु ।
कृत्वाहुतिं पयो वत्स सततं लभते फलम् ॥
पोतं नावि शुभं ख्यातं पापं कर्म तु कं यतः ।
यस्मात् कात्तारयेल्लोकान् कपोतं तेन कीर्त्तितम् ॥

अथ सर्वमङ्गलापूजाविधिर्लिख्यते[1] ।

मङ्गला नन्दिनी भद्रा लक्ष्मीः कीर्त्तिर्यशस्विनी ।
पुष्टिर्मेधा शिवा साध्वी यशा शोभा जया धृतिः ॥
आनन्दा च सुनन्दा च देव्यः षोडश कीर्त्तिताः ।
एकैकेन तु रूपेण देव्या मन्त्रांश्च दर्शयेत् ॥
ईशान्यादीनि देयानि आयुधानि यथाविधि ।

योनिमुद्रा लिङ्गमुद्रा व्यापिनी छत्रगदाघण्टा दण्डः खेटकं शूलं चक्रं पाशं खड्गं धनुर्बाणपद्मशङ्खमुद्राः षोडश । अतो मन्त्रपदानि । ॐकालि वज्रेश्वरि लोहदण्डायै इति मूलमन्त्रः ।२०० जपः । ॐकालि हृदयम् । ॐकालि वज्रिणि शिरः । ॐकालि कालेश्वरि शिखा । ॐकालि वज्रेश्वरि कवचम् । ॐकालि लोहदण्डायै नेत्रम् । मूलमन्त्रोऽस्त्रम् । अनेन न्यायेन पञ्च ब्रह्माणीमङ्गलामङ्गलेति स्थापयेत् । (?)

अथ स्थानपूजा ।

१ अस्मिन् प्रकरणे ग्रन्थस्य त्रुटिर्भाति ।

देवीपुराणे, ब्रह्मोवाच ।

हिमाद्रौ नन्दिनी ज्वाला ज्वालास्या च जलन्धरे ।
पञ्च माणवके देव्यः कन्यसे राजपर्वते ॥

कन्यसे कनीयसि ।

दक्षिणाद्या महाभोगा गौरी मेधा महाफला ।
विन्ध्यवासा तथा देवी ज्वालाऽऽस्या च तथा परा ॥
एताः पञ्च महाभाग सर्वकामप्रदा नृणाम् ।

एताः पञ्च गौर्यादयः ।

सिंहराशिगतैः क्रूरग्रहैः संपूजितास्तथा ।

क्रूरग्रहैः पापग्रहैः ।

मन्दे सिंहगते शक्र मीनमेषगते रवौ ।
देव्यो वै रोचनैः पूज्या गौर्याद्या हवनैर्जपैः ॥

देव्यो गौर्यादयः । रोचनैः कुङ्कुमैः ।

सिंहे मन्दो यदा किञ्चिद्दैवान्मीने बृहस्पतिः ।
जन्मगश्चाष्टमो मृत्युं कुर्याद्द्रव्यक्षयं त्रिगः ॥

जन्मगोऽष्टमगश्च बृहस्पतिरेव त्रिगश्च । एतच्च स्वराश्यपेक्षयैव ।

तदा गौरीं यजेद्देवीं विन्ध्यवासीं विशेषतः ।
बलिमाल्योपहारैश्च जपं होमं च कारयेत् ॥
वर्णैः षोडशभिर्विद्यानवाभिर्वा सदाऽऽहिता ।

वर्णैः षोडशभिरिति ॐकालि कालि इत्यादिभिः । इयमेव च विद्यानवाभिः क्ष्मामित्यादिभिः । सदा आहिता व्यवस्थापिता एभिः पूज्येत्यर्थः । सदा हिता सदा हितहेतुः ।

महालक्ष्मीगिरौ पूज्या कुर्याद्यात्रां भ्रमादिकाम् ।
अपमृत्युविनाशाय तव सर्वमुदाहृतम् ॥

दर्शनादर्घदानाच्च प्रमोदे जलमध्यगाः ।
दर्शनाद्देवीनाम् ।
वैदिशे भद्रकाल्याद्या उज्जायिन्यां महाफलाः ॥
वैदिशे विदिशासम्बन्धिनि देशे ।
देवीकोट्टे च या देवी पूजिता चर्चिका शुभा ।
कोलापुर्यां महालक्ष्मीं पूर्णावर्णे शिवां सुखी ॥
पूर्णावर्णे देशविशेषे ।
कोशले भद्रनामेति काम्या च गिरिकन्दरे ।
किष्किन्धे कान्यकुब्जे च सिद्धिदा सर्वशर्वरी ॥
कालञ्जरे महापुण्ये यजेत्पर्वसु चण्डिकाम् ।
महानवम्यां वैशाख्यां कार्त्तिक्यां श्रावणीषु च ॥
जपो होमश्च कर्त्तव्यः क्षीराहारैरसङ्गिभिः ।
असङ्गिभिः नियतैः ।
मयूखैर्दधिपात्रेण बलिर्देयो विधानतः । (?)
मयूखैरायुधं धारयाद्भिरेव ।
समया पद्मालाभिः षोडशर्णैर्महाफलैः ।
महाभ्युदयकालेन कार्यो होमो जपस्तथा ॥
समया समीपे बलिर्देयः ।
येन संयम्यते घोरं पातकं चोपपातकम् ।
कालाख्यहोमगन्धेन अपमृत्युं व्यपोहति ॥
कालाख्यः कृष्णागुरुः ।
ग्रहदौस्थ्यं महाघोरं शमयेत्स्वपुरेषु च ।
कुङ्कुमागुरुहोमेन सितचन्दनयोगिना ॥
हेमरौप्यैस्तथा रत्नैः पात्रैरर्घघृतादिकम् ।
गृहीत्वा सर्वकार्येषु कुर्याच्छान्तिकपौष्टिकम् ॥

रिपुराजभयं घोरं गृहजं देहजं तथा ।
शमयेत्पूजिता क्षेमा अभिषेकार्चनादिभिः ॥
क्षेमा दुर्गा ।
अभिषेकः प्रदातव्य एकान्ते लक्षणान्विते ।
अभिषेकः प्रदातव्यो यस्य शान्तिर्विधीयते ॥
एकान्ते विजने देशे । लक्षणान्विते.... ।
योषाभिर्दिव्यरूपाभिः साधनेन सहैव तु ।
विद्याभिमन्त्रितैः कुम्भैर्हेमगर्भैः सिताम्बरैः ॥
विद्याभिमन्त्रितैरिति पूर्वकथितविद्यामन्त्राभिमन्त्रितैरित्यर्थः।
पुष्पदानसमायुक्तैः स्नानं कुर्यात् प्रयत्नतः ।
यश्चानेन विधानेन स भवेद्विगतामयः ॥
महापातकदोषाद्यैर्मुच्यते वा विचारणात् ।
पितृमातृवधात् घोरात् मित्रद्रोहात्सुहृद्वधात् ॥
अभिषेकेन मुच्येत देवीभिः स्नापितो नरः ।
देवीभिः देवीरूपाभिर्योषिद्भिरित्यर्थः ।
राजाऽनेन विधानेन राजपुत्रोऽधिकारवान् ।
अधिकारवान् पातित्यादिरहितः ।
स्नापितः सर्वकामांस्तु लभते वाञ्छितान् भुवि ।
वन्ध्या पुत्रमवाप्नोति सौभाग्यमतुलं लभेत् ॥
गिरिपृष्ठे यजेन्मन्त्री मातरो विश्वमातरः ।
कौलिकेन विधानेन राज्यायुः सुखदायिकाः ॥
कौलिकेन विधानेन पशुघातादिना ।

इति स्थानपूजाविधिः ।

अथ मासक्रमेण पूजा ।

देवीपुराणे, ब्रह्मोवाच ।

सर्वकामप्रसिद्ध्यर्थं पूजनीया सदा शिवा ।
तथा ते कथयिष्यामि शृणु वत्स समासतः ॥
चैत्रादौ या समाख्याता पूजा सर्वार्थसाधिनी ।
तस्या भेदान् प्रवक्ष्यामि इष्टापूर्त्तिप्रसिद्धये ॥
चैत्रे चित्रर्क्षगां पूजां कृत्वा राष्ट्रपदं लभेत् ।
तृतीयायां तु वैशाखे रौहिण्यर्क्षेण पूजयेत् ॥
उदकुम्भप्रदानेन ब्रह्मलोके महीयते ।

उदकुम्भप्रदानं ब्राह्मणाय । देव्या एव दानमित्यन्ये ।

इन्द्राग्निदैवते ऋक्षे पौर्णमास्यां तथैव च ।
पूजां कृत्वा भवेद्ब्रह्मन् विगताघो नरोत्तमः ॥

पौर्णमास्यां वैशाखस्यैव । इन्द्राग्निदैवते विशाखायाम् ।

अग्नेः परिग्रहः कार्यो दानं देयं द्विजातिषु ।
त्रयाणामेकमार्गाय अग्निदेवीं प्रपूजयेत् ॥

................इत्यर्थः ।

मूलर्क्षे पशुघातेन ज्येष्ठे मासि नराधिप ।
सर्वकामानवाप्नोति भावशुद्धेन कर्मणा ॥
आषाढे मासि यो देवीमाषाढे तु प्रपूजयेत् ।
सर्वान् कामानवाप्नोति देवीलोकं स गच्छति ॥

आषाढे पूर्वोत्तराषाढयोः । अत्रापि पौर्णमास्याममावास्यायामपि ।

श्रावणे पूजयेद्देवीं प्रतिपदादितः क्रमात् ।

शुक्लप्रतिपदादितः ।

ब्रह्ममूर्त्तिगतामृक्षे पुष्ये भौजङ्गमेऽपि वा ॥

ब्रह्ममूर्त्तिगतां ब्रह्माणीम् । भौजङ्गमे अश्लेषानक्षत्रे ।

अथ वा स्वविधानेन पवित्रारोपणं भवेत् ।

ब्रह्माग्न्युमागणेशानां नागस्कन्दतनुस्थिता ॥
रविमातररूपा तु मङ्गलाय सदा भवेत् ।
वृषविष्णुसमाकारा कामरुद्रसमाकृतिः ।
शक्ररूपा प्रयष्टव्या देवी गन्धस्रगादिभिः ॥

ब्रह्माग्न्युमेत्यादि, ब्रह्मरूपा अग्निरूपा गणेशनागस्कन्दरविमातृरूपा। वृषो धर्मः तदाकारा, कामाकारा, रुद्राकारा, शक्ररूपा च यष्टव्येत्यर्थः।

प्रथमे चाश्रमे पूजां गृह्यकर्मव्रतादि च ।
कृत्वा कामानवाप्नोति विगताघोऽवनीश्वरः ॥

प्रथमे चाश्रमे ब्रह्मचर्य्याश्रमे ।

प्रौष्ठपूर्णासु कर्त्तव्या सुपूजा शरणे निशि ।
महोत्सवविधानेन सौत्रामणिफलं लभेत् ॥

प्रौष्ठपूर्णासु भाद्रपौर्णमासीषु । पञ्चमीदशमीपूर्णिमासु वेति कश्चित् ।

अष्टम्यां रोहिणीऋक्षे सोपवासस्तु पूजयेत् ।
विष्णुलोकमवाप्नोति सर्वकामसमृद्धिदाम् ॥
तत्रैव कारयेद्देवीं पितृरूपां महोदयाम् ।
कन्यास्थे च रवौ वत्स पूजनीया यथाविधि ॥
भौजङ्गीं तिथिमाश्रित्य यावच्चन्द्रार्कसङ्गमः ।

भौजङ्गी तिथिः पञ्चमी, तामारभ्य चन्द्रार्कसङ्गमो दर्शस्तदवधि।

तत्रापि महती पूजा कर्त्तव्या पितृदैवते ।
ऋक्षे पिण्डप्रदानं तु ज्येष्ठपुत्री विवर्जयेत् ॥

पितृदैवते मघायाम् ।

आहवेषु विपन्नानां जलाग्निभृगुपातिनाम् ।
चतुर्दश्यां भवेत्पूजा अमावास्यां तु कामिकी ॥

देवीरूपतैव पितॄणां पूजा 'तत्रैव कारयेद्देवीं पितृरूपा'मिति क्रमात् ।

कन्यास्थे तु रवाविषे शुक्लाष्टम्यां प्रपूजयेत् ।

इषे आश्विने ।

सोपवासो निशार्द्धे तु यथाविभवविस्तरैः ॥

पूजां समारभेद्देव्या नक्षत्रे वारुणेऽपि वा ।

वारुणे शतभिषायाम् ।

पशुघातः प्रकर्त्तव्यो गवलाजवधस्तथा ॥

गवलो महिषः ।

बलिक्षेपं सुराशानां कृत्वा सर्वां निशां नयेत् ।

रथयात्रा प्रकर्त्तव्या या पुरा सम्प्रकीर्त्तिता ॥

शक्रोत्सवे महापुण्ये तस्मिन् देवीं प्रपूजयेत् ।

तुलास्थे दीपदानेन पूजा कार्या महाफला ॥

दीपवृक्षः प्रकर्त्तव्यो दीपचक्रमथापरम् ।

दीपयात्रा प्रकर्त्तव्या चतुर्दश्यां कुहूषु च ॥

कुहूः प्रतिपद्युताऽमावास्या ।

सिनीवाली तथा वत्स कार्या सा तु महाफला ।

सिनीवाली चतुर्दशीयुताऽमा ।

सर्वमेवं प्रकर्त्तव्यं बलिपूजामहोत्सवे ।

देवतानां समुत्थानं कुर्यात्पौष्णे तु बुद्धिमान् ॥

नीराजनं प्रकर्त्तव्यं नृनागतुरगादिषु ।

कार्त्तिक्यां कारयेत्पूजायोगं देवीप्रियं सदा ॥

ब्रह्मविष्णुशिवादीनां तत्र पूजा महाफला ।

गवोत्सवः प्रकर्त्तव्यो नीलं वा वृषमुत्सृजेत् ॥

सर्वयज्ञफलं ब्रह्मन् प्राप्नुयादविचारयन् ।

अस्त्राणां पूजनं तत्र कर्त्तव्यं सर्वसिद्धये ॥
मार्गे पूजा प्रकर्त्तव्या अहिर्बुध्न्यर्क्षगा शुभा ॥
अहिर्बुध्न्यं उत्तराभाद्रपदा ।
सोमायाः कारयेत्पूजां सर्वकामफलप्रदाम् ।
पुष्ये पुष्पाभिषेकस्तु कर्त्तव्यः पूजयेच्च माम् ॥
सोमायाः सोमरूपधरायाः । पुष्ये पौषमासे ।
माघ्यां पूजा प्रकर्त्तव्या देवीं वै मङ्गलां यजेत् ।
फाल्गुने पूजयेद्देवीं चण्डिकेति च या मता ॥
आतुराणां विशेषेण पूजा तत्र विधीयते ॥
एवं सर्वगता देवी सर्वदेवतनुस्थिता ।
पूजिता विधिना वत्स सर्वकामफलप्रदा ॥

इति मासक्रमपूजा ।

अथ प्रणामादिफलम् ।

छित्त्वा भित्त्वा च भूतानि हत्वा सर्वमिदं जगत् ।
प्रणम्य शिरसा देवीं स पापैस्तु न लिप्यते ॥
सर्वावस्थां गतो वापि युक्तो वा सर्वपातकैः ।
दुर्गां यष्ट्वा नरः सोऽपि प्रयाति परमां गतिम् ॥
स्वपंस्तिष्ठन् व्रजन् धावन् प्रलपन् भोजने च यः ।
स्मरते सततं दुर्गां स च मुच्येत बन्धनात् ॥
तथा,
सर्वतीर्थोपवासेषु सर्वतीर्थेषु यत्फलम् ।
तत्फलं लभते वीर प्रणम्य शिरसा शिवाम् ॥
सम्प्रसारितदेहो यो दण्डवत्पतते भुवि ।
चण्डिकापुरतो वीर स याति परमां गतिम् ॥
दुर्गापूजोपकरणं स्वल्पं वा यदि वा बहु ।

कृत्वा वित्तानुसारेण रुद्रलोके महीयते ॥
चण्डिकां पूजयेत्तत्र प्रकृष्टेनान्तरात्मना ।
कृताञ्जलिपुटो भूत्वा इदं स्तोत्रमुदीरयेत् ॥
दुर्गां शिवां शान्तिकरीं ब्रह्माणीं ब्रह्मणः प्रियाम् ।
सर्वलोकप्रणेत्रीं च प्रणमामि सदा शिवाम् ॥
मङ्गलां शोभनां शुद्धां निष्कलां परमां कलाम् ।
विश्वेश्वरीं विश्वमातां चण्डिकां प्रणमाम्यहम् ॥
सर्वदेवमयीं देवीं सर्वरोगभयापहाम् ।
ब्रह्मेशविष्णुनमितां प्रणमामि सदा उमाम् ॥
विन्ध्यस्थां विध्यनिलयां दिव्यस्थाननिवासिनीम् ।
योगिनीं योगमातां च चण्डिकां प्रणमाम्यहम् ॥
ईशानमातरं देवीमीश्वरीमीश्वरप्रियाम् ।
प्रणतोऽस्मि सदा दुर्गां संसारार्णवतारिणीम् ॥
इदं यः पठते स्तोत्रं शृणुयाद्वापि यो नरः ।
स मुक्तः सर्वपापेभ्यो मोदते दुर्गया सह ॥
तथा,
तस्य देशे न दुर्भिक्षं न च द्वैष्यं प्रवर्त्तते ।
न कश्चिन्म्रियतेऽकाले पूज्यते यत्र चण्डिका ॥
यो दुर्गां पूजयेन्नित्यं चपलोऽप्यजितेन्द्रियः ।
भावेन च सदा युक्तः सोऽपि याति परां गतिम् ॥
पूजयित्वा तु तां देवीं श्रद्धया सर्वमङ्गलाम् ।
घृताभिषेकं यः कुर्यादहोरात्रं नराधिप ॥
श्लक्ष्णधारेण भगवत्याश्चण्डिकाया विचक्षणः ।
मासि चाश्वयुजे वीर नवम्यां श्रद्धयाऽन्वितः ॥
नृत्यगीतनिनादैश्च शङ्खवादित्रनिःस्वनैः ।

गौर्यां जागरणं कार्यं नानापुष्पोपपूजया ॥
सर्वपापविनिर्मुक्तो विश्वतेजोमयस्तथा ।
मोदते दुर्गया सार्द्धं दुर्गालोके महीयते ॥
नवम्यां शुक्लपक्षे तु उपवासपरो नृप ।
स्नापयित्वा घृतेनार्यां सर्वपापैः प्रमुच्यते ॥

अथ पवित्रारोपणम् ।

देवीपुराणे, ब्रह्मोवाच ।

पवित्रारोपणं वत्स सर्वशास्त्रेषु गीयते ।
अग्नेस्तथाऽश्विपार्वत्योर्गजास्यभुजगस्य च ॥
स्कन्दस्य भानोर्मातॄणां दुर्गाधर्मस्य गोपतेः ।
विष्णोः कामस्य देवस्य ब्रह्मणस्तु तथा पुनः ॥
पूजनीया सदा देवी चण्डिका पापनाशिनी ।
सर्वकालं दिवारात्रं नामभिः स्वैः पुरन्दर ॥

अग्न्याद्युपलक्षितप्रतिपदादिपञ्चदश्यन्ततिथिषु तत्तद्देवतानां पवित्रारोपणं सर्वशास्त्रेषु गीयते इत्यन्वयः । सर्वकालं सर्वमासतिथिषु । दिवारात्रं दिवा च रात्रौ च । एतेन पञ्चदशाहोरात्रसामान्यः पूजारूप एकः प्रयोगो दर्शितः ।

अथ वाऽऽषाढमासे तु श्रावणे वापि कारयेत् ।
सप्तम्यां वा त्रयोदश्यामधिमासे नराधिप ॥
सर्वोपहारसम्पन्नो नन्दायां भक्तिमास्थितः ।

नन्दा दुर्गा ।

सूक्ष्मवर्णमयं कार्यं पवित्रं बहुतन्तुभिः ।
ग्रन्थिभिः सुविचित्राभिराचितं मौक्तिकैरपि ॥
सुधौतं चर्चितं तत्तु रोचनाशशिकुङ्कुमैः ।
तथा सर्वाणि द्रव्याणि गन्धपुष्पफलानि च ॥

चर्चितमनुलेपितम् ।

निवेद्यानि विचित्राणि वस्त्राण्याभरणानि च ।
सुस्नातो मन्त्रविधिना अग्निकार्यं समाचरेत् ॥
तथा सम्पूजयेद्देवीमर्चायां स्थण्डिलेऽपि वा ।
पादुके वाथ खड्गे वा छुरिकाकार्मुकेऽपि वा ॥
दन्तधावनपूर्वं तु पञ्चगव्ये च सङ्क्षिपेत् ।
दत्त्वा दिशां बलिं वत्स कार्यं चैवाधिवासनम् ॥
सदशैः पत्रवस्त्रैर्वा छादयेत्तु पवित्रकम् ।

सदशैर्वस्त्रपत्रैः सदशैर्वस्त्रैः पत्रैर्वेत्यन्वयः ।

शताभिमन्त्रितं कृत्वा ततो देव्यै निवेदयेत् ॥

शताभिमन्त्रितं शतवारजप्तदुर्गामन्त्राभिमन्त्रितम् ।

रात्रौ तु जागरं कुर्यात्सर्वशोभासमन्वितम् ।
नटनर्त्तकवेश्यानां सङ्गानि विविधानि च ॥
प्रभातसमये रम्ये प्राप्ते दद्यात्पुनर्बलिम् ।
प्रत्यूषे विधिवत्स्नात्वा तथा देवीं हुताशनम् ॥
इष्ट्वाऽऽहूयाथ काम्याश्च स्त्रियो भोज्या द्विजास्तथा ।
पवित्रारोपणाद्यन्ते दक्षिणाद्युपपादयेत् ॥
यथाशक्त्या भवेच्छक्र नियमः कार्यकारणम् ।
राज्ञा नानाविधा शक्ती रज्जुक्रीडा मृगाविधिः ॥
द्विजाचार्यैश्च स्वाध्यायो न कार्यः कर्षणं कृषैः ।

कृषैः कर्षकैः ।

वणिग्भिर्नच आत्मीयं दिनानि दश पञ्च च ।

आत्मीयं कार्यमिति शेषः ।

अथवा त्रीणि एकं वा दिनं यामार्द्धमेवच ।
देव्या व्यापार आसक्तिः कर्त्तव्या सततं हरे ॥

तथा सम्पूर्णे कर्तव्ये पुनः कुर्यात्पवित्रकम्।
एवं यः कारयेद्वत्स तस्य पुण्यफलं शृणु ॥
सर्वयज्ञफलं दानं सर्वतीर्थाभिषेचनम्।
प्राप्नुयान्नात्र सन्देहो यस्मात्सर्वगता शिवा ॥
नाधयो न च दुःखानि न पीडा व्याधयो न च।
न भयं शत्रुजं तस्य न ग्रहैः पीड्यते क्वचित् ॥
सिद्ध्यन्ति सर्वकार्याणि अपि यानि महान्त्यपि।
नातः परतरं वत्स अन्यत्पुण्यविवृद्धये ॥
नराणां च नृपाणां च स्त्रीणां चापि विशेषतः।
सौभाग्यजननं वत्स तव स्नेहात्प्रकाशितम् ॥

अथ कालविशेषात्फलविशेषः।

भविष्यपुराणे,

पक्षमेकं तु यो दुर्गां पूजयेद्विजितेन्द्रियः।
एकाहारो महाबाहो सोऽग्निष्टोमफलं लभेत् ॥
पौर्णमास्यां नवम्यां तु अष्टम्यां वा नराधिप।
स्नापयित्वा शुभां दुर्गां वाजपेयफलं लभेत् ॥
शुक्लपक्षे नवम्यां तु अष्टम्यां परमेश्वरीम्।
त्रिकालं पूजयेद्यस्तु चतुर्दश्यां नराधिप ॥
स गच्छति परं स्थानं यत्र देवी व्यवस्थिता।
क्रीडयित्वा चिरं काले राजा भवति भूतले ॥
नवम्यां सोपवासस्तु पूजयेद्यस्तु चण्डिकाम्।
दशानामश्वमेधानां फलं प्राप्नोति मानवः ॥
जितेन्द्रियो ब्रह्मचारी शुचिर्भूत्वा तु यो नरः।
चण्डिकां पूजयेद्भक्त्या स याति परमां गतिम् ॥
स्नानोपवासनियमैः पूजाजागरमार्जनैः।

पर्वकालेषु सर्वेषु चण्डिकां यः प्रपूजयेत् ॥
विमानवरमारुह्य ध्वजमालाकुलं नृप ।
ब्रह्मलोकं नरो गत्वा मोदते शाश्वतीः समाः ॥
तस्मात्सर्वप्रयत्नेन यथाविभवविस्तरैः ।
पूजयेत्सततं दुर्गां महापुण्यफलेच्छया ॥
अयने विषुवे चैव षडशीतिमुखे तथा ।
मासैश्चतुर्भिर्यत्पुण्यं विधिना पूज्य चण्डिकाम् ॥
तत्फलं लभते वीर नवम्यां कार्तिकस्य तु ।
मासि चाश्वयुजे वीर शुक्लपक्षे त्रिशूलिनीम् ॥
नवम्यां पूजयेद्यस्तु तस्य पुण्यफलं शृणु ।
अश्वमेधसहस्रस्य राजसूयशतस्य च ॥
तत्फलं लभते वीर दिवि देवगणैर्वृतः ।
माघे मासि नरो भक्त्या पूजयेद्यस्तु चण्डिकाम् ॥
लभेत्षाण्मासिकं पुण्यं नवम्यां तु न संशयः ।
मेरुमन्दरतुल्योऽपि राशिः पापस्य कर्मणः ॥
चण्डिकां वै समासाद्य नश्यते दुष्टरोगवत् ।
दुर्गार्चने रतो नित्यं महापातकसम्भवैः ॥
दोषैर्न लिप्यते तात पद्मपत्रमिवाम्भसा ।
कार्त्तिके पौर्णमास्यां यः सोपवासोऽर्चयेदुमाम् ॥
सोऽग्निष्टोमफलं विन्देत्सोमलोकं च गच्छति ।
पौर्णमास्यामाषाढस्य योऽर्चयेदम्बिकां नरः ॥
कृत्वोपवासं विधिवत्स भोगी पुत्रवान् भवेत् ।
उत्तरे त्वयने यस्तु सोपवासोऽर्चयेदुमाम् ॥
बहुपुत्रो बहुधनः स नरः कीर्त्तिमाप्नुयात् ।
कृत्वोपवासं विधिवत् विषुवे योऽर्चयेच्छिवाम् ॥

शक्तिमान् बहुपुत्रश्च स भवेद्बलवान्नरः।
योऽर्चयेद्विधिवत् दुर्गां ग्रहणे चन्द्रसूर्ययोः॥
कृतोपवासो विधिवत् स भवेत्पुत्रवान्नरः।
शान्तिकामो नरो यस्तु राहुग्रस्ते दिवाकरे॥
अर्चयेद्विधिवत् देवीं स गच्छेत्परमं पदम्।
इत्येते कथिता वीर पूजाकाला मनीषिभिः॥
दुर्गायाः कुरुशार्दूल येषु पूज्य दिवं व्रजेत्।
दुर्गाया दर्शनं पुण्यं दर्शनादभिवन्दनम्॥
वन्दनात्स्पर्शनं श्रेयः स्पर्शनादभिपूजनम्।
पूजनात्स्नपनं श्रेष्ठं स्नपनात्तर्पणं स्मृतम्॥
तर्पणान्मांसदानं च महिषाजानिपातनम्।
अहन्यहनि यो दुर्गां पूजयेद्रुधिरादिभिः॥
कुलानां शतमुद्धृत्य ब्रह्मलोके महीयते।

### अथ युगदेवीपूजाविधिः।

देवीपुराणे, मनुरुवाच।
संवत्सरप्रमाणेन देव्यः कृत्वा पुरोधसा।
यष्टव्या विधिना तत्र सर्वकामसमृद्धिदाः॥
महाभयविनाशाय महासिद्धिफलाय च।
पूजयेत्परमां देवीं सर्वपापप्रणाशिनीम्॥
रिपुनागकृतां पीडां यक्षरक्षोगणोद्भवाम्।
संवत्सरमहादोषजन्मर्क्षस्यापमर्दनम्॥
जन्मर्क्षमर्दनं पापग्रहस्थोल्कादिभिः। तथा,
केतूत्थशशिराहूत्थां भौमार्किसितभानुजाम्॥
शमयेद्यजमानस्य देवी होमरतस्य च।
शमयेदित्यत्र पीडामित्यनुषज्यते।

मण्डलादिविधानेन महास्नानाभिषेचनैः ।
मङ्गला मङ्गलत्वं च विधिना पूजिताऽऽहरेत् ॥
उत्पातक्षोभनिर्घातविकृतीनां शमाय च ।
कथयिष्ये महाप्राज्ञ शृणुष्वैकमनाधुना ॥
मङ्गला विजया भद्रा शिवा शान्ता धृतिः क्षमा ।
ऋद्धिर्वृद्धयुन्नती सिद्धिस्तुष्टिः पुष्टिश्च श्रीरुमा ॥
दीप्तिः कान्तिर्जया लक्ष्मीरीश्वरीति प्रकीर्तिताः ।
विंशतिश्चोत्तमा देव्यः सत्त्वभावव्यवस्थिताः ॥
प्रथमा संस्थिता वत्स सर्वसिद्धिप्रदायिनी ।
ब्राह्मी प्रजावती शाक्री अजिता चापराजिता ॥
जयन्ती मानसी माया दितिः श्वेता च मोहिनी ।
शरण्या कौशिकी गौरी विमला रतिलालसे ॥
अरुन्धती क्रिया दुर्गा राजस्य इति चापराः ।
राजस्यो रजोगुणप्रधानाः ।
मध्यभागे स्थिता देव्यो युगा नाम शुभावहाः ।
काली रौद्री कपालिनी घण्टाकर्णा मयूरिका ॥
बहुरूपा सुरूपा च त्रिनेत्रा रिपुहाऽम्बिका ।
माहेश्वरी कुमारी च वैष्णवी सुरपूजिता ।
वैवस्वती तथा घोरा कराली विकटाऽदितिः ॥
चार्चिका चेति चान्तस्था देव्यस्त्रैलोक्यविश्रुताः ।
पूजितव्या मुनिश्रेष्ठ सर्वकामप्रसाधिकाः ॥
नवसप्तार्कभेदेन देवेन्द्रहरतुम्बुरैः ।
ब्रह्मणा कश्यपेनाथ विष्णुना प्रभविष्णुना ॥
मातरो भावभेदेन सद्भिराद्यैः प्रपूजिताः ।
देवैर्दिव्युपकाराय एते मन्त्राः प्रकीर्त्तिताः ॥

ग्रहभेदेन ता देव्यो नवसङ्ख्याः प्रकीर्तिताः।
खखोल्कं सोमं भौमं वा शशाङ्कि इति कीर्तिताः॥
मन्त्रा ग्रहाणां यजने सर्वे ओङ्कारपूर्वकाः।
नमः स्वाहान्तसंयुक्ताः पूजाहोमेषु सर्वदा॥
लोकपालाः प्रकर्त्तव्या दशधा भागभेदतः।
नागाश्च नव भेदेन अनन्ताद्याः प्रकीर्तिताः॥
सूर्या द्वादशभेदस्था रुद्रा एकोनभास्कराः।
एवं सर्वगता देव्यः पञ्चभूततनुस्थिताः॥
पञ्चधा तु समाख्याता द्वादशादिगुणाः शिवाः।
एताश्चानेकभेदेन सर्वमङ्गलया समाः॥
प्रभवादिप्रभेदेन कथयामि शृणुष्वतः।
सिंहासनगता देवी जटामुकुटधारिणी॥
शूलाक्षसूत्रधारी च वरदाभयचापधृक्।
दर्पणं शरखेटं च खड्गचर्मधरा शिवा॥
सुरूपा लक्षणोपेता स्तम्भिनी चारुभाषिणी।
सर्वाभरणसम्पन्ना सर्वशोभासमन्विता॥
नेत्रत्रयकृतोद्योता सोमसूर्यहुताशनैः।
एवंविधां महादेवीं गृहे सप्ताङ्गुलाधराम्॥
नवद्वादशमानां वा षण्मासं तां तु पूजयेत्।
प्रासादे करमाना सा यावत्पञ्चदशाः कराः॥
कनिष्ठां मध्यमां विद्धि द्विगुणा त्रिगुणा वरा।
हैमराजतताम्री सा महार्हमणिचर्चिता॥
हेमोत्था वरदा कार्या सर्वकामप्रसाधिका।
राजती त्वायुरारोग्यं ताम्री सौभाग्यवर्द्धिनी॥
चित्रे विरचिता देवी गणगन्धर्वपूजिता।

समस्तरत्नप्रचिता सर्वशोभासमुज्ज्वला ॥
भावकामानुरूपेण प्रभवे स्थापयेत्सदा ।
एवं कृत्वा शुभां देवीं प्रतिष्ठां कारयेत्ततः ॥
मण्डपं चार्द्रशाखाभिः क्षीरिवृक्षसमुद्भवैः ।
दश द्वादश आरभ्य यावद्धस्तशतं भवेत् ॥
अष्टोत्कृष्टा मुनिश्रेष्ठ वेदी हस्तचतुष्टया ।
तस्य मध्यगता कार्या सप्तहस्तगताऽपि वा ॥
ईशाने पूर्वभागे च सिध्यर्थं मनसा प्रिये ।
देवीगृहं प्रकर्त्तव्यं सर्वलक्षणलक्षितम् ॥
एकादशकरं कार्यं यावद्धस्तशतं च वा ।
विवृद्ध्या क्रमशो वत्स अष्टोत्कृष्टं विधीयते ॥
सर्वतोभद्रविन्यासं सारस्तम्भमथापि वा ।
विजयाख्यं जयाख्यं वा वासवाष्टकभूषितम् ॥
वासवाष्टकेति, इन्द्राद्यष्टलोकपालप्रतिमाभिः सुशोभितम्
वेद्याः शोभाकपाटाढ्यं मत्तवारणशोभितम् ।
अनेकचित्रपत्राढ्यं पद्मस्वस्तिकमण्डितम् ॥
शङ्खोत्पलकृतापीडं हंसबर्हिणचर्चितम् ।
एवंविधं महासौधं देव्यर्थे कारयेद्बुधः ॥
तस्मिन् प्रतिष्ठयेद्देवीं वेदीस्तम्भैः समैः कृतैः ।
पञ्चोच्छ्रये कराः कार्याः सपादः क्षितिगः करः ॥
पादोनश्रेष्ठकोच्छ्रायः पूर्वद्वारसमोऽपि वा ।
निष्पादिता यदा देवी स्तम्भतोरणभूषिता ॥
तदा मण्डपविन्यासे तोरणं परिकल्पयेत् ।
सर्वकामसमृद्ध्यर्थमिषो मासः प्रकीर्त्तितः ॥
चालनं स्थापनं वापि पुनः संस्कारमेव वा ।

तस्मिन् देव्याः प्रकर्त्तव्यं महार्हफलकाङ्क्षिभिः ॥
स्वल्पबीजं महालाभं स्वल्पे काले ह्यवाप्नुयात् ।
अथातः सम्प्रवक्ष्यामि शुभतोरणलक्षणम् ॥
सर्वासां येन देवीनां यजनाय भविष्यति ।
ऋजुव्रणैश्च निष्णातैर्वेदीस्तम्भैः शुभैः समैः ॥
कर्त्तव्यं तत्र देवीनां तोरणं विस्तरो भवेत् ।
हस्तो भूमिगतः कार्यो दृश्यं हस्तचतुष्टयम् ॥
एतेन पञ्चहस्तमुक्तम् ।
न्यग्रोधोदुम्बराऽश्वत्थप्लक्षाः पूर्वादिषु क्रमात् ॥
सर्वेषां शिरसि स्थाप्यं त्रिशूलं लाञ्छनं शुभम् ।
दर्भचीवरवस्त्राढ्यं स्रङ्मालागन्धचर्च्चितम् ॥
विजयेति पदोच्चारात् तोरणं सन्निधापयेत् ।
हरिचन्दनसङ्काशान् सुवस्त्रोज्ज्वलदर्शितान् ॥
धूम्रशुक्लशिरीषाभान् पीतवस्त्रविचित्रितान् ।
बहुरूपसुरूपांश्च देवाङ्कानुच्छ्रयेत् ध्वजान् ॥
इन्द्रादिलोकपालानां मध्ये छत्रं सुशोभनम् ।
संवृतं प्रवरं श्वेतं वृषस्वस्तिकलांछितम् ॥
चतुर्हस्तप्रमाणास्ताः पताका हस्तविस्तराः ।
ऋजुनिर्व्रणवंशैश्च उच्छ्रयेद्विजयेति च ॥
पदं देव्याः समुच्चार्य यत्तद्वै सर्वकामितम् ।
गजसिंहकृतैः सर्वैः कलशैर्बाहुसंस्थितैः ॥
पञ्चवल्कैः समैश्छन्नैः पञ्चरङ्गप्रकारकैः ।
छन्नैश्च कटकैः शुभ्रैश्चित्रबर्हिशुकादिभिः ॥
वस्त्ररत्नविशेषैश्च भूषयेद्देववेदिकाम् ।
तीर्थतोयसमुत्थाभिः सिकताभिः सुसंस्कृताम् ॥

तथा शाल्यादिचूर्णोत्थैर्मुक्तादिरजसा लिखेत् ।
पद्मरागविधानोत्थमण्डले याज्यसंमते ॥
अनेकाकृतिशोभां च दर्शयेद्देविमण्डले ।
ऐन्द्रादिकुण्डं स्रुकादिपात्रमर्घादि याज्ञिकम् ॥
फलानि पुष्पगन्धानि पत्राणि समिधोऽपि च ।
मृदुवल्कानि रत्नानि उदकानि समाहरेत् ॥
अधिवासनपूर्वं तु होमं कृत्वा दिशां बलिम् ।
दत्त्वा स्नानं पुरा कृत्वा प्रतिष्ठाविधिहोमिते ॥
गोत्रक्रमेण या देव्यः संस्थिता नृपसत्तम ।
ताः पूज्या मूलमन्त्रेण स्वनामपदपूर्विकाः ॥
प्रतिष्ठा तासु कर्त्तव्या विद्यामन्त्रैश्च षष्टिभिः ।
ऊनाधिका न कर्त्तव्या प्रमाणेन कदाचन ॥
एकाङ्गुलात् समारभ्य यावद्द्वादश चाङ्गुलम् ।
गृहे तु शोभना अर्चा धर्मकामार्थमोक्षदा ॥
सर्वमङ्गलमन्त्रैश्च आद्यानां स्थापनं भवेत् ।
पदमालेति मध्यानामन्त्यानां चर्चिकापदैः ॥
दानं गोभूहिरण्यादि येन वा प्रीयते शिवा ।
आचार्याय प्रदातव्यं द्विजातेः कन्यकासु च ॥
तत्र देयं सदा वत्स नृपबन्धुजनस्य च ।
प्रभवं वत्सरं कार्यं पीतवर्णं सुशोभनम् ॥
चन्दनेन पटे लेख्यं मधुसूदनरूपिणम् ।
तस्य पूजा प्रकर्त्तव्या यथाविभवविस्तरैः ॥
रुद्रादित्यवसून् देवान् विद्याः पितॄन्मातरस्तथा ।
नागान् यज्ञान् मनुष्यांश्च ग्रहांश्च विविधान् क्षणान् ॥
मुहूर्तांस्त्रीनृतूनब्दान् वासराणि पलानि च ।

एवं कृत्वा महायागं प्रतिष्ठापूर्वचोदितम् ॥
देवी पीठगता वत्स पूजनीया दिनेदिने ।
मन्त्रजप्यक्रियाहोमाः कर्त्तव्याः सर्वसिद्धये ॥
एकभक्तेन नक्तेन अयाचितैरुपोषणैः ।
क्षीराहारैर्घृताहारैः कन्दमूलफलाशनैः ॥
यवषष्ठिकगोधूमहविष्यान्नस्य भोजनैः ।
कर्त्तव्यं यजनं देव्याः सर्वकालं जितेन्द्रियैः ॥
अनेनैव विधानेन सर्वपापक्षयो भवेत् ॥
महापापविनाशाय इन्द्रेण कृतमादरात् ।
द्विजं वृत्रासुरं हत्वा पितॄन् हत्वा समाधिना ॥
ये पुनर्भक्तिमास्थाय सर्वकालं यजन्ति हि ।
तेषामायुः श्रियं ब्राह्मं स्वर्गे स्थानं च शाश्वतम् ॥
यावद्भूचन्द्रमादित्यास्तावत् क्रीडन्ति ते सुखम् ।
स्वर्गे विष्णुपुरे रम्ये चन्द्रार्कग्रहभूषिते ॥
आगत्य इह जायन्ते नृपा वेदार्थपारगाः ।
देवीभक्ताः सदाचाराः सुखिनो विगताधयः ॥
देहान्ते शिवसायुज्यं प्राप्नुवन्ति परां गतिम् ।
विभवे विजयां देवीं शूलपद्माक्षधारिणीम् ॥
वरदोद्यतसिंहस्थां सर्वकामप्रसाधनीम् ।
कृत्वा होमादिलाभेन पूजयेद्यस्तु भावितः ॥
सर्वपीतोपचारेण सुगन्धिकुसुमादिभिः ।
होमं क्षीरघृते कुर्यात् लक्षमेकं तु तन्मनाः ॥
सर्वदा सर्वकामान् स पूर्वोक्तान् लभते मुने ।
भद्रां शुक्के समे कुर्यात भद्रासनमवस्थिताम् ।
नीलोत्पलसहस्राढ्यां शूलसूत्राक्षधारिणीम् ॥

पुष्परागवतीं सौम्यां पूर्वोक्तविधानतः ।
क्षीराशी पूजयेद्यस्तु षडङ्गेन सुभावितः ॥
सर्वान् कामानवाप्नोति मुच्यते ब्रह्महत्यया ।
राष्ट्राणां सनृपाणां च जायते वृद्धिरुत्तमा ॥
शिवा वृषासना कार्या त्रिनेत्रा वरपाशिनी ।
वृषो धर्मः ।
डमरूरगधारी च सत्रिशूलवरान्विता ॥
जटामुकुटखण्डेन्दुर्वासुकीकृतकङ्कणा ।
प्रमोदे स्थाप्य विधिना शिवाङ्के पूजिता मुने ॥
पद्मबिल्वदधिसर्पिस्तिलहोमैर्वरप्रदा ।
जयाय यजमानस्य देशस्य च नृपस्य च ॥
शान्ता प्रजापतौ कार्या पद्मासनसमन्विता ।
अक्षसूत्रधरा देवी वरोद्यतकरा शुभा ॥
पूजिता सितगन्धाद्यैः क्षीराहाररतैर्मुने ।
आशु कामप्रदा देवी जायते नृप शान्तिदा ॥
धृतिराङ्गिरसि कार्या पद्मासनसमान्विता ।
अङ्गिरासि वर्षे ।
पद्मदर्पणधारी च सर्वाभरणभूषिता ।
स्थापिता पूर्वविधिना कामदेवाङ्कपूजिता ॥
मधुक्षीराज्यहोमेन सर्वकामफलप्रदा ।
क्षमा तु श्रीमुखे कार्या योगपट्टा तुरीयगा ॥
पद्मासनकृताधारा वरदोद्यतपाणिनी ।
शूलमेखलसंयुक्ता प्रशान्ता योगसंस्थिता ॥
सितपद्मोपचारेण सर्वकामफलप्रदा ।
भावाख्ये कारयेदृद्धिं पर्यङ्कासनसंस्थिताम् ॥

दर्पणालोकसुमनां तिलकालकभूषिताम् ।
रत्नमालाधरां देवीं वेणुवीणासदाप्रियाम् ॥
सर्वरक्तोपचारेण सर्वकामफलप्रदाम् ।
वृद्धिं युवाह्वये कुर्यात् पट्टस्योपरिसंस्थिताम् ॥
रत्नमालाधरां देवीं वीजपूरवरप्रदाम् ।
महाविभवसारेण गन्धपुष्पपवित्रकैः ॥
पूजिता संस्कृता वत्स सर्वकामफलप्रदा ।
धात्राख्ये तून्नतिं कुर्यात्सर्वलक्षणलक्षिताम् ॥
वीणावादनशीलां च सर्वाभरणभूषिताम् ।
कुङ्कुमागुरुकर्पूरगन्धपुष्पैश्च पूजिताम् ॥
सितकुङ्कुमहोमेन आयुरारोग्यपुष्टिदा ।
सिद्धिरीश्वरे कर्त्तव्या सिद्धार्थकवरप्रदा ॥
ईश्वरे वर्षे ।
सितचन्दनगन्धाढ्या सितपङ्कजभूषिता ।
दण्डासनास्थिता देवी प्रतीहार्योपशोभिता ॥
क्षीराज्यखण्डहोमेन आयुरारोग्यवृद्धिदा ।
बहुधान्ये समे तुष्टिः कलशोपरिसंस्थिता ॥
योगपट्टोत्तरासङ्गा मृगचर्मसमावृता ।
पाशाङ्कुशकरा देवी पद्मस्वास्तिकधारिणी ॥
मदिरौदनगन्धाढ्या महार्हमणिभूषिता ।
सर्वपीतोपहारेण घृतहोमेन सिद्धिदा ॥
प्रमाथिनि समे पुष्टिर्नवयौवनदर्पिता ।
खड्गहस्ता महारूपा दण्डमुद्गरधारिणी ॥
अश्वारूढा महादेवी काश्मीरागुरुचर्चिता ।
बलिमाल्योपहारेण मधुहोमेन सिद्धिदा ॥

श्रीश्चापि विक्रमे कार्या पद्मासनसमास्थिता ।
पद्मश्रीफलधारी च करिभिः कलशान्वितैः ॥
स्नाप्यमाना महादेवी सर्वाभरणभूषिता ।
कुङ्कुमागुरुहोमेन सर्वभोगवरप्रदा ॥
वृषे तुमा प्रकर्त्तव्या पद्मस्योपरिसंस्थिता ।
योगपट्टोत्तरासङ्गा मृगचर्मसमन्विता ॥
ध्यानधारणसन्ताननिरुद्धनियमास्थिता ।
कमण्डलुसमूत्राक्षवरदोद्यतपाणिनी ॥

कमण्डल्विति कमण्डलुपाणिः सूत्राक्षपाणिः उद्यतपाणिरुभयत इत्यर्थः ।

ग्रहमालाविराजन्ती जयाद्यैः परिवारिता ॥
यन्त्रकुण्डलधारी च शिवार्चनरतासदा ।
गन्धमाल्योपहारेण चन्दनागुरुधूपिता ॥
कर्पूरागुरुहोमेन सर्वकामफलप्रदा ।
चित्रभानौ समे दीप्तिश्चन्द्रासनमवस्थिता ॥
किरणोज्ज्वलधारी च सिंहचर्मसमन्विता ।
रक्तगन्धोपहारेण सर्वभावप्रपूजिता ॥
रक्तचन्दनहोमेन घृतमिश्रेण सिद्धिदा ।
सुभानौ कारयेत्कान्तिं नीलोत्पलमवस्थिताम् ॥
सर्वाभरणभूषाङ्गीं कपालोत्पलधारिणीम् ।
जातीमाल्यधरां देवीं मदकर्पूरचर्चिताम् ॥
पूजिता भावयोगेन जातीहोमाद्वरप्रदा ।
जाती जातीपुष्पम् ।
जया तारणनाम्नि स्याच्छङ्खपुस्तकधारिणी ।
पर्यङ्कोदरसंस्था तु पीतवर्णा सुरार्चिता ॥

पारिजातकपुष्पाढ्या यक्षगन्धानुलेपना।
नागकेसरहोमेन यथेष्टफलदायिनी॥
पार्थिवे कारयेल्लक्ष्मीं पद्मगर्भव्यवस्थिताम्।
पद्मपूरकहस्तां च महार्हमणिभूषिताम्॥
श्यामाङ्गीं गन्धधूपाढ्यां कस्तूर्य्यादिभिरर्चिताम्।
पूजितामुपहारेण घृतहोमाद्वरप्रदाम्॥
व्यये श्वरी प्रकर्त्तव्या वृषयुग्मव्यवस्थिता।
जटामुकुटभारेन्दुत्रिशूलोरगभूषणा॥
मणिमौक्तिकशोभाढ्या सितचन्दनचर्चिता।
पूजिता कुसुमैर्गन्धैः सर्वकामप्रदायिका॥
एताश्चोत्तमभागस्थाः पूजिताः संस्तुताः शिवाः।
सर्वकामप्रदा देव्यो नृपराष्ट्रविवर्द्धनाः।
उत्तमभागस्थाः शिरसिस्थाः।
सर्वासां पायसं दद्यादुपहारानुलेपनम्॥
चन्दनागुरुकर्पूरबिल्वपत्रादिपूजनम्।
होमः क्षीरघृतैः शस्तास्तिलक्षौद्रसमन्वितैः॥
जितद्वन्द्वेन कर्त्तव्यः क्षीरपायसभोजिना।
सर्वलोकोपकाराय आत्मनश्च शुभाय च॥
सर्वपापविशुद्ध्यर्थं सर्वाभ्युदयहेतुकम्।
देवीनां पूजनं शस्तं संवत्सरभयापहम्॥
ब्राह्मी हंसासना कार्या मुञ्जमेखलभूषिता।
चतुर्वक्त्रा सकूर्चला दण्डकाष्ठकमण्डलुः॥
अक्षसूत्रधरा देवी स्रुवहस्ताक्षधारिणी।
योगपट्टकहस्ताङ्गी वेदोद्गीते च मानसा॥
कृत्वा प्रतिष्ठयेद्यस्तु सर्वजिद्वत्सरे शुभे।

पूर्वोक्तेन विधानेन सर्वमङ्गलमङ्गला ॥
स्थापने यो विधिः प्रोक्तः सोऽप्यत्रैव प्रकीर्त्तितः ।
होमजप्यबलिं गन्धशालिषष्टिकमोदनम् ॥
पायसं दधिभक्तं च लड्डुकान् पूपकांस्तथा ।
ध्वजमालोपहारं च कुङ्कुमागुरुलेपनम् ॥
मणिमौक्तिकदानानि दत्त्वा देवीं निवेशयेत् ।
सर्वान् कामानवाप्नोति मुच्यते सर्वपातकैः ॥
अश्वमेधसमं पुण्यं लभते नात्र संशयः ।
क्षेमारोग्यं सुभिक्षं च तस्मिन् देशे प्रजायते ॥
यत्रेयं क्रियते पूजा ब्राह्मीमुद्दिश्य मानवैः ।
त्वाष्ट्रं युगं प्रकर्त्तव्यं सूर्यरूपं सुतेजसम् ॥
गोब्राह्मणनृपाणां च यजमानसुखावहम् ।
प्रजावती प्रकर्त्तव्या सर्वधारिणि वत्सरे ॥
शूलशृङ्गधरा देवी सर्वाभरणभूषिता ।
रक्तगन्धानुलिप्ताङ्गी सर्वशत्रुनिबर्हिणी ॥
यस्तु पूजयते भक्त्या स लभेदीप्सितं फलम् ।
शाक्री विरोधिवर्षे स्यात् वज्रहस्ता गजे स्थिता ॥
सुरूपाऽङ्कुशहस्ता च हारकेयूरभूषिता ।
सर्वगन्धर्वसंयुक्ता सिद्धचारणसेविता ॥
महाविभवसारेण पूजनीया नृपोत्तमैः ।
वस्त्रालङ्कारगन्धादिपुष्पदीपपवित्रकान् ॥
दद्याद्रक्तोपहारं तु सर्वक्षत्रविवृद्धये ।
गजाह्वं गुग्गुलं होमं क्षीरसर्पिःपरिप्लुतम् ॥
लक्षकं हूयमानस्य सर्वान् कामान् प्रयच्छति ।
आयुरारोग्यमैश्वर्यं ददाति त्रिदशेश्वरी ॥

अजिता विकृतौ कार्या मकरासनसंस्थिता ।
पाशाङ्कुशधरा देवी रूपवैभवविस्तरा ॥
जातिकाशोकपुष्पैश्च पूजनीया शुभावहैः ।
होम एलात्वचं कुष्ठं पयो दधि च सिद्धिदम् ॥
खरेऽपराजिता देवी सिंहचारुमहासना ।
पिनाकेषुकरा कार्या खड्गखेटकधारिणी ॥
त्रिनेत्रा जूटभालेन्दुर्वासुकीकृतकङ्कणा ।
कृत्वा सर्वोपहारं तु प्रतिष्ठाविधिचोदितम् ॥
स्थापनं कारयेत्तात ततः पूजा पुरातनी ।
महाविभवसारेण होमश्चन्दनकुङ्कुमैः ॥
दधि भक्तं घृतं क्षीरं नैवेद्यं द्विजतर्पणम् ।
कन्याभोजनपूजा च सर्वकामफलप्रदा ॥
जयन्ती नन्दने कार्या कुन्तशूलासिधारिणी ।
खेटकव्यग्रहस्ता च पूजनीया सुभावितैः ॥
एलाकुङ्कुमकर्पूरगन्धलड्डुकपूपकैः ।
प्रयच्छति शुभान् कामान् तगरोशीरदानतः ॥
विजये मानसी कार्या स्यन्दने या व्यवस्थिता
घण्टामुकुरधारी च वज्राङ्कुशकरोद्यता ॥
सर्वाभरणभूषाङ्गी सर्वदेवनमस्कृता ।
चम्पकोशीरपुन्नागपूजनात्सर्वकामदा ॥
माया जये तु कर्त्तव्या बहुरूपा सुशोभना ।
पाशाङ्कुशधरा देवी मालाचामरधारिणी ॥
श्यामवर्णा सुरूपाढ्या पीतवस्त्रपरिच्छदा ।
सहकारकृतापीडा मदकुङ्कुमचर्चिता ॥
हेमरत्नमणीवज्रैः पूजिता विधिना मुने ।

क्षीरपायसदानेन तद्धोमाच्च सिद्धिदा ॥
दितिं दैत्यनुतां देवीं मन्मथे पूजयेन्मुने ।
दण्डासनस्थितां भद्रां सर्वाभरणभूषिताम् ॥
फलनीलोत्पलधरामुत्सङ्गे शिशुभूषिताम् ।
फलगन्धोपहारेण हवनाच्च शुभावहाम् ॥
श्वेतां दुर्मुखसंज्ञाऽब्दे श्वेतपङ्कजभूषिताम् ।
दण्डाक्षसूत्रधारीं च प्रेतस्थां योगसंस्थिताम् ॥
जपहोमार्चने दाने गन्धक्षीरफलप्रियाम् ।
रसानिर्यासहोमेन दध्यन्नशुभदायिकाम् ॥
विमोहिनी हेमलम्बे पीतवर्णा मृगासना ।
ध्वजमालाक्षधारी च वेणुहस्ता ध्वनिप्रिया ॥
सुरूपा यौवनोन्मत्ता हारकेयूरभूषिता ।
मधुपायसहोमेन पूजया च शुभावहा ॥
विलम्बे कारयेद्देवीं शरण्यां वरदाभयाम् ।
सिंहासनसमासीनामातपत्रविभूषिताम् ॥
सुवासचन्दनोशीरचर्चितां शुभवाससम् ।
कुङ्कुमागुरुहोमेन चिन्तितार्थप्रसाधिनीम् ॥
कौशिकीं कौशिकारूढां कृष्णवर्णां कपालिनीम् ।
कौशिकारूढां उलूकस्थाम् ।
कर्त्तिकामुण्डहस्तां च त्रिशूलकरभास्वराम् ।
वलिमांसौदनाहारां कृष्णगन्धस्रजः प्रियाम् ॥
तुरुष्कागुरुहोमेन विकारिभयनाशिनीम् ।
गौरीं शङ्खेन्दुवर्णाभां शार्वरीवत्सरे शुभाम् ॥
वृषपद्मासनासीनां साक्षसूत्रकमण्डलुम् ।
वरदोद्यतरूपाढ्यां सर्वमाल्यफलप्रियाम् ॥

तगरागुरुहोमेन वरराष्ट्रविवर्धिनीम्।
प्लवाख्ये विमला कार्या शुद्धहारेन्दुवर्चसा ॥
मुक्ताक्षसूत्रधारी च कमण्डलुकरा वरा।
गजासनसमारूढा श्वेतमाल्याम्बराप्रिया ॥
दधिक्षीरौदनाहारा कर्पूरमदचर्चिता।
सितपङ्कजहोमेन राष्ट्रायुर्धनवार्धिनी ॥
शुभकृद्वत्सरे कार्या रतिरुज्वलभूषणा।
मृगासना शुभा देवी समस्ताभरणैर्युता ॥
वीणावादनहस्ता च मदकर्पूरचर्चिता।
अशोकत्रजहोमेन सर्वकामफलप्रदा ॥
शुभकृल्लालसा कार्या करिणीपृष्ठसंस्थिता।
स्रजोदर्पणहस्ता च सितचन्दनचर्चिता ॥
हारकेयूरशोभाढ्या सुरक्तवसनोज्वला।
पर्प्पटौदनपूजायां जपहोमेन सिद्धिदा ॥
क्रोधे अरुन्धती देवी सितवासा वृतस्थिता।
पद्मपुष्पोदककरा चन्दनेन समन्विता ॥
होमाध्ययनशीला च फलकन्दरसाप्रिया।
उशीरागुरुहोमेन संवत्सरभयापहा ॥
विश्वावसौ क्रिया कार्या यज्ञाङ्गकृतभूषणा।
यज्ञाङ्गं स्रुवादि।
स्रुवमेखलधारी च शुक्लवस्त्रा सितोत्पला।
पट्टोपरि समासीनां पूजयेद्यस्तु भावितः ॥
चम्पकोशीरपुन्नागैः स लभेतेप्सितं फलम्।
दुर्गा दिग्गजमत्तारिपृष्ठगाऽसुरसूदनी।
चापासिशरपीनाकधारिणी महिषापहा ॥

आत्मनोऽग्रे महाकायैस्तद्दूतैः परिवारिता ।
रक्तं स्रवद्भिर्नेत्रैश्च तर्जिता सुमहाबलैः ॥
वेष्टिता नागपाशेन केचिच्छिन्ना गतासवः ।
देवीशूलगताः कार्या सर्वे ते संमुखाननाः ॥
पादः पद्मासने चैक एको हरिनिवेशितः ।
एवं विधेन रूपेण पराभवसमे कृताम् ॥
पूजयेत्सततं यस्तु गन्धपुष्पाक्षतादिभिः ।
हेमराजतपत्रैश्च क्षीरपायसभोजनैः ॥
स लभेदीप्सितं कार्यं त्रिगुणा जीवते समाः ।
अनुक्तानां तु देवीनां होमं क्षीरघृतं स्मृतम् ॥
आयुधं खड्गशूलं च नैवेद्यं घृतपायसम् ।
काली प्लवङ्गनामाख्ये दण्डपाशोद्यता भवेत् ॥
कृष्णगन्धोपहारेण पूजिता शुभदायिका ।
रौद्री तु कीलके कार्या कर्त्तिकामुण्डधारिणी ॥
रक्तपूजोपहारेण पूजिताऽभयदायिका ।
सौम्ये कपालिनी कार्या खड्गखट्वाङ्गधारिणी ॥
पीतरक्तोपहारेण होमेन च वरप्रदा ।
साधारणे सघण्टा च घण्टाकर्णा त्रिशूलिनी ॥
रक्तपुष्पोपहारेण सर्वान् कामान् प्रयच्छति ।
विरोधकृन्मयूरिका मयूरासनसंस्थिता ॥
पाशशक्तिकरा देवी त्रिनेत्रा अलकोज्ज्वला ।
गन्धपुष्पोपहारेण चन्दनागुरुचर्चिता ।
पूजिता हविर्होमेन सर्वान् कामान् प्रयच्छति ॥
परिधावी यजेद्देवीं बहुरूपां वरामनाम् ।
खड्गशूलधरा वत्स सर्वाभरणभूषिता ॥

शुक्लरक्तासितैर्वस्त्रैर्गन्धपुष्पपवित्रकैः ।
पूजिता सितहोमेन बलिदानेन वृद्धिदा ॥
प्रमादिनि सुरूपा च हारकेयूरभूषिता ।
दण्डासनसमारूढा पद्मस्वस्तिकधारिणी ॥
गन्धमालास्रजापीता सर्वगन्धोपचार्चिता ।
बलिमाल्योपहारेण हवनेन शुभप्रदा ॥
आनन्दाख्ये त्रिनेत्रां तु शूलपाट्टिशधारिणीम् ।
जटोरगशरच्चन्द्रभूषितां शिवरूपिणीम् ।
गन्धमाल्योपहारेण पूजिता सितपङ्कजैः ॥
प्रयच्छति शुभान् कामान् जपहोमेन शाश्वतान् ।
रिपुहा राक्षसे कार्या वज्रचक्रधनुर्धरा ॥
पूजिता गन्धमाल्यैश्च बलिहोमेन सिद्धिदा ।
अनले अम्बिकादेवीं शूलसूत्राक्षधारणीम् ॥
रक्तबल्युपहारेण पूजयेच्चन्दनैः शुभाम् ।
माहेश्वरी वृषारूढा त्रिनेत्रा शूलधारिणी ॥
वीणावादनशीला च हारकेयूरभूषणा ।
चन्दनागुरुदिग्धाङ्गी जातीचम्पकपूजिता ॥
बलिशोमालकाहारा हवनात् पिङ्गले शुभा ।
कालयुक्ते कुमारी तु मयूरासनशक्तिभृत् ॥
त्रिदण्डी बालरूपा च रक्तमाल्या सकुक्कुटा ।
रक्तवासनगन्धा च क्षौद्रमांसासवप्रिया ॥
पूजिता विधिवत् देवी हवनाच्च नृणां शुभा ।
सिद्धार्थे वैष्णवी कार्या शङ्खचक्रगरुत्मगा ॥
वनमालाकृतापीडा पीतवस्त्रा सुशोभना ।
पूजिता गन्धपुष्पाद्यैर्जातीचम्पकचन्दनैः ॥

बलिलड्डुकदानेन सर्पिषा हवने शुभा ।
रौद्रे सुरवराध्यक्षा गजराजोपरिस्थिता ॥
वज्राङ्कुशधरा देवी हारकेयूरभूषिता ।
पीतगन्धोपहारेण बलिमाल्यनिवेदनैः ॥
कुङ्कुमागुरुकर्पूरैर्हवनेन वरप्रदा ।
वैवस्वती प्रकर्त्तव्या दुर्मतौ महिषोपरि ॥
शूकरास्या कपालेन पिबन्ती दण्डधारिणी ।
रक्तमाल्यकृतापीडा गन्धासवसुपूजिता ॥
बलिहोमाज्यदानेन सर्वकामफलप्रदा ।
दुन्दुभ्याख्ये अघोरा च करालवदनोज्ज्वला ॥
सिंहचर्मधरा देवी रुरुचर्मपरिच्छदा ।
मुण्डमालाकपालाढ्या शूलहस्ता बलिप्रिया ॥
सर्वगन्धोपहारेण यवहोमेन सिद्धिदा ।
कराली रुधिरोद्गारे ऊर्ध्वकेशी भयानका ॥
मुण्डमालाधरा देवी कर्त्तिकापिशिताशना ।
सर्वकृष्णोपहारेण मांसासवसुपूजिता ॥
बिल्वागुरुघृतक्षौद्रहवनाच्छुभदायिका ।
रक्ताक्षे विकटा कार्या उष्ट्रारूढा महाभुजा ॥
पाशदण्डकरालास्या सर्वसत्त्वभयङ्करा ।
कृष्णगन्धानुलिप्ताङ्गी वृश्चिकैः शलभैर्युता ॥
रसोनासवमत्स्यादा जपाकुसुमचर्चिता ।
तैलाभ्यक्ता महाकर्णा मत्स्यमांसबलिप्रिया ॥
जपहोमार्चनाद्देवी सर्वाशुभनिवारिणी ।
क्रोधने त्वदितिः कार्या देवमाता बहुप्रजा ॥
भद्रासनसमारूढा मातृभिर्बालकैर्वृता ।

फलपुष्पोपहस्ता च शिशुलालनकोपना ॥
चतुर्वर्णधरा देवी क्षीराहारस्य सिद्धिदा ।
पूजिता पङ्कजोशीरैश्चन्दनागुरुचर्चिता ॥
कङ्कोलफलहोमाच्च घृतक्षीराशना शुभा ।
क्षये तु चर्चिका कार्या प्रेतारूढा महाभुजा ॥
ऊर्ध्वकेशोत्कटाक्षी च निर्मांसस्नायुबन्धना ।
नागाभरणभूषाङ्गी करालवदनोज्ज्वला ॥
खड्गखट्वाङ्गधारी च कर्त्तिकामुण्डधारिणी ।
मातृणां प्रवरा देवी सर्वदेवनमस्कृता ॥
हेमजा रत्नजा वार्क्षी शैलजा चित्रजाऽपिवा ।
स्थाप्या पूर्वविधानेन सर्वकामप्रसाधिनी ॥
मातृचक्राश्रितः कार्यो वीणाहस्तः सुरेश्वरः ।
तुम्बुरुर्भैरवो वाथ अन्ते विघ्नेश्वरो भवेत् ॥
गजवक्त्रो बृहत्कायो लम्बघोणो महोदरः ।
परशुं मोदकं वामे करे याम्येऽक्षसूत्रकम् ॥
वरदं च समालम्ब्य वामार्द्धे युवतीं तथा ।
सुरूपां शोभनाकारां रतिनाम्नीं गजानने ॥
सर्वाभरणशोभादि उभयोरपि कारयेत् ।
विघ्नेशे विघ्नमातां तु उपवीतं महोरगम् ॥
यथा देवी सुसंवीता मणिकङ्कणचर्चिता ।
हारकेयूरशोभाभिस्तिलकालकभूषिता ॥
कृत्वा तृतीयवर्णेन मण्डलेन गणेश्वरम् ।
वह्निमावाहयेद्देवीमोङ्कारादिनमोऽन्तिकाम् ॥
एतान् वर्णान् जपे होमे प्रतिष्ठाहोमकर्माणि ।
मन्त्रा देवाय देव्याश्च स्वाहान्ते होमयेन्मुने ॥

यासां वाहनहोमाज्यबलिवायनकल्पना ।
कथिता वत्स देवीनां तासां शृणु यथा विधिः ॥
वृषासना प्रकर्त्तव्या त्रिशूलाम्बरधारिणी ।
सचन्दनं तु कर्त्तव्यं बलिगन्धमितस्ततः ॥
होमे क्षीरघृतं क्षौद्रं तिला यवफलानि च ।
सामान्यानि समस्तानां विद्यापट्कं समुद्रकम् ॥
ऋतुषट्कं प्रकर्त्तव्यं वसन्तादि यथाविधि ।
विद्यापट्कं षडङ्गानि । समुद्रं मुद्राषट्कसहितम् ।
बाला युवा तथा मध्या कृष्णानवरतोज्ज्वला ।
गौरी वृद्धा शिशुश्चेति स्त्रीयुग्मा ऋतवो मताः ॥
एकादश प्रकर्त्तव्याः सर्वे रुद्रास्त्रिशूलिनः ।
जटाभारेन्दुचर्माङ्का वासुकीकृतकङ्कणाः ॥
त्रिनेत्राः सितवर्णाभाः सर्वदेवनमस्कृताः ।
पूजिताः संस्तुताश्चापि सर्वकामफलप्रदाः ॥
महालक्ष्मीः प्रकर्त्तव्या नृत्यमाना कपालिनी ।
कर्तिकामुण्डखट्वाङ्गी नृमालाम्बुजधारिणी ॥
कूष्माण्डयाना प्रेतस्था दन्तुरा बर्व्वरा शिवा ।
पूजिता च नभोमासे सर्वकामप्रदायिका ॥
विष्णुः सूर्यो भवेन्मेषे युगं विष्णुः प्रकीर्त्तितः ।
सर्वाभरणशोभाढ्यं रक्तमाल्याम्बरप्रियम् ॥
वह्नौ सम्पूजयेद्देवं कालयुक्तेन भावितः ।
सर्वान् कामानवाप्नोति युगपीडां व्यपोहति ॥
दानं होमाज्यगोभूमिं दत्त्वा गोमेधमाप्नुयात् ।
वृषे शक्रो भवेत्सूर्यः सुरेज्यो युग उच्यते ॥
यष्टव्यो मणिवदूर्यगन्धपुष्पपवित्रकैः ।

सद्वृषाऽत्र तु गौर्देया दक्षिणा कनकं तथा ॥
अश्वत्थसमिधां होमाद्युगपीडां व्यपोहति ।
अर्यमा मिथुने कार्यः शुक्रश्चेति युगं यजेत् ॥
रक्तपीतोपहारेण हेमवस्त्रफलासनैः ।
यष्टा गावः प्रदातव्या युगपीडानिवारणाः ॥
होमो बिल्वतिलाज्यैश्च आशु सम्पत्प्रदायकः ।
धाता कर्कटे यष्टव्यो युगं वह्निं प्रपूजयेत् ॥
सितरक्तोपचारेण गन्धपुष्पपवित्रकैः ।
विद्रुमोत्पलवैदूर्यहेमचारुकृतासनैः ॥
युगसूर्यौ प्रकर्त्तव्यौ सर्वकामफलप्रदौ ।
कुङ्कुमागुरुकर्पूररक्तपुष्पोपशोभितौ ॥
आद्यन्तवर्णमन्त्रेण युगपीडाप्रतीहरौ ।
सिंहे मित्रोऽपि यष्टव्यो युगं त्वाष्ट्रं प्रपूजयेत् ॥
हेमेन्द्रनीलजौ कार्यौ युगसूर्यौ सुशोभनौ ।
मालतीबकुलाशोककुरण्टकुसुमाक्षतैः ॥
तौ पद्मस्वस्तिककरौ पूजितौ सुफलप्रदौ ।
यष्टव्यो वरुणः कन्ये अहिर्बुध्न्यं युगं तथा ।
पुष्परागमयं सूर्यं युगं मौक्तिकजं कुरु ॥
शतपत्रिकायाः पुष्पैः कर्पूरागुरुचार्चितौ ।
दत्त्वा मौक्तिकदानं च युगपीडां व्यपोहति ॥
भवतो युगसूर्यौ तु आयुरारोग्यवृद्धिदौ ।
विवस्वान् सप्तमे कार्यः पितृ चेति युगं तथा ॥
सप्तमे तुलायाम् ।
शङ्खस्फटिकजौ देवौ राजतौ परिकल्पितौ ॥
गन्धपुष्पोपहारेण वस्त्राभरणभूषितौ ।

जपहोमौ प्रकर्त्तव्यौ सवर्णेन सितेन च ॥
सर्वान् कामानवाप्नोति युगपीडां निवारयेत् ।
वृश्चिके सविता कार्यो विश्वेति युगमुच्यते ॥
तौ वज्रनीलसम्भूतौ हेमधारासुसंश्रितौ ।
रक्तपीतारुणश्वेतवस्त्रसंवीतचर्चितौ ॥
कृत्वा कुङ्कुमगन्धाढ्यौ पङ्कजोत्पलधारिणौ ।
होमं देवदलं क्षीरं तिलान्नेन विमिश्रितम् ॥
होमान्ते दक्षिणा देया गावो वस्त्रं मणिं ध्रुवम् ।
युगसूर्येश्वरौ पूज्यौ पञ्चमात्रिचतुर्थकैः ॥
सर्वान् कामानवाप्नोति युगपीडा विनश्यति ।
पूषा धनुषि यष्टव्यो युगं सौम्यं विधीयते ॥
महानीलभवः सूर्यः शुक्तिकायास्तथा युगम् ।
युगसूर्यौ तु हेमस्थौ सितकुङ्कुमचर्चितौ ॥
वस्त्रपुष्पाक्षततोयधूपनैवेद्यपूजितौ ।
द्विराज्यं प्रथमेऽन्ते च सर्वकामफलप्रदम् ॥
युगपीडाविनाशाय यष्टव्यौ बलिसंयुतौ ।
यष्टव्यो मकरे त्वष्टा इन्द्राग्नियुगसंयुतः ॥
कुरुविन्देन्द्रनीलोत्थौ पट्टोपरि सुसंस्थितौ ।
चन्दनागुरुकर्पूररोचनामदचर्चितौ ॥
मदः कस्तूरिका ।
रक्तवस्त्रसुपुष्पाढ्यौ महार्हमणिभूषितौ ।
दत्त्वा क्षीरोदनं धूपं तथा निर्याससम्भवम् ॥
होमं कृत्वा मधुसर्पिः समिधारक्तचन्दनैः ।
ततः क्षमापयेदेतौ युगरश्मिदिवाकरौ ॥
मण्डलान्तेन मन्त्रेण व्योममुद्रायुतेन च ।

द्विजानां दक्षिणां दत्त्वा सर्वयज्ञफलं लभेत् ॥
युगपीडा न जायेत तस्मिन् देशे महामुने ।
यत्राऽयं विधिमाश्रित्य युगे संपूज्यते रविः ॥
कुम्भेऽश्विनौ च यष्टव्यौ युगमाश्विनमेव च ।
हेमपट्टकृतौ दिव्यौ युगसूर्यौ सराजतौ ॥
अंशपट्टपरिच्छन्नौ कर्पूरमदचार्चितौ ।
कुब्जकुन्दकुरुण्डानां पुष्पाणां बहुधालयौ ॥
दत्त्वा देवदलं धूपं सतुरुष्कं रसान्वितम् ।
पश्चान्तेन तु मन्त्रेण होमं कृत्वा क्षमापयेत् ॥
द्विजानां दक्षिणां दत्त्वा वाजपेयफलं लभेत् ।
ब्रह्महत्यां व्यपोहेत युगपूजनतो नरः ॥
इन्द्राय कथितं चेदं वृत्राख्यस्योपशान्तये ।
मीने भगोऽतितेजाथो युगश्चापि भगं तथा ।
यष्टव्यौ युगसूर्यौ तु पद्मेन्द्रमणिनिर्मितौ ॥
हेमराजतपात्रस्थौ जातीपुष्पार्चितौ सदा ।
करवीरकृतापीडौ कर्णिकारस्रगन्वितौ ॥
रक्तवस्त्रपरिच्छन्नौ धूपागुरुसुगन्धिनौ ॥
दधिदध्योदनक्षीरबलिपायसभोजनौ ।
हुत्वा चादित्यदेवेन युगानां हृदयेन तु ।
दत्त्वा दानं द्विजातीनां हैमं तु सितवाससी ॥
ततः क्षमापयेदेतावश्वमेधफलं लभेत् ।
ब्रह्महत्यासुरापानपितृहत्याविशोधनौ ॥
तौ युगार्कौ प्रयष्टव्यौ मूर्त्तिसंस्थौ सुशोभनौ ।
युगपीडाविनाशाय सर्वकामफलप्रदौ ।
माघादिसूर्यविष्णुं च नारायणयुगान्वितम् ॥

यष्ट्वा ब्रह्मोक्तन्यायेन प्रतिमामण्डलेऽपि वा ।
मण्डलं पूज्यते यत्र मुच्यते कर्मणोऽशुभात् ।
संवत्सरभयाद्धोरान्मण्डलाद्वाथ मण्डलम् ॥
अलं पर्याप्तिभूषायां मण्डले नैव विद्यते ।
मरणाभावनाच्छिन्नरञ्जनाद्वा रजो मतम् ॥
समसूत्रकृते क्षेत्रे प्रागुदक्प्रवणे भुवि ।
मण्डलं लक्षणोपेतं कार्यं तत्र महामुने ॥
प्रागुत्तरे च मध्ये वा यथालाभमनाविले ।
सूत्रेण रेखा शुद्धेतान्यस्यां वा दिशि निर्गतम् ॥
हस्तमानप्रमाणेन तत्रस्थं सुपरीक्षितम् ।
वर्णश्वेतादिरूपेण कुट्टिमे समदर्पणे ॥
तस्मिन्मानविभागे वै शुद्धं भागत्रयं कुरु ।
कर्णिकाकेसरान् भागे सर्वपत्राणि लेखयेत् ॥
दलाग्राण्यवरे भागे पञ्चवर्णं ध्वजे तथा ।
त्रिवर्णमेकवर्णं वा द्वारं पद्मसमं भवेत् ॥
चतुरेककरा प्राच्यां वीथी यत्र विहङ्गमैः ।
नवनाभौ वसेत्पद्मं नीलोत्पलदलोपमैः ॥
शक्रादिमथ वज्रादि लिखेद्बिन्दुगताऽपि वा ।
मुक्ताफलप्रवालोत्था पद्मरागकृतोरगा ॥
सितकुङ्कुमरागैर्वा नीलैर्मरकतैरपि ।
शालिपिष्टकचूर्णैर्वा यवगोधूमजाऽथ वा ॥
कौसुम्भरजनीभृङ्गपत्रचूर्णकृता शुभा ।
यवाङ्गुलोच्छ्रया रेखा समा पुञ्जविवर्जिता ॥
सर्वशोभासमायुक्ता मण्डले परिकल्पयेत् ।
शूलाङ्कुशकरं कुर्याच्छङ्कराङ्के शिवं यजेत् ॥

पद्मस्वस्तिकनाराचखट्वाङ्के तु शिवं यजेत्।
शक्तिबर्हिणसूत्राङ्के स्कन्दं पार्श्वायुधे गणम्॥
स्रुवदण्डाक्षमालाङ्के कमण्डलुकरमजम्।
रुद्रोऽक्षमालाशूलाङ्के देव्यः स्वस्वायुधाङ्किते॥
वसवो दण्डभृङ्गारैश्चक्रशङ्खाङ्किते हरिः।
शूलव्योमासिचक्राङ्के शिवसूर्याम्बिका हरिः॥
यष्टव्याः सर्वकामेन योगभोगप्रदा मुने।
रिपुहा सिद्धिदा वत्स स्वाङ्गपञ्चकभूषिता॥
मूलमन्त्रैः स्वकैर्वापि प्रकारेणाभिपूजिता।
चन्दनागुरुकर्पूररोचनामदकुङ्कुमैः॥
गन्धपुष्पादिनिर्यासतुरुष्कनखसम्भवैः।
चम्पकोत्पलपद्मानि जातीकुब्जकमाल्लिकाः॥
बिल्वपत्राणि पुष्पाणि मरुपत्रादिपत्रिकाः।
नैवेद्यं घृतभक्तादि घृतपूर्णादिलड्डुकाः॥
बलिः शाल्योदनं क्षीरं दधिक्षौद्रविमिश्रितम्।
पद्मेन्द्रनीलवज्रादिरत्नानि बहुवाससी॥
अण्डजोद्भवभेदानि विचित्राण्याहृतानि च।
ध्वजमालावितानानि चारुरूपाणि कारयेत्॥
किङ्किणीशब्दबहुलं द्वारशोभासमन्वितम्।
कर्त्तव्यं देवतागारं विचित्रेन्दुसमप्रभम्॥

**तथा,**

दत्त्वाऽर्घं पूजनं कुर्याद्दैवज्ञो लोकपालिकाम्।
गणमातृग्रहाणां च कालादिशरदो युगान्॥
मुद्रादिदर्शनं कार्यमर्घं दत्त्वा जपादिकम्।
कृत्वा देवाय तद्दत्त्वा बलिदानं ग्रहादिषु॥

बलिर्भूतपिशाचेषु देया रक्षोगणेषु च ।
शिवादिजम्भकान्तानां नागानां घृतपायसम् ॥
कृसरं पितृदेवानां हरेर्यक्षेषु चासवम् ।
दैत्यानां मत्स्यमांसानि देवीनां पललौदनम् ॥
बलिपूजाप्रदानान्ते ततो होमं समाचरेत् ।
हस्तादिलक्षिते कुण्डे समखाते समीकृते ॥
मध्यमे चाङ्गुलं कार्यं नाभी द्वादशधा मता ।
हस्तविस्तरसामान्या राजपद्मसमोपमा ॥
चतुरङ्गुलमानेन प्रथमा मेखला भवेत् ।
एकोना द्वित्रिरूपा तु एवं कुण्डं शुभावहम् ॥
चतुरस्रं तु पूर्वादि अश्वत्थदलसन्निभम् ।
अर्द्धेन्दुमुकुटाकारं वृत्तपञ्चकमष्टधा ॥
पद्माकारं प्रकर्त्तव्यं कुण्डादीशानगोचरम् ।
सालाश्वत्थाम्रश्रीपर्णीश्रुतवैकङ्कतोद्भवम् ॥
खादिरं सह बिल्वाद्यैः स्रुवं हस्तादिदीर्घतः ।
अङ्गुष्ठपरिणाहाढ्यं दण्डकुम्भकभूषितम् ॥
पुष्करापुष्करौ द्वौ तु मध्यरेखोच्छ्रिताङ्कितम् ।
स्रुचं सार्द्धकरं कुर्याद्दण्डवृत्तं सुशोभनम् ॥
षडङ्गुलपरीणाहं भ्रमियन्त्रविनिर्मितम् ।
अङ्गुलं मूलदेशे तु ग्रन्थिः पुष्करमूलजा ॥
गण्डिका तत्तु जानीयात् त्रिभागेन तु पुष्करम्
वेदी सप्ताङ्गुला कार्या पञ्चवृत्तं प्रकल्पयेत् ॥
त्रीणि खातं समं कार्यं मध्यं कार्यं षडङ्गुलम् ।
गोकर्णाकृतिशोभाढ्यं कल्प्य साङ्गुलरन्ध्रकम् ॥
घृतनिष्क्रमणं कार्यं यवत्रयसुरेखितम् ।

एवं स्रुवस्रुचौ कार्यौ ताभ्यां होमः शुभावहः ॥
शमीगर्भोऽरणिः कार्या दैर्घ्याद्धस्तप्रमाणतः ।
वितस्तिपरिणाहाढ्या आयामे षोडशाङ्गुला ॥
वृत्तं करद्वयोपेतं दशाङ्गुलसुविस्तृतम् ।
आपीडं तत्समं कार्यं मध्ये आयामबन्धनम् ॥
आटिकां कुरु योगाढ्यं मणिवज्रायुतं समम् ।
मन्दुरामूर्द्ध्नि मन्त्रेण पूजयित्वा तु पातयेत् ॥ ?
अभावे सूर्यकान्ते च तदभावेऽम्बरीषजम् ।
सामान्यायतनागारादानयेत्ताम्रभाजने ॥
शरावे मृन्मये पात्रे कुण्डे पूजान्विते न्यसेत् ।
अग्निचक्रविधानेन सर्वकर्माणि कारयेत् ॥
हैमराजतताम्राणि काष्ठमृच्छैलजानि च ।
स्रुवादीनि च पात्राणि शुभभेदाङ्कितानि च ॥
अर्घनैवेद्यपूजार्थं बलिदाने च कल्पयेत् ॥
इष्ट्वा देवान् विधानेन होमं कृत्वा यथाविधि ।
मण्डलं दर्शयेद्वत्स शुचौ देशे उपोषिते ॥
मन्त्रपूतेन हस्तेन दत्त्वा तु शिरसि स्रजम् ।
पुष्पाणि करयोर्दत्त्वा मण्डलान्ते विनिःक्षिपेत् ॥
पतितं यत्र देवोर्द्धे तदनन्तं विदुर्मुने ।
एवं दृष्ट्वोत्थितं वत्स गत्वा वह्निं समापयेत् ॥
पूर्णाहुतिप्रदानं वा दृष्ट्वा पापात्प्रमुच्यते ।
सर्वान् कामानवाप्नोति विगताधिर्नरोत्तमः ॥
स्नातो मन्त्रार्घकुम्भाद्भिः सर्वपापैः प्रमुच्यते ।
गोहिरण्यादिवस्त्राणि रत्नवाजिगजाजकम् ॥
आचार्याय प्रदातव्यं मातॄणां तु निवेदयेत् ।

द्विजाय दक्षिणा देया कन्यानां च विशेषतः ॥
लोकपूजा प्रकर्तव्या यथार्हक्रमपूर्विका ।
दीनान्धकृपणानां च सर्वदा दानमिष्यते ॥
कृमिकीटपतङ्गेषु भूमौ दध्योदनं क्षिपेत् ।
सर्वदा सर्वभूतानां सुखं देयं सुखार्थिना ॥
स्थावरं जङ्गमं वापि चतुर्द्धात्मनि चिन्तयेत् ।
एवं युगादिभिर्देव्यो बहुभेदाः सभास्कराः ॥
यस्तु मण्डलकुण्डस्थां कृत्वा चित्रेऽथवा यजेत् ।
न स व्याध्यादिकादीनि दुःखानि क्वचिदाप्नुयात् ॥
आधिव्याधिकृता पीडा तस्मिन् देशेऽपि नो भवेत् ।
सुभिक्षं क्षेममारोग्यं गजवाजिसदोज्ज्वलम् ॥
हेमरत्नाकराकीर्णं राष्ट्रं तस्य प्रजायते ।
पर्जन्यः कालवर्षी स्यात् सस्याढ्या च वसुन्धरा ॥
यज्ञकर्मकरा विप्रा गावो भूरिपयोऽन्विताः ।
सर्वाः पतिव्रता नार्यो भृत्याः स्वामिपरायणाः ॥
नोपसर्गोऽपमृत्युर्वा तत्र देशे भवेत्क्वचित् ।
यत्रेयं सततं पूजा देवीनां क्रियते मुने ॥
इति देव्याः संवत्सरमण्डलबलिहरणादिविधानम् ।

इति दुर्गापूजा ॥

## अथ ब्रह्मणः पूजा ।

भविष्यपुराणे,

पिता यः सर्वदेवानां भूतानां च पितामहः ।
तस्मादेष सुसम्पूज्यो यतो लोकगुरुः परः ॥
सर्वे ब्रह्मसमा लोकाः सर्वे ब्रह्मणि संस्थिताः ।
तस्मात्समर्चयेद्ब्रह्म य इच्छेच्छ्रेय आत्मनः ॥

यो न पूजयते भक्त्या सुरश्रेष्ठं सुरोत्तमम् ।
न स नाकस्य राज्यस्य न स मोक्षस्य भाजनम् ॥
यस्तु पूजयते भक्त्या विरिञ्चिं कमलासनम् ।
स नाकराज्यमोक्षाणां क्षिप्रं भवति भाजनम् ॥
तस्मात्सौम्यमना भूत्वा यावज्जीवं प्रतिज्ञया ।
अर्चयेत सदा देवमापन्नोऽपि नरो नृप ॥
वरं देहपरित्यागो वरं नरकसम्भवः ।
न चैवापूज्य भुञ्जीत देवं वै पद्मसम्भवम् ॥
सदा पूजयते यस्तु वीर भक्त्या पितामहम् ।
मनुष्यचर्मणा नद्धः स वेधा नात्र संशयः ॥
नहि वेधोऽर्चनादन्यत् पुण्यमस्त्याधिकं क्वचित् ।
इति विज्ञाय यत्नेन पूजनीयः स्वयम्भवः ॥
ब्रह्माणं द्वेष्टि यो मोहात्सर्वदेवनमस्कृतम् ।
नरो नरकगामी स्यात्तस्य सम्भाषणादपि ॥

अथागारसमूहनादि ।

पश्यन् परिहरन् जन्तून् मृदुपूर्वं महीपते ।
शनैः संमार्जनं कृत्वा चान्द्रायणफलं लभेत् ॥
वस्त्रपूतेन तोयेन यः कुर्यादुपलेपनम् ।
पश्यन् परिहरन् जन्तूनग्निष्टोमफलं लभेत् ॥
नैरन्तर्येण यः कुर्यात् पक्षं संमार्जनार्चनम् ।
युगं कोटिशतं साग्रं ब्रह्मलोके महीयते ॥
तस्यान्ते च चतुर्वेदः सुरूपः प्रियदर्शनः ।
आढ्यः सर्वगुणोपेतो राजा भवति धार्मिकः ॥
कपटेनापि यः कुर्याद् ब्रह्मशालासु मानद ।
सम्मार्ज्जनादि वै कर्म सोऽपि प्राप्नोति तत्पदम् ॥

प्रतिपदादिसर्वेषु दिवसेषूत्सवेषु च ।
सर्वकालेषु पुण्येषु पौर्णमास्यां विशेषतः ॥
शङ्खभेर्यादिनिर्घोषैर्महद्भिर्गेयसंयुतैः ।
कुर्यान्नीराजनं देवे सुरज्येष्ठे चतुर्मुखे ॥
यावत्पर्वाणि विधिना कुर्यान्नीराजनं नृप ।
तावद्युगसहस्राणि ब्रह्मलोके महीयते ॥
अत्र सर्वपदं विहितकालोपलक्षकम् ।
स्नानकाले त्रिसन्ध्यं तु यः कुर्यान्नृत्यवादनम् ।
गीतं वा मुखवाद्यं वा तस्य पुण्यफलं शृणु ॥
यावन्त्यहानि कुरुते गेयनृत्यादिवादितम् ।
तावद्युगसहस्राणि ब्रह्मलोके महीयते ॥

**अथ स्नपनादिविधिः ।**

कपिलापञ्चगव्येन कुशवारियुतेन च ।
स्नापयेन्मन्त्रपूतेन ब्रह्मस्नानं हि तत्स्मृतम् ॥

अत्र—

स्नपनं सर्वदेवानां गोप्रदानसमं फलम् ।

इति सामान्यपरिभाषोक्तेर्गोप्रदानसमं फलम् । स्वर्गः फलमिति केचित् ।

कपिलापञ्चगव्येन दधिक्षीरयुतेन च ।
स्नानं शतगुणं ज्ञेयमितरेभ्यो नराधिप ॥
वर्षकोटिसहस्रैस्तु यत्पापं समुपार्जितम् ।
पितामहघृताभ्यङ्गाद्दहेत्सर्वं न संशयः ॥
कल्पकोटिसहस्रैस्तु यत्पापं समुपार्जितम् ।
पितामहघृतस्नानं दहेदग्निरिवेन्धनम् ॥
शुक्लप्रतिपदि स्नानं सकृत् कृत्वा तु कञ्जे ।

कुलैकविंशमुत्तार्य्य ब्रह्मलोके महीयते ॥
कञ्जजो ब्रह्मा । अत्र स्नाने घृतमेव द्रव्यम् ।
अयुतं यो गवां दद्याद्भक्त्या वै वेदपारगे ।
वस्त्रहेमादियुक्तानां क्षीरस्नानेन तत्फलम् ॥
तत्फलं अयुतगोदानफलम्। वस्त्रहेमादियुक्तानां गवामित्यन्वयः।
सकृदाज्येन पयसा विरिञ्चिं स्नापयेत्तु यः ।
गाङ्गेयेन स यानेन याति ब्रह्मसलोकताम् ॥
गाङ्गेयेन हेममयेन ।
स्नाप्य दध्ना सकृद्वीर कञ्जजं विष्णुलोकभाक् ।
मधुना स्नापयित्वा तु वीरलोके महीयते ॥
स्नानमिक्षुरसेनेह यो विरिञ्चेः समाचरेत् ।
याति लोकं ग्रहपतेस्तेजसा भासयन्नभः ॥
जन्मपतेः क्वचित्पाठः । तत्र जन्मपतिर्ब्रह्मा ।
फलोदकेन यो भक्त्या स्नापयेत्पद्मसम्भवम् ।
उत्सृज्य पापकलिलं स यात्यर्कसलोकताम् ॥
वस्त्रपूतेन तोयेन स्नापयेद्यो जगत्पतिम् ।
स सर्वकामतृप्तात्मा लोकमार्यममाप्नुयात् ॥
सर्वौषधीभिर्यो मर्त्यः स्नापयेत् पद्मसम्भवम् ।
कामिकेन विमानेन ब्रह्मलोके महीयते ॥
कामिकेन इच्छाविशेषेण ।
गन्धचन्दनतोयेन स्नापयेद्योऽबुजोद्भवम् ।
रुद्रलोकमवाप्नोति तेजसा हेलिसन्निभः ॥
हेलिः सूर्यः ।
पाटलोत्पलपद्मानि करवीराणि सर्वदा ।
स्नानेऽमलानि योज्यानि स्थिराणि सुरभीणि च ॥

स्थिराणि अल्पकालेनैव यानि म्लानतां न यान्ति ।
एषामेकतमैः स्नानं भक्त्या कृत्वा च वेधसि ।
विधूय पापकलिलं विभुलोकमवाप्नुयात् ॥
विभुर्ब्रह्मा ।
कस्तूर्यगुरुतोयेन स्नापयेद्योऽम्बुजोद्भवम् ।
सर्वपापविशुद्धात्मा ब्रह्मलोके महीयते ॥
गायत्रीशतजप्तेन विधूतेनाम्भसा विभुम् ।
स्नापयित्वा सकृद्भक्त्या ब्रह्मलोकमवाप्नुयात् ॥
विभुं शीताम्बुना स्नाप्य धारोष्णपयसा ततः ।
स्नाप्य पश्चाद्घृतस्नानं कृत्वा पापैः प्रमुच्यते ॥
कृत्वा कारयित्वेत्यर्थः ।
एतत्स्नानत्रयं कृत्वा पूजयित्वा तु भक्तितः ।
अश्वमेधसहस्रस्य फलं प्राप्नोति मानवः ॥
मृत्कुम्भात्ताम्रजैः कुम्भैः स्नानं शतगुणं भवेत् ।
रौप्यैर्लक्षोत्तरं ज्ञेयं हैमैः कोटिगुणं भवेत् ॥
ब्रह्मणो दर्शनं पुण्यं दर्शनात्स्पर्शनं वरम् ।
स्पर्शनादर्चनं श्रेष्ठं घृतस्नानमतः परम् ॥
वाचिकं मानसं पापं घृतस्नानेन देहिनाम् ।
क्षिणोति पद्मजो यस्मात्तस्मात्स्नानं समाचरेत् ॥
स्नापयित्वाऽर्चयेद्भक्त्या यथा तच्छृणु तत्त्वतः ।
शुचिवस्त्रधरः स्नातः कृतन्यासश्च भारत ॥
चतुर्हस्तं न्यसेत्पद्मं चतुर्भागविभाजितम् ।
मध्ये तस्य लिखेच्चक्रं दलैर्द्वादशभिर्युतम् ॥
आरकाणि ततो न्यस्य वराकाराणि चैवहि ।
अक्षरं विहितं चान्यत्पत्रभागे प्रकीर्त्तितम् ॥

नानावर्णकसंयोगाल्लिखेच्चैवानुपूर्वशः ।
कृष्णोत्कटं तु मध्यं स्यात्पीतरक्तं तथापरम् ॥
सितं शुभ्रं तु कर्त्तव्यमब्जभागेषु वार्जितम् ।
प्रभामण्डलबाह्ये तु वेष्टयेच्चक्रनायकम् ॥
एवमालिख्य यत्नेन मूलमन्त्रं ततो न्यसेत् ।
मूर्ध्नः पादतलं यावत्प्रणवं च न्यसेद्बुधः ॥
नादं च विन्यसेत्तावद्यावदब्जस्य शून्यता ।
तकारं विन्यसेन्मूर्ध्नि त्सकारं मुखमण्डले ॥
विकारं कण्ठदेशे तु तुकारं चाङ्गसन्धिषु ।
वेकारं हृदि मध्ये तु रेण्यकारं तु पार्श्वयोः ॥
रेकारं दक्षिणे, ण्यकारं वामे ।
भकारं कटिनाभिस्थं र्गोकारं जानुवोरुषु ।
जान्वोः ऊर्वोरित्यर्थः ।
देकारं जङ्घयोर्न्यस्य वकारं पादपद्मयोः ।
स्यकारमङ्गुष्ठयोर्न्यस्य धीकारं चोरसि न्यसेत् ॥
मकारं जानुदेशे तु हिकारं गुह्यमादिशेत् ।
धिकारं हृदये न्यस्य योकारौ चोष्ठयोर्न्यसेत् ॥
नकारं नासिकाग्रे तु प्रकारं नेत्रयोस्तथा ।
चोकारं च भ्रुवोर्मध्ये दकारं घ्राणमाश्रितम् ॥
याकारं विन्यसेन्मूर्ध्नि तकारं केशमाश्रितम् ।
न्यासं कृत्वाऽऽत्मनो देहे देवे कुर्यात्तथा नृप ॥

देवे कुर्यात्तथेति पूर्वोक्तप्रकारेण देवाङ्गेऽपि मन्त्राक्षरन्यासं कुर्वीतेत्यर्थः ।

सर्वोपहारसम्पत्तिं कृत्वा सम्यक् परीक्षयेत् ।
कुङ्कुमागुरुकर्पूरचन्दनेन विमिश्रितम् ॥

गन्धतोयमुपस्कृत्य गायत्र्या प्रणवेन तु ।
उपस्कृत्य अभिमन्त्र्य ।
प्रोक्षयेत्सर्वद्रव्याणि पश्चादर्चनमाचरेत् ॥
भूयश्च तं समुच्चार्य प्रणवं सर्वतोमुखम् ।
विन्यसेत्पद्ममध्ये तु पीठनिष्पत्तिहेतवे ॥

तमित्यादि, तं प्लुतं त्रिमात्रं प्रणवमुच्चार्य पद्ममध्ये सर्वतोमुखं विन्यसेदित्यर्थः ।

आसने पृथिवी ज्ञेया सर्वसत्त्वधरा मता ।
ह्रस्वोङ्कारे मता सा तु दीर्घोङ्कारे तु देवराट् ॥
प्लुतस्तु व्यापयेद्भावं मोक्षदं चामृतात्मकम् ।
यत्रस्थो न निवर्तेत योगी प्राणपरायणः ॥
आवाहनं ततः कुर्यादक्षरेण परेण च ।
परेणाक्षरेण प्रणवेनेत्यर्थः ।
आवाह्य तेजोरूपं तु न्यसेन्मन्त्रवरं ततः ॥
ततो विभावयेद्देवं पद्मस्थं चतुराननम् ।
स्रष्टारं सर्वजगतां विष्णोर्नाभिसमुद्भवम् ॥
सम्भाव्य विधिवद्भक्त्या पश्चात्पूजनमारभेत् ।
सम्भाव्य ध्यात्वा ।
गन्धपुष्पादिसम्भारं क्रमात्सर्वं प्रकल्पयेत् ।
गायत्रीमुच्चरन् मन्त्रं सर्वकर्माणि साधयेत् ॥
पुष्पं धूपं तथा दीपं नैवेद्यं सुमनोहरम् ।
खण्डलड्डुकश्रीवेष्टकासाराशोकवर्तिकाः ॥
स्वस्तिकोल्लोपिकादुग्धतिलावेष्टतिलाढिकाः ।
फलानि चैव पक्वानि लग्नखण्डगुडानि च ॥
अन्यानि विधिना दद्यादन्नानि विविधानि च ।

एवमादीनि चान्यानि दापयेच्छक्तितो नृप ॥
मूलमन्त्रेण देवस्य ततो देहं विभावयेत् ।
पूजयेच्चापि विधिना येन तं ते ब्रवीम्यहम् ॥
प्राणायामत्रयं कृत्वा देहसंशोधनाय वै ।
आवाहयेत्ततोऽनन्तं धारयन्तं धरां सदा ॥
ध्यात्वाऽनन्तं ततो रुद्रं पद्मकिञ्जल्कमध्यगम् ।
ध्यायेद्विष्णुं ततो देवं स्वयमम्भोजसन्निभम् ॥
एवं त्रिदेवतारूढं पद्ममध्येऽब्जसम्भवम् ।
पूजयेन्मूलमन्त्रेण पद्मोदरनिभं नृप ॥
ऋग्वेदं च यजुर्वेदं सामवेदमथर्वणम् ।
ज्ञानं वैराग्यमैश्वर्यं धर्मं सम्पूजयेन्नृप ॥
ऐशान्यादिक्रमाद्राजन् विदिशश्च समन्ततः ।
दिक्पालान् दिक्षु सर्वासु भवनेष्वन्त एवहि ॥
शिक्षा कल्पो व्याकरणं निरुक्तं छन्द एव च ।
ज्योतिषं च महाबाहो उपवेदाश्च कृत्स्नशः ॥
इतिहासपुराणानि यथायोग्यं यथाक्रमम् ।
शिक्षाव्याकरणादीनि देवस्य पुरतः सदा ॥
कल्पादयस्ततश्चान्ये दिशासु विदिशासु च ।
महाव्याहृतयः सर्वाः प्रणवेन समन्विताः ॥
पूर्वादिक्रमयोगेन पूजयेद्विधिना नृप ।
शक्तयो ब्रह्मणश्चैव लोके शक्राद्यवस्थिताः ॥
ग्रहादीनां च रूपेण तत्स्वरूपास्थिताः स्वयम् ।
अनेकानन्तसङ्काशं देवदेवं समर्चयेत् ॥
नक्षत्राणि ग्रहाश्चैव राशयश्च विशेषतः ।
पूज्याः सर्वे यथान्यायं प्राकाराग्रेषु संस्थिताः ॥

नागाश्च क्रमशश्चैव पूजनीयास्तथाऽग्रतः ।
देवता ऋषयश्चैव सरितः सागरास्तथा ॥
तच्चेजोनिलयाः सर्वे पूजनीयाः प्रयत्नतः ।
आचम्य विधिवत् पूर्वं मन्त्रपूतेन वारिणा ॥
हृदयादीनि चाङ्गानि हृदयं च तथा शिरः ।
शिखा नेत्रं तथा वर्म अस्त्रं च भरतर्षभ ॥
माहेन्द्रादिदिशश्चैताः पूजयेद्विधिवन्नृप ।
हृदयं पुरतः पूज्यं शिरो देवस्य पृष्ठतः ॥
एवं सम्पूजयेद्देवं मूलमन्त्रेण कृत्स्नशः ।
विसर्जयेद्दर्शयित्वा मुद्रां तु भरतर्षभ ॥
माहेन्द्र्यादिदिशश्चैता आह्वानेऽञ्जलिमादिशेत् ।
यस्त्वेवं पूजयेद्देवं प्रतिपन्नित्यमेव च ॥
उपोष्य पञ्चदश्यां तु सयाति परमं पदम् ।
आपोहिष्ठेतितिसृभिर्हृदयं परिकीर्तितम् ॥
ऋतं सत्यं शिखा प्रोक्ता उदुत्यं नेत्रमादिशेत् ।
चित्रन्देवानामिति च अस्त्रं लोकेषु विश्रुतम् ।
वर्मणा ते छादयामि कवचं समुदाहृतम् ॥
भूर्भुवस्वश्चास्त्रवरं तथैव परिकीर्त्तितम् ॥
गायत्रीमूलमन्त्रस्तु वेधसः सर्वकर्मणाम् ।
गायत्र्या पूजयेद्देवमोङ्कारेणाभिमन्त्रितम् ॥
प्रणवेनापरान् सर्वानृग्वेदादीन प्रपूजयेत् ।
आह्वाने पूजने वीर विसर्गे ब्रह्मणस्तथा ॥
गायत्री परमो मन्त्रो वेदमाता विभावरी ।
गायत्र्याक्षरतस्तत्र पूजयेद्यस्तु वेधसम् ॥
स गच्छेत् ब्रह्मणः स्थानं यदन्येन दुरासदम् ।

पौर्णमास्युमवासं तु कृत्वा भक्त्या नराधिप ॥
अनेन विधिना यस्तु विरञ्चिं पूजयेन्नरः।
प्रतिपद्यां महाबाहो स गच्छेद्ब्रह्मणः पदम् ॥
अग्निर्विशेषतो देवो विरिञ्चिर्वास्तु दैवतम्।
तथा,
त्रिसन्ध्यं योऽर्चयेद्ब्रह्म कृत्वाऽष्टदलपङ्कजम्।
पौर्णमास्यां प्रतिपदि तस्य पुण्यफलं शृणु ॥
अनेनैव स देहेन ब्रह्मा सन् तिष्ठते क्षितौ।
पापहा सर्वमर्त्त्यानां दर्शनात्स्पर्शनादपि ॥
उद्धृत्य दिवि संस्थाप्य कुलानामेकविंशतिम्।
सहायैः सहितो नित्यं मोदते गोगतो नृपः ॥
गोगतः पृथ्वीगतः।
अप्येकवारं यो भक्त्या पूजयेत्पद्मसम्भवम्।
पद्मस्थं मूर्त्तिसंस्थं वा ब्रह्मलोकं स गच्छति ॥
पुण्यक्षयात् क्षितिं प्राप्य भवेत् क्षितिपतिर्महान् ॥
वेदवेदाङ्गतत्त्वज्ञो ब्राह्मणो वापि जायते।

इति ब्रह्मपूजा।

अथ रथयात्रा।

भविष्यपुराणे,
कार्त्तिके मासि राजेन्द्र पौर्णमास्यां चतुर्मुखम्।
मार्गेण चर्मणा सार्द्धं सावित्र्या च परन्तप ॥
मार्गेण चर्मणा कृष्णसारत्वचा।
भ्रामयेन्नगरं सर्वं नानावाद्यैः समन्वितम्।
नानाधान्यैरिति क्वचित्पाठः।
स्थापयेत् भ्रामयित्वा तु सकलं नगरं नृप ॥

सामस्त्येन सामान्यतः प्रतिपाद्य विशेषतस्तमेवप्रयोगमाह-
ब्राह्मणं भोजयित्वाग्रे शाण्डिलेयं प्रपूज्य च।
आरोपयेद्रथे देवं पुण्यवादित्रनिस्वनैः॥
रथाग्रे शाण्डिलीपुत्रं पूजयित्वा विधानतः।
ब्राह्मणान् वाचयित्वा तु कृत्वा पुण्याहमङ्गलम्॥
देवमारोपयित्वा तु रथे कुर्यात्प्रजागरम्।
नानाविधैः प्रेक्षणकैर्ब्रह्मघोषैश्च पुष्कलैः॥
कृत्वा प्रजागरं ह्येवं प्रभाते ब्राह्मणान्नृप।
भोजयित्वा यथाशक्त्या भक्ष्यभोज्यैरनेकशः॥
पूजयित्वा जनं वीर यत्नेन विधिवन्नृप।
आज्येन च महाबाहो पयसा पायसेन च॥
ब्राह्मणान् वाचयित्वा तु अनेन विधिना न्नृप।
कृत्वा पुण्याहशब्दं च रथं तु भ्रामयेन्नृप॥
चतुर्वेदविदैर्विप्रैर्भ्रामयेद्ब्रह्मणो रथम्।
बह्वृचाथर्वणैर्वीर छन्दोगाध्वर्युभिस्तथा॥
भ्रामयेद्देवदेवस्य सुरज्येष्ठस्य तं रथम्।
प्रदक्षिणं पुरं सर्वं मार्गेण सुगमेन च॥
नारोह्योऽयं रथो वीर शूद्रेण शुभमिच्छता।
शूद्रस्य पृथगारोहनिषेधोऽधिकानिष्टप्रदर्शनार्थः।
नारोहयेत्तथा प्राज्ञो मुक्त्वैकं भोजकं नृप।
ब्रह्मणो दक्षिणे पार्श्वे सावित्रीं स्थापयेन्नृप॥
भोजको वामपार्श्वे तु पुरतः कञ्जकं न्यसेत्।
कञ्जकं सरोजम्।
कुर्यादेवं विधानं तु शङ्खशब्दैः सुपुष्कलैः।
भ्रामयित्वा रथं वीर पुरं सर्वं प्रदक्षिणम्॥

स्वस्थाने स्थापयेत्तत्र कृत्वा नीराजनं बुधः।
य एवं कुरुते यात्रां यश्च भक्त्या प्रपश्यति ॥
रथं वा कर्षयेद्यस्तु स गच्छेद्ब्रह्मणः पदम्।

इति ब्रह्मपूजा ॥

प्रत्याशं परिवर्द्धतेऽर्थिजनतादैन्यान्धकारापहे
श्रीमद्वीरमृगेन्द्रदानजलधिर्यद्वक्त्रचन्द्रोदये।
राजादेशितमित्रमिश्रविदुषस्तस्योक्तिभिर्निर्मिते
ग्रन्थेऽस्मिन् परिपूर्णतां समगमत्पूजाप्रकाशः परः ॥

इति श्रीमत्सकलसामन्तचक्रचूडामणिमरीचिमञ्जरी-
नीराजितचरणकमल—
श्रीमन्महाराजाधिराजप्रतापरुद्रतनूज—
श्रीमन्महाराजमधुकरसाहसूनु—
श्रीमन्महाराजाधिराजचतुरुदधिवलयवसुन्धराहृदय-
पुण्डरीकविकासदिनकर—
श्रीवीरसिंहोद्योजित—
श्रीहंसपण्डितात्मज श्रीपरशुराममिश्रसूनु—
सकलविद्यापारावारपारीणधुरीणजग—
द्दारिद्र्यमहागजपारीन्द्रविद्वज्जनजीवातु—
श्रीमन्मित्रमिश्रकृते श्रीवीरमित्रोदयाभिधनिबन्धे

पूजाप्रकाशः समाप्तः।

